सम्यङ्निरीक्ष्य महाभारतस्य यावच्छक्य प्राचीन स्वरूप निर्णेतव्यम् इत्येव भाण्डारकर-प्राच्यविद्यासंशोधनमन्दिरस्य प्रयत्नस्योद्देश । अस्यामवस्थाया प्रस्तुतपुस्तकप्रकाशकै सामान्यवाचकहितार्थं कृत **महाभारतसार**प्रकाशनोद्योग न आक्षेपार्हो भवेत् ।

महाभारतात्कवीना स्फूर्तिलाभो भवतीति पूर्वोदाहृतात् ‘ **इतिहासोत्तमादस्माज्जायन्ते कविबुद्धय** ’ इत्यादि श्लोकात् ज्ञायते । भारतीयवाङ्मयस्य विहङ्गमावलोकने कृते नात्र अतिशयोक्तिलेशोऽपि गम्यते । खिस्तपूर्वद्वितीयतृतीयशताब्द्या प्रभृति अद्यपर्यन्त सस्कृतप्राकृतदेशभाषासु नानाकविभि , नाटककारै , गद्यलेखकैश्च महाभारतीयकथानकाश्रयणेन स्वीयग्रन्था विरचिता सन्ति । तेषा सर्वेषा निर्देश नात्र कर्तु शक्य । किन्तु केषाञ्चित् प्रमुखग्रन्थकाराणा तद्ग्रन्थाना च नामोल्लेख क्रियते ।

व्याकरणमहाभाष्ये ( खिस्तपूर्वद्वितीयशताब्द्या ) कसवध बलिबन्धनाटकयो रगभूमिप्रयोगोल्लेखो विद्यते । ज्ञातसस्कृतनाटकेषु इद नाटकद्वयम् अतिप्राचीन विद्यते । तत्कथानकं हरिवशात्, महाभारताच्च गृहीतम् । तदनन्तर खिस्तोत्तरद्वितीयतृतीयशताब्दीसभूतेन भासकविना तु समग्र महाभारत नाट्यरूपेण अवतारितमिव दृश्यते । तस्य सप्रति उपलब्धानि मध्यमव्यायोग-पञ्चरात्र-दूतघटोत्कच-कर्णभारोरुभङ्ग–नामकानि पञ्च नाटकानि महाभारतकथानकाधारेणव विरचितानि सन्ति । अपि च तस्यैव ‘ बालचरित ’नाटक हरिवशाधारेण रचितमस्ति । तस्मिन् श्रीकृष्णजन्मप्रभृति कंसवधपर्यन्त कथाभाग विद्यते । तस्मादुत्तर सुप्रसिद्धनाटककार कालिदास । तेन ‘ विक्रमोर्वशीयम् ’ हरिवशाधारेण, ‘ शाकुन्तलं ’ च महाभारताधारेण रचितम् । अत पर खिस्तोत्तरमष्टमशताब्द्या भट्टनारायणरचितस्य ‘ वेणीसहार ’नाटकस्य तु सपूर्णं भारतीययुद्धमेव विषयोऽस्ति । अपि च अभिनवगुप्तकृतौ ‘ ध्वन्यालोकलोचने ’ महाभारतहरिवंशाधारेण लिखिताना प्रतिमानिरुद्ध-पाण्डवानन्द-प्रभृति कतिपयनाटकानामुल्लेखो विद्यते । राजशेखरेण स्वीय‘ बालभारत ’नाटके द्रौपदीस्वयवरप्रभृति संपूर्णमहाभारतकथा नाट्यरूपेण उपक्रान्ता आसीत् । पर तन्नाटकमपूर्णमेव दृश्यते । तदनन्तर क्षेमेन्द्रेण रचित ‘ चित्रभारतम् ’, हेमचन्द्रस्य ‘ निर्भयभीमम् ’,

कुलशेखरस्य ‘ सुभद्राधनञ्जयम् ’, रविवर्मणः ‘ प्रद्युम्नाभ्युदयम् ’, प्रह्लाददेवस्य ‘ पार्थपराक्रमम् ’, विजयपालस्य ‘ द्रौपदीस्वयवरम् ’, विश्वनाथस्य ‘ सौग न्धकाहरणम् ’, रामचन्द्रस्य ‘ यादवाभ्युदयम् ’, रामवर्मण ‘ रुक्मिणीपरिणय ’, शेषचिन्तामणे ‘ रुक्मिणीहरणम् ’, शेषकृष्णस्य ‘ क सवध ’ इत्येवमादीनि अनेकनाटकानि पाण्डवचरिताधारेण कृष्णचरिताधारेण च रचितानि सन्ति।

काव्यक्षेत्रेपि महाभारतस्य ईदृश एव प्रभावो दृश्यते। वाकाटकनृपतिसर्वसेनरचितस्य ‘ हरिविजय ’नामकप्राकृतनाटकस्य श्रीकृष्णकृत पारिजातहरण विषय आसीत्। तदुत्तर भारवे ‘ किरातार्जुनीय ’स्य माघकृत ‘ शिशुपालवध ’स्य च सस्कृतपञ्चमहाकाव्येषु गणना अस्ति। खिस्तोत्तर द्वादशशताब्द्या श्रीहर्षरचिते द्वाविंशतिसर्गात्मके श्लेषादिविविधालङ्कारालङ्कृते ‘ नैषधचरिते ’ महाकाव्ये महाभारतीय नलदमयन्तीकथानक वर्णितमस्ति। एतत्काव्य सस्कृतकाव्यवाङ्मये अप्रतिम गण्यते। अपि च वामनभट्टस्य ‘ नलाभ्युदय ’, अमरचन्द्रसूरे ‘ बालभारतम् ’, वास्तुपालस्य ‘ नारायणानन्द ’, लोलिम्बराजस्य ‘ हरिविलास ’, वेङ्कटनाथस्य ‘ यादवाभ्युदय ’, राजचूडामणिदीक्षितस्य ‘ रुक्मिणीकल्याणम् ’, वासुदेवस्य ‘ नलोदय ’, जयदेवस्य ‘ गीतगोविन्दम् ’ इत्येवमादीनि काव्यानि महाभारतीयहरिवंशीयकथाधारेण विरचितानि सन्ति।

खिस्तोत्तर सप्तमशताब्दीमारभ्य बहुलार्थकाव्यरचना प्रारब्धा। तस्मिन्काव्ये श्लेषसाहाय्येन महाभारतकथा रामायणकथा च एकस्मिन्नेव श्लोके वर्णिता भवति। एतादृश प्रथमप्रयत्न दण्डिन आसीत्। भोजकृते ‘ शृङ्गारप्रकाशे ’ दण्डिकृतस्य ‘ द्विसन्धान ’काव्यस्य उल्लेख अस्ति। अनन्तर कविराजस्य ‘ राघवपाण्डवीयम् ’, हरदत्तसूरे ‘ राघवनैषधीयम् ’ एवमादीनि काव्यानि रचितानि। केषुचित्काव्येषु चतु पञ्चविषया युगपदेव वर्णिता सन्ति। एतादृश चरितचतुष्टयवर्णनात्मक ‘ नलयादवपाण्डवराघवीयम् ’ नाम काव्य मद्रासप्रदेशे कतिचिद्वर्षेभ्य प्राक् समुपलब्धम्।

**‘ गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ’**। बहूनि चम्पूकाव्यान्यपि महाभारतीयकथाधारेण विरचितानि सन्ति। तेषु प्राचीनतम ‘ नलचम्पू ’

नाम काव्य वैदर्भीयत्रिविक्रमभट्टकविना खिस्तोत्तरदशमशताब्द्या लिखितम्। तस्मिन् श्लेषप्रचुररीत्या नलकथा वर्णितास्ति। अनन्तरम् अनन्तभट्टस्य 'भारतचम्पू', शेषकृष्णस्य 'पारिजातहरणचम्पू' इत्यादीनि बहूनि चम्पूकाव्यानि रचितानि सन्ति, येषा विषया महाभारतीया हरिवंशीया वा विद्यन्ते। एतेन सक्षिप्तविवरणेन सस्कृतवाङ्मयस्य महाभारतोपजीव्यत्व स्पष्टीभविष्यति।

**महाभारतसार**ग्रन्थस्य तृतीयोय खण्ड अन्तिमोस्ति। अस्मिन् शान्तिपर्व, अनुशासनपर्व, आश्वमेधिकपर्व, आश्रमवासिकपर्व, मौसलपर्व, महाप्रस्थानिकपर्व, स्वर्गारोहणपर्व चेति अन्तिमसप्तपर्वाणि विद्यन्ते। तेषु भारतीययुद्धोत्तरकालिक पाण्डवचरित वर्णितमस्ति।

भारतीययुद्धे जातेन स्वजनक्षयेण, विशेषत स्वज्येष्ठभ्रातु कर्णस्य वधेन च युधिष्ठिर शोकाकुलो भवति। अर्जुनादिभिस्तद्बन्धुभि, द्रौपद्या, व्यासमहर्षिणा, स्वय भगवता श्रीकृष्णेन च बहुविध सान्त्वितोऽपि स मन शान्ति न लभते। तदा श्रीकृष्णवचनात्ते सर्वे शरतल्पे शयानस्य भीष्मस्य निकटे गच्छन्ति। तत्र युधिष्ठिर नानाविधान्प्रश्नान् भीष्मपितामह पृच्छति। भीष्मश्च तदुत्तराणि ददाति। इय कथा शान्तिपर्वणि विद्यते। अनन्तरम् अनुशासनपर्वणि अपि एवमेव भीष्मयुधिष्ठिरसवादरूपेण नानाविधप्रश्नाना विवरण वर्तते। अन्ते च माघशुक्लपक्षे उत्तरायणारम्भानन्तरम् इच्छामरणस्य भीष्मस्य निर्याण वर्णितमस्ति। तदनन्तरम् आश्वमेधिकपर्वणि युधिष्ठिरो व्यासाज्ञया अश्वमेधमारभते। यज्ञियाश्वरक्षणार्थं गतस्य अर्जुनस्य नानादेशेषु नृपै सह युद्ध भवति। मणिपुरे तु स्वपुत्रेण बभ्रुवाहनेन युद्धं कुर्वन्नर्जुन मृत्युसाद्भवति। पर नागकन्या अर्जुनभार्या उलूपी दिव्यमणिप्रभावेण त पुनरुज्जीवयति। अन्ते च यज्ञीयाश्वप्रत्यागमनानन्तरम् अश्वमेधसमाप्तिपर्यन्त कथाभाग अस्ति। आश्रमवासिकपर्वणि धृतराष्ट्रगान्धारीकुन्तीना वनगमनम्, विदुरनिर्याणम्, युधिष्ठिरादीना धृतराष्ट्राश्रमे गमनम्, तत्र व्यासमहर्षिकृपया युद्धहतानां स्वजनाना पुनर्दर्शनम्। पाण्डवाना हस्तिनापुरागमनानन्तर धृतराष्ट्रस्य, गान्धार्या, कुन्त्याश्च दावानलेन दाह, सञ्जयस्य हिमालयगमन च वर्णितमस्ति। मौसलपर्वणि द्वारावत्या यादवाना परस्पर-

युद्धे नाश , श्रीकृष्णबलरामनिर्याण, वसुदेवनिधन, यादवकलत्रै सह हस्तिनापुर प्रत्यागच्छत अर्जुनस्य पराजयश्च एवमादि वर्णितमस्ति। महाप्रस्थानिकपर्वणि पाण्डवाना महाप्रस्थानम्, मार्गे द्रौपदी-सहदेव-नकुलार्जुन-भीमाना पतनम्, युधिष्ठिरस्य शुना सह स्वर्गद्वारे गमनम्, इन्द्रकृत तत्स्वागत च वर्णितमस्ति। अन्तिमे स्वर्गारोहणपर्वणि कौरवान् स्वर्गैश्वर्ययुतान्, पाण्डवाश्च नरके दुःखभाजो दृष्ट्वा युधिष्ठिर स्वर्गं त्यक्त्वा नरकवासं स्वीकरोति, तदा साक्षात् धर्म आविर्भवति 'इद सर्वं मायामयम् तव बान्धवा स्वर्गे एव सन्ति' इति त कथयति च। तत् श्रुत्वा युधिष्ठिरो देवनद्या देहत्याग कृत्वा स्वर्गं गच्छति कौरवपाण्डवै सगच्छते च इति वर्णितम्।

प्रस्तुतखण्डे पर्वसप्तकस्य श्लोकसख्या ५०१७ मिता विद्यते। पूर्वं श्रीमद्भि चिन्तामणिवैद्यमहाशयै प्रकाशितस्य 'सक्षिप्तभारतस्य' श्लोकसख्यापेक्षया इयं सङ्ख्या सार्धत्रिगुणाधिका वर्तते। इदम् अधोलिखितया तुलनया स्पष्टीभविष्यति।

| सक्षिप्तभारतम् | | महाभारतसारः | |
|---|---|---|---|
| पर्वनाम | श्लोकसख्या | पर्वनाम | श्लोकसख्या |
| शान्तिपर्व | ५९५ | शान्तिपर्व | २६७२ |
| अनुशासनपर्व | २५५ | अनुशासनपर्व | ९०७ |
| आश्वमेधिकपर्व | २०० | आश्वमेधिकपर्व | ६७५ |
| आश्रमवासिकपर्व | १७० | आश्रमवासिकपर्व | ४५२ |
| मौसलपर्व | १२३ | मौसलपर्व | १५१ |
| महाप्रस्थानिकपर्व | ३८ | महाप्रस्थानिकपर्व | ७४ |
| स्वर्गारोहणपर्व | ५२ | स्वर्गारोहणपर्व | ८६ |
| | १४३३ | | ५०१७ |

पूर्वोक्तसप्तपर्वसु शान्तिपर्व, अनुशासनपर्व चेति पर्वद्वय स्ववैशिष्ट्येन विराजतेतराम्। तस्मिन् भीष्मयुधिष्ठिरसवादरूपेण धर्मशास्त्रम्, नीतिशास्त्रम्, अर्थशास्त्रम्, तत्त्वज्ञानम्, व्यवहारश्चेति विविधविषयेषु विवाद्यप्रश्नाना विवरणस्य सत्त्वात् अय महाभारतीयविभाग प्राचीनभारतीयसस्कृतेर्ज्ञानकोश

एव सञ्जातोस्ति। व्यासमहर्षिणा एतेषा प्रश्नानामुहापोह यस्य भीष्मस्य मुखेन कारित तमुद्दिश्य स्वय भगवान् श्रीकृष्ण युधिष्ठिरमुवाच—

स हि भूत भविष्यच्च भवच्च भरतर्षभ।
वेत्ति धर्मविदा श्रेष्ठ तमस्मि मनसा गत ॥ इति।

( शान्ति० श्लो ६१० )

भीष्मस्य त्रिकालज्ञत्वात्तत्कृते विवरणे अनेकप्राचीनकथानामुल्लेखो दृश्यते। एतासा कथानामारम्भ 'अत्राप्युदाहरन्तीममितिहासं पुरातनम्' इति शब्दघटित एव बहुधा वर्तते तासा सवादात्मकत्वाच्च 'इतिहाससवाद' इत्येव तन्नाम केचिदुदाहरन्ति। एतत्पर्वीयप्रश्नाना गुरुतरत्वात्तद्विषये महाभारतकारेण यद्वर्णित तत्सङ्क्षेपतोत्र निर्दिशामि।

महाभारते वर्णाश्रमधर्मपुरस्कारोऽस्तीति कथनस्य न आवश्यकता विद्यते। ब्राह्मणक्षत्रियवैश्यशूद्राणा स्वस्वजातिविहितकर्मवर्णन बहुषु स्थलेषु वर्तते। ( शान्तिपर्व, श्लो ८८५ त ९०० ) सर्वकर्मकरणाशक्तौ ब्राह्मणेन वेदाध्ययन क्षत्रियेण प्रजापालन, वैश्येन पशुपालन, शूद्रेण च सर्ववर्णसेवा अवश्य करणीया। ( शान्तिपर्व, श्लो ८८९, ८९४ इत्यादि ) ब्रह्मचर्य-गार्हस्थ्य-वान-प्रस्थसन्यासाश्रमधर्मवर्णन सविस्तर विद्यते। सौतिकृतमहाभारतसस्करणसमये जैनबौद्धधर्मयो प्रचलितत्वात् श्मश्रुरहिता अपि किशोरा मातृपितृस्वसृभ्रात्रादित्याग कृत्वा सन्यासग्रहणे प्रवृत्ता आसन्। इय प्रवृत्ति समाजधारणविनाशिका इति हेतो महाभारते निषिद्धाऽस्ति। शक्रतापससवादे उक्तम् ( शान्तिपर्व, श्लो. १२५ १२९ )

केचिद्गृहान्परित्यज्य वनमभ्यागमन् द्विजा।
अजातश्मश्रवो मन्दा कुले जाता प्रवव्रजु ॥
धर्मोऽयमिति मन्वाना समृद्धा ब्रह्मचारिण।
त्यक्त्वा भ्रातॄन् पितॄंश्चैव तानिन्द्रोन्वकृपायत ॥
तानाबभाषे भगवान् पक्षी भूत्वा हिरण्मय।
सुदुष्कर मनुष्यैश्च यत्कृत विघसाशिभि ॥
पुण्य भवति कर्मेद प्रशस्त चैव जीवितम्।
सिद्धार्थास्ते गति मुख्या प्राप्ता धर्मपरायणा ॥ इति।

अत्र 'विघसाशि' गृहस्थप्रशसा विद्यते। ये गृहस्था प्रात साय देव-पित्रतिथिस्वज्ञातिजनेभ्य सिद्धमन्न दत्वा अवशिष्टमुपभुञ्जते ते 'विघसाशि' शब्देन व्यवह्रियन्ते। ते एव मोक्षभाजो भवन्ति। केवलेन सन्यासेन मोक्षलाभश्चेत् तर्हि '**पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयु.**' इत्यपि कथितम्। न्यायेन धन सपादनीय, न्यायेन वर्धनीय, प्रयत्नेन रक्षणीय, धर्मार्थं च तद्व्यय करणीय। वेदाध्ययनेन ऋषीणा, यज्ञानुष्ठानेन देवाना, श्राद्धकर्मणा पितृणाम्, अतिथिसत्कारेण मनुष्याणा च ऋणमपाकरणीयम्। भृत्यै सह दाक्षिण्येन वर्तितव्य,सज्जनसङ्गति कार्या, परिश्रम कृत्वा न्याय-लब्धकाकिणीदानमपि अन्यायलब्धसहस्रसुवर्णदानादपि गरीयो भवति। श्रद्धया स्वयप्रेरणया च यत् दीयते तदेव दान श्रेष्ठतर भवति, इत्यादि महाभारते वर्णितमस्ति। सर्ववर्णसाधारणधर्म कथनप्रसङ्गे पराशरऋषि-र्जनकमुवाच—

आनृशंस्यमहिंसा चाप्रमाद संविभागिता।
श्राद्धकर्मातिथेय च सत्यमक्रोध एव च॥
स्वेषु दारेषु सन्तोष शौच नित्यानसूयता।
आत्मज्ञान तितिक्षा च धर्मा साधारणा नृप॥

(शान्ति० श्लो २४०२-३)

महाभारतकारै यद्यपि चातुर्वर्ण्यस्य पृथक्कर्माणि कथितानि तथापि स्वस्व-कर्माचरणेन जीवनासभवे कयाचित् मर्यादया अन्यकर्माचरणेऽपि न पतितत्वं भवतीति तैर्लिखितमस्ति।

क्षत्रधर्मा वैश्यधर्मा नावृत्ति पतते द्विज।
शूद्रधर्मा यदा तु स्यात्तदा पतति वै द्विज॥

(शान्ति० श्लो २३६२)

अत्र ब्राह्मणाना विहितवृत्त्यभावे क्षत्रियवैश्यकर्म अनुज्ञायते। शूद्रकर्म दास्यं तु तैर्न स्वीकर्तव्यमिति कथितमस्ति।

महाभारतस्य तृतीयसस्करणसमये शकयवनपह्लवादिपरकीयानां भारता-क्रमणानि सञ्जातानि आसन्। तैश्च कश्चित्काल राज्यमपि अत्र कृतम्। एतेभ्य

परदेशीयेभ्य स्वीयसमाजे स्थान दातव्य न वा ? दातव्य चेत्तेषा को धर्म कानि च कर्तव्यानि इत्यय प्रश्नस्तात्कालिकसमाजशास्त्रज्ञाना पुरत उपस्थित आसीत्। अस्य विषयस्य विवरण शान्तिपर्वणि ६५ तमेऽध्याये विस्तरेण कृतमस्ति। पर सपादकमण्डलेन सारग्रहणसमये अस्य विवरणस्य प्रास्ताविको भाग न गृहीत (अध्याय ६५, श्लो १३-१६)। अत अस्य प्रश्नस्य स्वरूप स्पष्टतया अवबोद्धुं वाचकमहोदया कदाचिन्न शक्नुयु। महाभारते एतेषा परकीयाणा निदेश 'दस्यु'शब्देन कृतोऽस्ति। एतेषा धर्म शान्तिपर्वणि ९२३-९२५ श्लोकेषु निरूपित अस्ति। 'तैर्दस्युभि मातापित्रोर्गुर्वाचार्ययो तपस्विना च सेवा कर्तव्या। अहिंसासत्यास्तेयादि धर्मा पालयितव्या। अष्टकादिपाकयज्ञा कर्तव्याश्चेति'। एतेन तात्कालिकहिंदुसमाजेन एते परकीया न दूरीकृता किन्तु स्वसमाजे समावेशिता आसन्निति ज्ञायते। भारतस्य प्राचीनेतिहासे एतादृशानि निदर्शनानि बहुलानि दृश्यन्ते। शकयवनकुशाण-हूणगुर्जरसज्ञका परकीयजना हिन्दुधर्माश्रयेण शिवस्कन्दवासुदेवादिदेवताना भक्ता आसन्निति प्राचीनशिलालेखनाणकेभ्य सुस्पष्ट भवति।

द्विसप्तत्यध्यायात्मकस्य महत शान्तिपर्वभागस्य राजधर्मानुशासनपर्व इति सज्ञा वर्तते। तस्मिन् राजनीतिविषयाणामूहापोह कृतोऽस्ति। प्राचीन-समये राजनीतिप्रतिपादकाग्रन्था अर्थशास्त्रनाम्ना अभिधीयन्ते स्म। कौटिली-यमर्थशास्त्रमस्य निदर्शनं विद्यते। महाभारते एतत्प्रश्नाना चर्चितत्वात् प्रास्ताविकश्लोके तस्य अर्थशास्त्रशब्देन निर्देश अस्ति। एतत्प्रश्नाना संक्षिप्त-विवरणमत्र न अप्रस्तुत स्यात्।

कृतयुगे राज्ञ अस्तित्व नासीदेव। प्रजा स्वयमेव परस्परक्षण कुर्वन्ति स्म। पर पश्चात् परस्परक्षणायास असह्य अभवत्। अपि च जना मोह-लोभ-राग-कामादिग्रस्ता भूत्वा अधार्मिका अजायन्त। समाजे मात्स्यन्याय· प्रवृत्त। यथा महान्मत्स्य अल्प मत्स्य निगिरति तथा बलवान् दुर्बलान् घातयितु प्रवृत्त। (श्लोका ८२५-८३२, ९४९)। तदा जनप्रार्थनया ब्रह्मदेव मनु 'राजा भव' इति आदिशत्। मनुना तन्न स्वीकृतम्। स उवाच।

बिभेमि कर्मण पापाद्राज्य हि भृशदुस्तरम्।
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥ इति।

( शान्ति० श्लो ९५२ )

तदा जनै कथितम् 'त्व मा भै, कर्तृनेनो गमिष्यति' इति। अपि च तै तस्म पशूना सुवर्णादिसम्पत्तेश्च पञ्चाशत्तमो भाग धान्यस्य दशमभागश्च करदान स्वीकृतम्। यदि त्व सम्यक् रक्षसि तर्हि अस्मद्धर्माचरणाद्यत्पुण्यं भवेत्तच्चतुर्थांश त्वा प्रति गच्छेत् इत्यपि ते मनुमवदन्। तदा मनु राजपद स्वीचकार। अनया कथया राजसत्ता प्रथम समयरूपेण प्रवृत्ता इति द्योत्यते। इय कथा सामाजिकसमयस्य ( Social Contract ) मूलभूतास्ति। राज्याभिषेकसमये अधोलिखिता प्रतिज्ञा राज्ञा कर्तव्या इति नियम आसीत्।

प्रतिज्ञा चाधिरोहस्व कर्मणा मनसा गिरा।
पालयिष्याम्यह भौम ब्रह्म इत्येव चासकृत् ॥
यश्चात्र धर्मो नित्योक्तो दण्डनीतिव्यपाश्रय।
तमशङ्क करिष्यामि स्ववशो न कदाचन ॥ इति।

( शान्ति० श्लो ८७० ७१ )

प्रजापालन राज्ञा प्रथम कर्तव्यमिति तन्मनसि दृढीकर्तुं धर्मशास्त्रकारैरेव नियम कृत यत् चौर्यान्वेषण कृत्वा अपहृत धन धनस्वामिने प्रत्याहर्तुम् अशक्तेन राज्ञा स्वकोशात्तद्दातव्यमिति।

प्रत्याहर्तुमशक्य स्याद्धन चौरैर्हृत यदि।
तत्स्वकोशात्प्रदेय स्यादशक्तेनोपजीवत ॥

( शान्ति० श्लो ११०८ )

अपि च राज्येन न केवल सरक्षकेण ( पोलिस स्टेट् ) किन्तु कल्याणकारिणापि ( वेलफेअर स्टेट् ) भवितव्यम् इत्यपि भीष्म कथयामास।

कृपणानाथवृद्धाना विधवाना च योषिताम्।
योगक्षेम च वृत्ति च नित्यमेव प्रकल्पयेत् ॥
आश्रमेषु यथाकाल चैलभाजनभोजनम्।
सदैवोपहरेद्राजा सत्कृत्याभ्यर्च्य मान्य च ॥ इति।

( शान्ति० श्लो १२७६-७७ )

इग्लडप्रभृतिपाश्चात्यदेशेषु वार्धक्यवृत्तियोजना ( ओल्ड् एज् पेन्शन् ) साम्प्रतमेव प्रवृत्ता। पर सहस्रश सवत्सरेभ्य प्रागेव अस्मद्राजनीतिज्ञै सा कृता आसीत्। गुरुकुलेषु तपस्विनामाश्रमेषु च विविधविद्याध्ययनाध्यापन तत्त्वज्ञानादिविषयचर्चा च भवति स्म। अत वस्त्रपात्रभोजनादिदानेन तेषामावश्यकतापूरण राज्ञ एव कर्तव्यमासीत्। एषामाश्रमाणा पराक्रमणभय नासीत्। अत सकटकाले नृपादयस्तत्र आश्रय लभन्ते स्म।

( शान्ति० श्लोक १२७९ )

रक्षणपोषणशिक्षणै प्रजारञ्जन य करोति स एव राजा इति राजशब्द-व्युत्पत्ति. ( **रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते**। श्लोक ८७८ ) शान्तिपर्वणि उक्ता सैव तदुत्तरकालिकै कालिदासादिकविभि स्वीकृतास्ति। राज्ञा अष्टभिर्मन्त्रिभि सह मन्त्रयितव्यम्। अपि च तेन स्वीया अमात्या अधिकारिणो वा सर्ववर्णीया कार्या इत्यपि नियम भीष्मेण कथितोऽस्ति।

चतुरो ब्राह्मणान् वैद्यान् प्रगल्भान् स्नातकान् शुचीन्।
क्षत्रियाश्च तथा चाष्टौ बलिन शस्त्रपाणिन ॥
वैश्यान्वित्तेन सम्पन्नानेकविशतिसङ्ख्यया।
त्रींश्च शूद्रान्विनीताश्च शुचीन् कर्मणि पूर्वके ॥ इति।

( शान्ति० श्लो १२४८-४९ )

कुलीनत्वं समीक्ष्य अमात्या सचिवाश्च राज्ञा कर्तव्या। यत कुलीनो नर उत्कोचादिग्रहणे सहसा न प्रवर्तते। अकुलीनस्तु ऐश्वर्यलाभे सति स्वमत-प्रतिकूलभाषिण अपि शत्रुर्भवति इति यत् भीष्मेण कथित तत् लोकव्यवहारे असकृत् प्रत्ययमावहति।

महाभारतसमये भरतखण्डे प्राय सर्वत्र राजशासनमेव आसीत्। कुत्रचित् गणशासनमपि दृश्यते स्म। अस्य गणस्य अभिवृद्ध्यर्थं सरक्षणार्थं च के के उपाया अवश्य कर्तव्यास्तेषा निरूपण भीष्मेण कृतम् ( शान्ति० श्लोका १३७७–१३८३ ) तत् आधुनिकभारतीयराज्यशासकैरवश्य चिन्तनीयम्। भीष्म कथयामास। लोभात्, क्रोधात्, भेदाच्च गणस्य भय विद्यते। गण-

घटकाना सर्वेषां सभाया मन्त्रचर्चा न कर्तव्या। गणेन प्रमुखसदस्याना मण्डल नियोक्तव्यम्। तेन मण्डलेन विचार कृत्वा गणहितकार्याणि कर्तव्यानि। यत,

जात्या च सदृशा सर्वे कुलेन सदृशास्तथा।
न चोद्योगेन बुद्ध्या वा रूपद्रव्येण वा पुन ॥ इति।

( शान्ति० श्लो १३८१ )

अपि च करविषये राज्यर्णविषये ( स्टेट् लोन ) च उपयुक्तसूचना भीष्मोपदेशे विद्यन्ते। राज्ञा लोभेन प्रजापीडक करादान न कर्तव्यम्। यत —

ऊधश्छिन्द्यात्तु यो धेन्वा क्षीरार्थी न लभेत्पय ।

( शान्ति० श्लो १०७८ )

वणिजो लोभातिशयात् मूल्यवर्धनेन प्रजा पीडयन्ति। अत धान्यादिमूल्यस्य नियन्त्रण कर्तव्यम्। श्रोत्रियेभ्यो नाम वेदाभ्यासरतेभ्यो ब्राह्मणेभ्य एव करग्रहण न कर्तव्यम्। अश्रोत्रियेभ्य अनाहिताग्निभ्यश्च ब्राह्मणेभ्य करादान कर्तव्यम्, तैश्च विष्टिकर्मापि कारयितव्यमिति भीष्मेण स्पष्टमुक्तम्।

( शान्ति० श्लो. ११३१ )

राजा दुर्वृत्त प्रजापीडकश्च भवेच्चेत् तर्हि ब्राह्मणैर्यावच्छक्योपायै शस्त्रगृहीत्वापि तस्य नियमन कर्तव्यम्।

तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च।
अमायया मायया च नियन्तव्य तदा भवेत्॥

( शान्ति० श्लो ११४२ )

अपि च दस्युभिर्नाम परकीयैराक्रमणे कृते सति यदि तन्निवारणे क्षत्रिया असमर्था भवेयुस्तर्हि ब्राह्मणाना शस्त्रधारणे न प्रत्यवाय इत्यपि कथितमस्ति।

**अत. परं मोक्षधर्मविचार. प्रस्तूयते—**

सुलभाजनकसवादे ( शान्ति० श्लो २५२० ) कर्मनिष्ठा, ज्ञाननिष्ठा, तद्भिन्ना तृतीया निष्ठा चेति निष्ठात्रय मोक्षोपायत्वेन अभिहितम्। कर्मनिष्ठा नाम प्रवृत्तिमार्ग अतिप्राचीनकालात् भारते प्रचलितोऽस्ति। जनेन वेदाध्ययन कर्तव्यम्, विदुषा भाव्यम्, धनार्जन कर्तव्यम्, यथाशक्ति यष्टव्यम्, अय शाश्वतभूतिपथ नाम अभ्युदयमार्गो विद्यते इति कथितमस्ति। ( शान्ति०

श्लो १०७ ) । पर कालान्तरेण विशेषत जैनबौद्धधर्मोपदिष्टया अहिंसया लोकाना यागप्रवृत्तिर्ह्रासमुपयाता इति दृश्यते । आश्वमेधिकपर्वणि शक्रऋषि-सवादे यज्ञीयपशुहनने प्रवृत्तमिन्द्रम् ऋषय ऊचु —

धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो ।
नाय धर्मकृतो यज्ञो न हिंसा धर्म उच्यते ॥ इति ।
( आश्व० श्लो ६२६ )

तदनन्तर ते तदर्थनिर्णयाय वसु राजानमुपाजग्मु । तेन एवं निर्णय कृत —

उञ्छ मूलं फल शाकमुदपात्र तपोधना ।
दान विभवतो दत्त्वा नरा स्वर्यान्ति धार्मिका ॥ (आश्व० श्लो ६३६)
एष धर्मो महायोगो दानं भूतदया तथा ।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृति क्षमा । (आश्व० श्लो ६३७)
सनातनस्य धर्मस्य मूलमेतत्सनातनम् ॥ इति । (आश्व० श्लो ६३८)

इम विचारमनुसृत्य आश्वमेधिकपर्वणि कस्यचिन्नकुलस्य कथा कथितास्ति। केनचिदकिञ्चनेन उञ्छवृत्तिना ब्राह्मणेन तत्कुटुम्बेन च स्वय क्षुधितेनापि सक्तुरूप सर्वमपि अन्नम् अतिथये समर्पितम्। तत्र लुठितस्य कस्यचिन्न-कुलस्य अर्धशरीर सुवर्णमय सञ्जातम्। पर सुसम्पन्ने युधिष्ठिरस्य यज्ञे लुठितस्यापि तस्य नकुलस्य अवशिष्ट शरीर पूर्ववदेव स्थित न सुवर्णमय सञ्जातम्। तस्मिन्पर्वणि कथितया अनया कथया पशुयज्ञस्य वैयर्थ्यं प्रतिपा दतमस्ति ।

प्रवृत्तिमार्गविरोधी निवृत्तिमार्ग निम्नलिखितश्लोकेषु निरूपितोऽस्ति।

निवृत्तिलक्षणस्त्वन्यो धर्मो मोक्षाय तिष्ठति ।
सर्वभूतदया धर्मो न चैकग्रामवासिता ॥
आशापाशविमोक्षश्च शस्यते मोक्षकाङ्क्षिणाम् ।
न कुड्या नोदके सङ्गो न वाससि न चासने ।
न त्रिदण्डे न शयने नाग्नौ न शरणालये ॥
अध्यात्मगतिचित्तो यस्तन्मनास्तत्परायण ।
आत्मन्येवात्मनो भाव समासज्जेत वै द्विज ।
एष मोक्षविदा धर्मो वेदोक्तः सत्पथ सताम् ॥ इति ।
( अनुशासन० श्लो ७९७–७९९ )

एष निवृत्तिलक्षणधर्म एव संन्यासमार्गो विद्यते। पर न केवलेन ससार-त्यागेन त्रिदण्डधारणेन वा मोक्ष सिद्ध्यति। सुलभाजनकसवादे जनक उवाच—

काषायधारण मौण्डय त्रिविष्टब्धं कमण्डलुम्।
लिङ्गान्युत्पथभूतानि न मोक्षायेति मे मति ॥
आकिञ्चन्ये न मोक्षोऽस्ति किञ्चन्ये नास्ति बन्धनम्।
किञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते॥ इति।

(शान्ति० श्लो २५२८, २५३१)

ज्ञानेनैव मोक्ष सिद्ध्यति। तत् ज्ञान तु गृहस्थाश्रमे अपि प्राप्यते इत्ययमर्थ यथा सुलभाजनकसवादे तथा तुलाधारजाजलिसवादेऽपि निरूपितोऽस्ति। तुलाधारो जाजलिमुवाच—

वेदाह जाजले धर्म सरहस्य सनातनम्।
सर्वभूतहित मैत्रं पुराण य जना विदु ॥ (शान्ति० श्लो २१६७)
सर्वेषा य सुहृन्नित्य सर्वेषा च हिते रत ॥ (शान्ति० श्लो २१६९)
या वृत्ति स परो धर्मस्तेन जीवामि जाजले॥ (शान्ति० श्लो २१६८)

एवंभूत सर्वभूतहितरतोऽय तुलाधार स्वस्य नित्यव्यवसाये तुलया ग्राहकाय वस्तूनि विक्रीणान जाजलिना दृष्ट। सर्वमपि तद्वर्तन स्थितप्रज्ञवर्तनमिव आसीत्। स जाजलिमुवाच—

तुला मे सर्वभूतेषु समा तिष्ठति जाजले।
नाह परेषा कृत्यानि प्रशसामि न गर्हये॥

(शान्ति० श्लो २१७१)

यो हन्याद्यश्च मा स्तौति तत्रापि शृणु जाजले।
समौ तावपि मे स्याता न हि मेऽस्ति प्रियाप्रियम्॥ इति।

(शान्ति० श्लो २१८०)

इयमेव सा तृतीया निष्ठा यामाश्रित्य जनक स्थित आसीत्। ससारे स्थितस्यापि, प्राप्तकर्माणि यथावत् कुर्वाणस्यापि असङ्गतया तल्लेपरहितत्वम्, रागद्वेषशून्यतया सर्वभूतहितरतत्व च अस्य मार्गस्य वैशिष्ट्य विद्यते। अस्यैव मार्गस्य श्रीमद्भगवद्गीताया 'निष्कामकर्मयोगः' इति नाम वर्तते।

साख्यमतप्रवर्तकस्य कपिलस्य तत्प्रशिष्यस्य पञ्चशिखस्य च प्रस्तुतखण्डे उल्लेख अस्ति। पर महाभारतोक्त साख्य तदुत्तरकालिक साख्यदर्शन च परस्परसम्बद्ध न वा इति विवाद्यप्रश्नस्य विवरण कर्तुमुपयुक्तश्लोकाना प्रस्तुतखण्डे विद्यमानत्वाभावात् स प्रयत्न कर्तुं न शक्य । तथैव श्रीमद्भगवद्गीता यद्धर्मानुसारिणी मन्यन्ते तस्य भागवतधर्मस्य मूलस्वरूपदर्शक नारायणीयोपाख्यानमपि ( शान्तिपर्व, अध्याया ३३५-३४७ ) अस्मिन्सारे न सगृहीतम्, तदपि न्यूनत्वमेव भवति। तथापि सक्षेपसमये कि ग्राह्य कि त्याज्यमिति प्रश्न सक्षेपकाणा पुरत उपस्थित स्यात्। अत तै महाभारतदुग्धात् निष्कासितस्य अस्य नवनीतस्य रसास्वाद· सर्वैः कृतज्ञया ग्राह्य·।

एतावता विवरणेन ज्ञायेत यत् शान्तिपर्व, अनुशासनपर्व च महाभारतग्रन्थस्य सारभागोऽस्तीति। पूर्वोदाहृतविषयेभ्य अन्येषामवान्तरविषयाणा निरूपणमपि प्रसङ्गत कृत तत्र उपलभ्यते। यथा—दैव श्रेष्ठ पौरुष वा श्रेष्ठम्। ( अनुशासन० श्लोका —११०-१२३ ), लक्ष्मी कुत्र वसति ( श्लो १२४-१३८ ), मनुष्येण कथ व्यवहर्तव्यम् ( श्लो १३९-१४९ ), गोप्रशसा ( श्लो. ३७२-३७७ ), तडागोद्यानादि पूर्तकर्माणि दानप्रशसा च ( श्लो ४४९-५२० ), आचरणनियमा ( श्लो ६५२-७३६ ), इत्याद्यनेकविषयाणामतीव रोचक हितकारक च विवरणम् अस्मिन् खण्डे विद्यते। तत्सर्वं मूले एव द्रष्टव्यम्। एतादृशविविधविषयनिरूपकस्य अस्य ग्रन्थस्य निम्नलिखितवर्णने न काप्यतिशयोक्तिरिति वाचका निश्चिनुयुरेव।

अर्थशास्त्रमिद प्रोक्त धर्मशास्त्रमिद महत्।
कामशास्त्रमिद प्रोक्त व्यासेनामितबुद्धिना ॥ इति।

श्रीमहाभारतसारे प्रथमखण्डे आदिपर्वणि श्लोक २१

एतादृश बहुमूल्यग्रन्थ सामान्यसस्कृतज्ञवाचकाना सुलभीकृत इति एतस्य महाभारतसारस्य संपादकानां विशेषत तत्प्रकाशकश्रीशंकररावसरनाईकमहाशयानां च हार्दिकमभिनन्दनं कृत्वा विस्तृतेयं प्रस्तावना समाप्यते।

मिराश्युपाह्वो विष्णुसूनुर्वासुदेवशर्मा।
महामहोपाध्यायः।

---

॥ श्री ॥

# ॥ श्रीमहाभारतसारस्य पुरस्कारः ॥

श्रीगुरुः शरणम् ।

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्य· पुण्डरीकाक्षात् महाभारतकृद्भवेत् ॥
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥

उपरिनिर्दिष्टश्लोकवर्णितमाहात्म्य श्रीमहाभारत भारतवर्षस्य प्रामाणिक-प्राचीनेतिहासरूपमिति सर्वैरास्तिकैरङ्गीक्रियते। अत्रत्यानां चरित्रभागानां सङ्ग्रहणेन श्रीमद्भगवद्गीतायाः मध्यमणिन्यायेन निवेशनेन च चरित्रहार इव कण्ठे धारणीयः सङ्ग्रह· श्रीमद्भिर्वृद्धतमैः श्रीशंकरराव सरनाईकमहोदयैर्महता परिश्रमेण प्रकाश्यतां नीयत इति प्रमोद-स्थानमेतत्। श्रीदासम्भट्टप्रकाशितचरणव्यूहव्याख्यानमार्गदर्शकैः अस्मत्सुहृद्भिर्माननीयतमै· पं वासुदेवशास्त्रिजोशीमहोदयैरेतत्सम्पा-दनं कृतम् इत्यतोऽपि हेतोः इदं प्रकाशनम् उपादेयतमतां गमिष्यतीति मदीयं मतम्।

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुसमुद्भवे ॥

इति सूत्रव्याख्याने काव्यप्रकाशकृता शास्त्रपदस्य 'पुराणेतिहासादि' इति व्याख्यान यत्कृत तत्र इतिहास पुराणेतिप्रसिद्धं पदमनुपन्यस्य पुराणे-तिहासेति विपरीतक्रमस्यानुसरणे किं बीजमिति प्रश्ने पुराणात्मकेतिहासस्यैवात्र ग्रहण तेन धूर्तकल्पितेतिहासव्यावृत्तिरित्युत्तर प्रामाणिके तद्व्याख्यातृभिर्दीयते इति पश्यता न अस्येतिहासग्रन्थस्य माहात्म्यं स्वत एव स्फुटी भवति। तत्रापि—

यत्र योगेश्वर कृष्णो यत्र पार्थो धनुर्धर ॥
तत्र श्री विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

इति गीताया अन्तिमे उपसहारश्लोके, तथा '**जयोऽस्मि व्यवसायोऽस्मि नीतिरस्मि जिगीषताम्**' इति मध्ये च परामर्शदर्शनात् धर्मे चार्थे च कामे चेति उपरिनिर्दिष्टो भाग श्रीमहाभारते तात्पर्येण प्रतिपादित इति स्पष्ट वक्तु शक्यते। राजधर्मानुशासनपर्वप्राधान्येन राजनीतिविषयाणामनुक्रमणिकाप्रदर्शनपूर्वक यत्प्रयुक्त तदप्यत एवोपपद्यते। किंबहुना '**क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः**' इति तत्रत्य वचन समग्रस्य धर्मस्य क्षात्रधर्माङ्गत्व विदधाति इति पूर्वोक्त सकलोऽर्थ स्पष्टमेव कण्ठोक्तो दृग्गोचरीभवति विदुषाम्।

महाभारतकाले अध्यायसहस्रद्वयात्मकम् औशनस धर्मशास्त्र प्रचलितमासीदिति महाभारतीयोल्लेखादेवावगम्यते। तत पुरातनाना ब्रह्मादिपरमाचार्यप्रणीताना ततोऽपि बृहत्कायाना वर्णन तत्र कृतमस्ति। स्वय भीष्मद्रोणोद्धवनारदप्रभृतिभिस्तत्कालीनैराचार्यै कौणपदन्तभारद्वाजवातव्याधिपिशुनाद्युपपदधारिभि प्रणीतानि नूतनान्यर्थशास्त्राण्यपि प्रामाणिकैराद्रियमाणान्यासन् इति कौटिलीयार्थशास्त्रटीकादर्शनादवगम्यते। तेषामत्रानुल्लेख नूतनत्वादेव सम्भवति। तथा अर्थशास्त्रविषयस्य महाभारते प्राधान्येन वर्णन महाभारतग्रन्थस्य '**जयो नामेतिहासोऽय**' मिति जयसंज्ञाकरणं च कि हेतुक स्यादिति सशये '**जयोऽस्मि व्यवसायोऽस्मि नीतिरस्मि जिगीषता**' मिति गीतावाक्यमेव समीचीनमुत्तर प्रतिभाति। अस्य गीतावाक्यस्य व्याख्याया मुत्कर्षहेतुर्जय, फलाव्यभिचारी उद्यमो व्यवसाय, जयोपायस्य प्रकाशक नीतिशास्त्रमिति जयव्यवसायनीतिपदाना गीतावाक्यस्थाना व्याख्या विधाय एतेषा सर्वेषा भगवद्विभूतिरूपत्वेन उपास्यत्व विधीयते सर्वैर्गीताव्याख्याकृद्भि इत्यतोऽपि ग्रन्थस्यास्य गौरव सम्यक् प्रकाश्यते।

व्यवहारान् दिदृक्षुस्तु विद्वद्भिर्ब्राह्मणै सह।

इति याज्ञवल्क्यस्मृतिव्याख्याने 'ब्राह्मणैरनियुक्तै' इति मिताक्षराकृता यद्व्याख्यान कृत तदवलम्ब्य अनियुक्ताना ब्राह्मणाना न्यायसभाया प्रवेश कथ सम्भावित इत्याक्षेपे वर्णाश्रमिणा सर्वेषामेव राजधर्मा दया-अहिंसादिरूपेणावश्यानुष्ठातव्या अत तेषामपि तत्र गमनमावश्यकमिति

सिध्यति। वीरमित्रोदयव्यवहारप्रकाशे चायमर्थ स्फुट निरूपित । तथा हि—'**न चैवं प्रजापालनविधेरप्यभिषिक्तक्षत्रियाधिकारिकत्वादन्येषां तत्र फलाभावेनाप्रवृत्तिः। दृष्टद्रव्यादिलाभार्थं कथञ्चित्प्रवृत्तावपि तस्माद्धर्माभावप्रसङ्गः, अन्यथा दर्शनादर्शनन्यायप्रवृत्त्यादिना प्रत्यवायाभावापतिश्चेति वक्तव्यम्। यतो दयाहिंसादिसाधारणधर्मान्तर्भावेन प्रजापालनस्य तेषामपि धर्मजनकत्वात्। नृपपदेन तत्सङ्ग्रहसम्भवाच्च।**' अनेन हि सन्दर्भेण 'क्षात्रो धर्म' इति महाभारतोक्तमन्येषा वर्णाश्रमधर्माणा सर्वेषा दया-अहिंसादिशिष्टपरिपालनात्मके क्षात्रधर्मे धर्मशास्त्रनिबन्धकृद्भि प्रामाणिकैरप्यङ्गीकृतमित्यवगम्यते।

तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेनेतिशतपथश्रुतिमवलम्ब्य समस्तस्य वर्णाश्रमधर्मानुष्ठानस्य वेदनोद्देशेन विविदिशोद्देशेन वा विधान संयोगपृथक्त्वन्यायेन सर्वैरङ्गीक्रियते मीमासकै । यथा वा '**तावत्कर्माणि कुर्वीत न निर्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते।**' इति श्रीमद्भागवतवचनबलाद्भगवद्भक्तौ तेनैव न्यायेन अङ्गतया विधान वर्णाश्रमधर्मस्य स्वीकृत श्रीमधुसूदनस्वाभिभि. भक्तिरसायनादौ। तथैव '**क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्त पश्चादन्ये शेषभूताश्च धर्माः**' इति महाभारतीयवचनबलाद्वेदतुल्येनानेन ग्रन्थेन तेनैव न्यायेन क्षात्रधर्माङ्गत्व समस्तस्य वर्णाश्रमधर्मस्याङ्गीक्रियते वीरमित्रोदयावष्टम्भात्सर्वै प्रामाणिकैरिति वक्तु शक्यते। किंबहुना आपस्तम्बाना तर्पणे 'ऋग्वेद तर्पयामि, यजुर्वेद तर्पयामि, सामवेद तर्पयामि, अथर्ववेद तर्पयामि, इतिहासपुराण तर्पयामि इत्यादिना, ऋग्वेदीये च तर्पणे 'सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यन्तु' इत्यादिना च प्रत्यह महाभारतस्य श्रवण क्रियमाण भगवद्विभूतित्वात्पूर्वोक्तादेवेति स्पष्टमगम्यते। अनेन हि तर्पणविधानेन महाभारतस्य रक्षण वर्णाश्रमधर्मरक्षणरूपमेवेति स्पष्ट प्रतीयते। '**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति**' इति गीतावाक्येन इद तर्पण तोयदानात्मक समुपस्थाप्यते। तच्च अन्ततो गत्वा सुलभ जलमपि दत्वा महाभारतस्य स्मरण कर्तव्यमित्यर्थे पर्यवस्यति पूर्वोक्तैर्हेतुभि ।

ब्रह्मण्यता, देवपितृभक्तता, मृदुता अनसूयता अपरोपतापिता अपारुष्यं, मैत्रता, प्रियवादिता, कृतज्ञता, शरण्यता, कारुण्यता, प्रशान्तिश्चेति त्रयोदशविध शीलमिति हारीतेन परिगणित शीलं प्राधान्येन महाभारते प्रतिपाद्यते शीलनिरूपणाध्याये। ब्राह्मण्यादीना शीलभेदानामुक्तानामनुक्ताना च सर्वेषा प्रशान्तौ अन्तर्भाव सुस्पष्ट एव। सा च प्रशान्ति '**शान्ति निर्वाणपरमां मत्संस्थामधिगच्छतीति**' गीताया स्पष्टमेव कण्ठत उक्ता भगवता। अत एव शान्तिपर्वणि राजधर्मानुशासन मोक्षधर्मानुशासन च कृतम्।

एवविधाया शान्ते ब्रह्मण्यतादेवपितृभक्ततादिरूपेण विस्तृति विश्वस्य अनुष्ठानमेकमेव भारतवर्षस्यास्मद्देशस्य प्रधानभूतमुत्कर्षहेतुर्भवति। अतएव '**गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे। स्वर्गापवर्गस्य च हेतुभूते भवन्ति भूय· पुरुषा सुरत्वात्**' इति विष्णुपुराणादौ भारतवर्षस्य महत्त्वमाख्यायते। एवविध ब्रह्मण्यतादिकारणीभूत प्रशान्तत्वं शील भारतवर्षस्य एकराष्ट्रतासम्पादक तद्द्वारा समस्तस्य विश्वस्य आदर्शव्यवस्थापक च भवति। अतएव हि मनुना '**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवा·**' इति विधीयते।

राजनीतिशास्त्रे यथोक्तविधस्य शीलस्य कि माहात्म्यमस्तीत्येतदर्थं प्रसङ्गादत्रैव नीतितत्त्व किञ्चित्प्रदर्शयाम। '**प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतेष्टसाधनातककर्मानुष्ठानं नीति**' रिति लक्षण प्रत्यक्षानुमानसयोजने चार्वाकादीनामपि सग्राहक भवति। अत एव '**नीतिशास्त्रकामशास्त्रानुसारेण वर्तनं धर्मः**' इति चार्वाकैरप्युद्घोष्यते। तत्र शासनसभासु सदस्यत्वेन निर्वाचनीया पुरुषा तेषा राजकीयगुणयुक्तत्वे एव निर्वाचिताश्चेत्कार्यक्षमा भवितुमर्हन्तीति बुध्या—

स्ववग्रहो जानपद कुलशीलबलान्वित।
वाग्मी प्रगल्भश्चक्षुष्मानुत्साही प्रतिपत्तिमान्॥
स्तम्भचापलहीनश्च मैत्र क्लेशसह शुचि।
धृतिसत्त्वदयास्थैर्यप्रभावारोग्यसयुतः॥
कृतशिष्यश्च दक्षश्च प्रज्ञावान्धारणान्वित।
दृढभक्तिरकर्ता च वैराणां सचिवो भवेत्॥

इत्यादिना मन्त्रिगुणान्निर्दिश्य तेषां गुणानां परीक्षा कथं कर्तव्येति प्रश्ने प्रत्यक्षपरोक्षानुमानलक्षणैः प्रमाणैरेव कर्तव्या इत्युत्तरय्य, कस्य प्रमाणस्य कुत्रोपयोगः कर्तव्य इति विभज्य कथनावसरे परोक्षप्रमाणं त्रिविधं त्रिविध-गुणपरीक्षासु विभज्य व्यवस्थापितं नीतिशास्त्रकृद्भिः । तथाहि—अमात्यानां विद्वत्त्वं विदुषां बहुमतग्रहणेन परीक्ष्यमिति व्यवस्थाप्य तद्विषये शब्द-प्रमाणात्मकं विद्वद्बहुमतमुपन्यस्यति । तथा 'संवासिभ्यो बलं सत्त्वमारोग्यं शीलमेवच' इत्यनेन संवासिनां बहुमतेन शीलादिकं परीक्षणीयमित्युच्यते । अत्रेयमुपपत्तिर्द्रष्टव्या, 'नगरे पत्तने खर्वटे ग्रामे वा महति सज्जनाश्रये स्थान'मिति कामसूत्रे सज्जनाश्रयेणैव नगरादीनां रक्षणं भवतीति प्रतिपाद्यते । अतः संवासिनां बहुमतं नियमेन शीलादीनां गुणानां परिचायकं भवति । इत्यस्मादेव हेतोः निर्वाचनक्षेत्रस्थितानां बहुमतग्रहणेन शासनसभामन्त्रिणां निर्वाचनं क्रियते आधुनिकपाश्चात्यनीतावपि । पूर्वोक्तं विद्वद्बहुमतं तु केषाचिदेव परिमितानां शासनसभासदस्यानां कृते पाश्चात्य-नीतौ क्रियते इति स्थितौ स्पष्टैव भारतीयराजनीतेः पाश्चात्यराजनीत्यपेक्षयो-त्कृष्टता । इदं तु अतीव विदुषामाश्चर्यावहं भवेद्यन्महाभारते प्राधान्येन वर्ण्यमानस्य शीलस्य परीक्षणाय आवश्यकं निर्वाचनक्षेत्रस्थितानां बहुमत-ग्रहणं पाश्चात्यनीतावपि गूढतया तथा अङ्गीकृतमस्ति यथा शीलनिरूपण-परस्य महाभारतस्य राजनीतिशास्त्रस्य राजनीतिग्रन्थमुकुटमणित्वं सिध्यति ।

एतद्ग्रन्थानुसरणे सत्यां शान्तिसमृद्धौ ब्रह्मण्यता तदनुबन्धिनी देवपितृ-भक्तता च स्वयमेव भवति । अत एव राजधर्मानुशासने—**वक्ष्यामि तु यथामात्यान्यादृशांश्च करिष्यसि । चतुरो ब्राह्मणान् वैद्यान्प्रगल्भा-न्स्नातकान् शुचीन्** ' इत्यादिना वर्णाश्रमधर्मप्रधाना राजनीतिर्व्यवस्था-प्यते । जातिप्रधानायां शासनसभायां एवंविधं निर्माणमर्थशास्त्रेषु महाभारत-ग्रन्थादेकस्मादेवावगम्यते अधुना । तच्च 'स्वजनेभ्यो विजानीयात्कुलं स्थान मवग्रह' मित्यादिना उत्तरदायित्वपूर्वशासनस्य व्यवस्थापकं भवति । इति स्पष्टमस्मदीयैर्विवेचितमस्ति '**गीर्वाणवाग्वर्धिनीपञ्चाशदब्दी ( सुवर्ण-जयन्ती ) उत्सवनिबन्धे** ' इति विस्तरादुपरम्यते । शासनसभायां आधार-भूतमिदं विद्वद्बहुमतं, संवासिबहुमतं, स्वजनबहुमतग्रहणात्मकं गुणत्रयात्मकं

शब्दप्रमाण वर्णाश्रमव्यवस्थापकत्वात् अवश्योपादेयमिति हि गीताया 'सङ्करस्य च कर्तास्यामुपहन्यामिमा॰ प्रजाः' इति स्वयमेव भगवता, 'सङ्करो नरकायैव कुलघ्नानां कुलस्य च' इत्यनेन अर्जुनेन च असकृदावेदितमस्ति।

अतो भारतवर्षस्य गौरवावह महाभारतमितिहासात्मक सक्षेपतोऽपि प्रकाश्य **वयोवृद्धैः श्री शंकरराव सरनाईक महोदयैः अस्मत्सुहृद्भिः पं वासुदेवशास्त्रिजोशी महोदयैश्च** देशस्य धर्मस्य चोपक्रियते। तदर्थं बहुविधानेतेभ्यो धन्यवादान्प्रयच्छाम। पत्र पुष्पमित्यादिन्यायेन सर्वैरे-वास्तिकैरिद प्रकाशनमभ्यर्हणीयमिति साग्रहमावेदयामश्च। इति शम्।

**श्रीराजेश्वरशास्त्री द्राविडः**

भाद्र शु० १० स० २०१३

श्रीगीर्वाणवाग्वर्धिनी सभाया स्वर्णजयन्त्युत्सवावसरे

---

## FOREWORD

I am very happy that Sri S S Sarnaik is now, by this volume, completing his summary of the original Mahabharat This volume in particular deals with the *Shanti* and *Anushasana Parvas*, which are the repositories of the eternal wisdom of India There is no sphere of life on which light is not thrown by these two Parvas

The efforts of Sri S S Sarnaik to popularise Mahabharat deserve every commendation

I hope these volumes will be useful, particularly in the Universities, where a general knowledge of the Mahabharat is essential for the younger generation to appreciate the spirit and content of Indian culture

K M MUNSHI

॥ श्री ॥

# ॥ सम्पादकमण्डलस्य हृद्गतम् ॥

ज्ञानाञ्जनेन लोकस्य दृष्टिदोषनिवारणम् ।
वन्द्यवन्द्यतमं शान्तं व्यासं वन्दामहे वयम् ॥

( १ ) अस्य **श्रीमहाभारतसारस्य** प्रथमखण्डप्रसिद्ध्यनन्तरं बहूनां विपश्चिदपश्चिमानामनुकूलाभिप्रायप्रदर्शनेन सफलता गता अस्मच्छ्रमा इति मन्यामहे ।

( २ ) प्रथमखण्डस्य प्रस्तावनालेखकाना श्री ज स करंदीकर महाशयानामितरेषा च कतिपयसज्जनाना सूचनानुसारेण द्वितीय-तृतीय खण्डयोरुपकथा यथास्थान सङ्गृहीता सन्ति । प्रथमखण्डवत् तत्तत्पर्वान्ते न सन्निविष्टा ।

( ३ ) केचन सज्जना प्रश्नमिममुद्भावयन्ति, यद्भारताचार्य वैद्यमहाशयसम्पादितस्य सङ्क्षिप्तभारतस्य विद्यमानत्वे सति किम्प्रयोजनोऽय **सारग्रन्थसम्पादनसमारम्भ** इति । येषामन्त करणे समुद्भवेदयं प्रश्नस्तैरस्य प्रश्नस्योत्तरलाभार्थमधोलिखितानि **सारग्रन्थस्य** वैशिष्ट्यान्यवश्यमवलोकनीयानि ।

( अ ) सङ्क्षिप्तभारतस्य श्लोकसङ्ख्या सार्धसप्तसहस्रपरिमिता (७५००) आसीत् । अस्य **सारग्रन्थस्य** तु तद्द्विगुणाधिका षोडशसहस्रसम्मिता (१६०००) वर्तते । तेन हेतुना भूयान्परिचयो भवितु शक्यते महाभारतस्य ।

( आ ) सङ्क्षिप्तभारते श्रीमद्भगवद्गीता केवलं पादटिप्पण्या नामोल्लेखेन चकास्ति । महती त्रुटिरेव सा सङक्षिप्तभारतग्रन्थस्य । श्रीमद्भगवद्गीता नाम भारतीयानामस्माक धार्मिकग्रन्थ इव राष्ट्रियग्रन्थोऽपि वर्वर्ति । तत्त्वज्ञानविषये तु न कोऽपि ग्रन्थस्तत्तुलामधिरोढुमर्हति । भारतीयाना श्रद्धाभाजन च सा । अत **सारग्रन्थे** सा साद्यन्ता सङ्गृहीताऽस्माभि ।

( इ ) **सारग्रन्थे** तत्तत्स्थाने प्रतिप्रकरण नामनिर्देशमस्त्वात्कतमस्य विषयस्य वर्णनं भविष्यतीति झटिति चित्तारूढ भवति वाचकानाम् ।

( ई ) **सारग्रन्थे** सङ्गृहीतश्लोका महाभारतस्य यस्मादध्यायाद्गृहीतास्तदध्यायनिदर्शका अङ्का अपि वामभागे मुद्रिता सन्ति । तेन मूलपुस्तके तत्तत्सन्दर्भदर्शनं सुलभ सम्भविष्यति ।

( उ ) **सारग्रन्थे** वर्णानुक्रमेण प्रकरणसूची विद्यते। तत स्वाभीष्टप्रकरणा-न्वेषण सुकर भवति।

( ऊ ) **सारग्रन्थे** प्रतिखण्ड महतायासेन शब्दार्थसङ्ग्रहस्यापि समावेश कृतोऽस्ति। अस्य द्विसहस्राधिकशब्दार्थस्य च्छात्राणा महानुपयोगो भवेत्।

( ऋ ) **सारग्रन्थे** महाराष्ट्रभाषया राष्ट्रभाषया च लिखितेन साराशेन सस्कृतभाषानभिज्ञानामपि तत्तत्पर्वपरिचय सङ्क्षेपतो भवेदेव।

( ४ ) अपि च साम्प्रत श्री वैद्यमहाशयाना सङ्क्षिप्तभारत दुर्लभ मुद्रणबाह्य च सञ्जातम्। अत **सारग्रन्थसम्पादनोद्योग** समारब्धोऽस्माभि।

( ५ ) **सारग्रन्थस्य** प्रथमखण्डे विद्यमाना श्लोकाङ्कनिर्देशपद्धति दृष्ट्वा कैश्चिन्महाभागैर्या सूचना कृता, तदनुसारेण द्वितीयतृतीयखण्डयो श्लोकाङ्क-पद्धतिराश्रिता दृश्येत। कुत्रचिदेकस्या पङ्क्तौ वाक्यसमाप्तिसत्त्वात्तत्रैव श्लोकाङ्को दृश्येत क्वचित्पङ्क्तिद्वये कुत्रचित्पङ्क्तित्रयेऽपि। इय परिपाटी यावच्छक्यमनुसृतास्ति।

( ६ ) पाणिनीयव्याकरणदृष्ट्या परसवर्णस्य यत्रावश्यकता विद्यते तादृशस्थ-लेऽपि मुद्रणसौकर्यार्थं बहुत्र परसवर्णो न कृत। तदेतत्सर्वं सुधीभिरवधेयम्।

( ७ ) सङ्क्षेपकरणाय पुण्यपत्तनस्थचित्रशालामुद्रणालये मुद्रित श्रीनील-कण्ठीटीकासमेत श्रीमहाभारतपुस्तक स्वीकृतम्। अतस्तन्मुद्रणालयाध्यक्षाणा-मुपकार सादर स्मराम।

( ८ ) अन्ते च येषा भूरिभागधेयाना प्रेरणाया ग्रन्थरत्नश्रीमहाभारत-परिशीलनसञ्जातानन्दसन्दोहवशाद्वर्षत्रयमिद मुहूर्तवद्व्यतिक्रान्त तेभ्य पुष्पपुरी ( पुसद ) निवासिभ्य श्री शङ्करराव सरनाईकमहोदयेभ्य शतशो धन्यवादान्समर्प्य, यस्यानुकम्पया **श्रीमहाभारतसारसङ्ग्रहे** वय निमित्तीभूतास्त सर्वान्तर्यामिण भगवन्त **वासुदेवं** सप्रश्रय साञ्जलिबन्धम-भिवाद्य च विरमाम।

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात्॥**

**ॐ तत्सत्।**



॥ श्रीः ॥

# ॥ प्रकाशकनिवेदनम् ॥

॥ संस्कृतं संस्कृतेर्मूलम् ॥

( १ ) अस्य **श्रीमहाभारतसारग्रन्थस्य** प्रथम खण्ड श्रीशालिवाहन-शकस्य १८७६ तमे वर्षे गुरुपौर्णिमाया ( आषाढ शु॥ १५ ) प्रकाशं नीत । वर्षद्वयानन्तरम् अद्य तस्य ग्रन्थस्य द्वितीय-तृतीयभागयो प्रसिद्धिप्रसङ्ग ईश्वरानुग्रहेण प्राप्त इति अतीव प्रमुदित मे चेत । महाभारतस्य समग्राष्टा-दशपर्वणा सङ्क्षेपस्य विचार वर्षपूगात्प्रागेव मन्मनसि कृतपद आसीत्। स विचार सम्पादकमण्डलानुग्रहेण मूर्तता प्राप्त इति हेतोस्तदभिवादन प्रथममेव करोमि ।

( २ ) चतुरशीतिसहस्रश्लोकात्मकस्य महाभारतस्य खण्डत्रयात्मकोऽयं **सारसङ्ग्रहः** किञ्चिन्न्यूनषोडशसहस्रमितश्लोकैर्विहितोऽस्ति । द्वादशसहस्र-श्लोकैरय सङ्ग्रह परिपूर्ण स्यादिति प्रथम तर्कितमासीत् । पर तदशक्यं वीक्ष्य एतावान् विस्तर क्रमप्राप्तोऽभूत् । वस्तुतस्तु महाभारतस्य सारसर्वस्वं तत्तृतीयाश गृहीत्वा न्यूनातिन्यूनत्रिंशत्सहस्रश्लोकैर्भवेत् । किन्तु एतद्भाग-त्रयमुद्रणार्थमेव महान् द्रव्यव्यय सञ्जातोऽस्ति । अतस्त्रिंशत्सहस्रश्लोकात्मक-सङ्क्षेपस्य विचार केवलं मनोरथरूपेणैव निर्दिष्टोऽस्ति ।

( ३ ) संस्कृतभाषाया अध्ययनाध्यापनवृद्ध्यर्थं व्याख्यान-लेखनपरिष-त्सम्मेलनादयो बहवः प्रयत्ना सम्प्रति श्रवणगोचरा भवन्ति । अतीव सन्तोषा-स्पदमेव तत् । पर ते सर्वे प्रयत्ना मूलग्राहिदृष्ट्या, प्रसिद्धिपराङ्मुखवृत्त्या, आस्थाधिक्येन च विहिताश्चेत्, तदर्थं यो द्रव्यव्ययो भवति, स उचितस्थले योग्यकारणेन च भूत्वा दुग्धशर्करायोगवत् संस्कृतभाषाया अध्ययनाध्यापन-वृद्ध्यै कल्पेत इति भाति ।

( ४ ) आङ्ग्लशासनकाले सस्कृतभाषाध्ययनारम्भोऽष्टमकक्षायामेव भवति स्म। सैव परिपाटी स्वतन्त्रभारते सर्वत्रावलम्बनीया। विद्यालय-महा विद्यालयेषु सर्वत्र सस्कृतभाषाध्ययनेनावश्यकेन भाव्यम्। तेन संस्कृतभाषा-प्रचारे प्रचुरतर ( महत् ) साहाय्य भवेत्।

( ५ ) एतद्देशीयशिक्षणविभागेभ्य इद सविनय निवेदयामि यत्, महाभारतस्य महत्तायास्तदध्ययनावश्यकतायाश्च समस्तविद्वद्वरसमतत्वादयं **महाभारतसारो** विद्यालय-महाविद्यालयेषु पाठ्यत्वेन तैर्निवेशनीय । अनु-भवानुसारेण ग्रन्थोऽय शनै शनैरावश्यकपरिष्कारपुर सर शिक्षकाणां विद्यार्थिगणाना चाभ्यासयोग्यो भवितु शक्येत। भारतीयच्छात्राणामेतद्-ग्रन्थाध्ययनमतीवावश्यकमिति मे मतम्।

( ६ ) सस्कृतभाषाप्रचारो नाम कस्यचिद्विशिष्टवर्गस्याधिकारवृद्धिरेवेति केषाञ्चिद्धारणा दृश्यते। पर भारतेतरदेशीया अपि महाभारतस्य महत्तां विज्ञाय तद्रसमाकण्ठ सेवितु महतानन्देनाहमहमिकया पुर सरा भवन्तीति ज्ञात्वा तादृश्यात्मनाशकरी विपरीतधारणा न केनापि कर्तव्या इति प्रार्थये।

( ७ ) **महाभारतसारस्य** देशभाषास्वनुवादा अवश्य भवितु योग्या अपि द्रव्याभावात् तत्कार्यमद्याशक्यमेव। ईशकृपया परिस्थितेरानुकूल्ये दृष्टे सोऽपि प्रयत्नो मया विधीयेत इत्येतदेव साम्प्रत निवेदयितु शक्यम्।

( ८ ) **महाभारतसार**सदृशग्रन्थस्य प्रकाशन प्रचुरकष्टप्रदं विद्वत्तामूलक, प्रभूतद्रव्यव्ययसाध्य च वर्तते। ग्रन्थस्यास्य प्रकाशन तु लोकाश्रयेणैव प्रवृत्तमस्ति। खण्डत्रयात्मकस्यास्य **महाभारतसारग्रन्थस्य** प्रकाशनार्थं सार्धषोडशसहस्ररूप्यकव्ययस्य नितरामावश्यकता विद्यते। पर प्रथमखण्ड-व्ययपर्याप्तमेव द्रव्यं प्राप्तम्। द्वितीय-तृतीयखण्डयो प्रकाशनव्ययपरिपूर्णतायै सहृदयहृदयया जनतया खण्डत्रयक्रयणेनावश्य द्रव्यसाहाय्य करणीयमिति सप्रश्रय विज्ञापयामि।

( ९ ) संस्कृतग्रन्थस्य मुद्रण क्लिष्टतरं बहुलायाससाध्य चेति विदितमेव सर्वेषाम्। बहुवार शुद्धीकृतमपि दृष्टिविभ्रमादशुद्ध स्वस्थानस्थितमेव भवति। अपि च, शुद्धीकृतस्यापि मुद्रणसमये उकारौकारऋकाररेफादिचिह्नानि

स्थानभ्रष्टानि भवन्ति। अत एतादृशे अशुद्धिविषये क्षन्तव्य वाचकमहोदयै। अशुद्धाना न्यूनातिन्यूनतासम्पादनार्थं यावच्छक्य प्रयतितमेव। अन्ते च शुद्धिपत्रमपि सयोजितमस्ति।

"**महाभारतसार**" सदृशस्य ग्रन्थस्य प्रकाशनम् अनेकाना सहानुमत्या आश्रयेण च विना सुतरामशक्यम् इति सुज्ञैर्ज्ञायते एव। तेषा सर्वेषा नामनिर्देश तेषु कस्मैचित् रोचेत कस्मैचिन्न रोचेत वा। अपि च सर्वेषा नामनिर्देश कथ शक्य भवेदित्यपि चिन्त्यम्।

(१०) सम्पादकमण्डलेन तु भृशमुपकृतोऽस्मि। एतद्ग्रन्थप्रकाशनस्य सम्पादकमण्डलश्रमा एव निदानम्। अत एतद्ग्रन्थपूर्तिस्तस्यैव श्रमफलमिति विदाकरोमि।

मध्यप्रदेशराज्यपाल डॉ पट्टाभि सीताराम अय्या महोदयै, भूतपूर्व राज्यपाल डॉ श्री बापूजी अणे महाशयै, बिहारराज्यपाल माननीय श्री रगराव दिवाकर महाभागैश्च यदमूल्य साहाय्य, मार्गदर्शन च कृतम्, तेन एतद्ग्रन्थप्रकाशन सुकर सुशक च सञ्जातम्।

पुण्यपत्तनस्थ श्री ज स करंदीकर महाशयाना नागपूरस्थ साहित्याचार्य बालशास्त्रि हरदास महाशयाना, नागपूरस्थ महामहोपाध्याय श्री वा वि मिराशी महाशयाना च प्रस्तावनालेखनेनाय ग्रन्थ शोभाधिक्य विद्वन्मान्यता च प्राप्तोऽस्तीति मन्ये।

प्र पडित राजेश्वरशास्त्री द्रवीड, काशी, आग्लभाषामधिकृत्य पुरस्कार लिखन् माननीय श्रीमान् के एम्. मुनशी, उत्तरप्रदेशराज्यपाल द्वितीय-तृतीयखण्डयो प्रशस्तिपत्रस्य लेखक प पू सरसघचालक मा स. गोळवळकर गुरुजी इत्येतान् महाभागेभ्य धन्यवादप्रदानम् ममाद्य कर्तव्यम् ज्ञायते मया। एतद्भिर्महाभागै स्वकीयलेखनेन महदाधिष्ठाने स्थापितोऽयम् ग्रन्थ। ग्रन्थस्य प्रसारोऽपि तेनैव सुकर सुलभश्च भवति। अत तैरह भृशमुपकृत।

'उदय' 'तरुणभारत' 'केसरि' 'महाराष्ट्र' 'सारथि' 'संस्कृतभवितव्य' 'प्रसाद' 'पुरुषार्थ' 'महाराष्ट्रविस्तार' प्रभृतिभिर्वृत्तपत्रैर्मासिकपत्रैश्च महत्यास्थया स्वस्वाभिप्रायप्रकाशनेन बहुजनसमाजपर्यन्तमस्यग्रन्थस्योपयोगिता असशय प्रसिद्धि प्रापिता।

'समर्थ भारत' मुद्रणालयव्यवस्थापकै श्री. सरदेसाई महाशयैरस्य ग्रन्थस्य खण्डत्रयमपि विनैव कालातिक्रम समीचीनतया मनोहारितया च मुद्रितम्।

पुष्पपुरी (पुसद) निवासिभिर्बहुभिर्धनिकैरन्यैश्च कतिपयसज्जनैरस्य ग्रन्थस्य प्रकाशनार्थं द्रव्यसाहाय्य कृतमस्ति।

यथासकल्पितम् एतत् प्रकाशनमद्यावसितम्। तस्मादह भृश सतुष्ट। यस्य कृपया एत् प्रकाशन सुसपन्न त परमात्मानमह मनोभावेन वन्दे।

अतीते पञ्चसु वर्षेषु मया एतस्य ग्रन्थस्य विदुषा सम्पादकानां समागम प्राप्त। अपि प्राकृतोऽह श्रेष्ठतम लाभ प्राप्नुवम् तेषामसस्कृत-जीवनात्। किन्तु पर दु खितोऽह तेषा वियोगेन अधुना। अन्तत तान् प्रेमपुर सर वन्दे।

प्रकाशन समाप्ति गतम्। खण्डत्रयमपि प्रसिद्धमिति सत्यम्। तथापि अस्मात्प्रकाशनात् प्रकाशक अष्टसहस्रै रूपकै ऋणबद्ध। केन्द्रशासनम् दिल्ली, तथैव प्रान्तीयशासनानि प्रार्थित नि सहायार्थम्। आवेदनपत्राणि प्रार्थनापत्राणि च प्रेषितानि तेभ्य। किन्तु न कोऽपि आश्रयाधारो भूत।

यस्य जनताजनार्दनार्दनस्याश्रयेण एतत् प्रकाशनकार्यम् अभवत् स एव माम् एतस्मात् ऋणात् मुक्त कुर्यात् इति मे दृढ विश्वास। स सद्य सफली-भवतु इति मे प्रार्थना।

उपरिनिर्दिष्टाना सर्वेषामुपकर्तृणामधमर्णोऽह तेभ्य सर्वेभ्यो हार्दिकधन्य-वादान् समर्प्य विरमामि।

क्षमस्व—

द्वितीयखण्डनिवेदने, अद्य तृतीयखण्डोऽपि प्रसिद्ध्यते इति यल्लिखित तदनवधानत एव। वस्तुत तद्दिने तन्न प्रसिद्धम्। तस्मात् क्षम्यतामय जन।

इति शम्



॥ श्रीः ॥

परमपूजनीय सरसंघचालक श्री मा स गोलवलकर महोदयैः महाराष्ट्रभाषायां लिखितायाः, श्रीमहाभारतसारप्रथमखण्डप्रशस्तेः संस्कृतसारांशः—

भारतीयसस्कृतेर्द्रष्टारो मानवजीवनस्य साफल्य चतुर्विधपुरुषार्थसम्पादनेन मन्यन्ते। धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थानां सर्वाङ्गपरिपूर्ण सर्वङ्कष च दर्शन महाभारतादन्यत्र न सम्भवति। अभ्युदय–नि श्रेयस–कर्माकर्म–विकर्म–नीत्यनीति–जातिधर्म–कुलधर्माणां निरपवाद ज्ञान सम्पूर्णतया एकस्मादेव ग्रन्थात् प्राप्तव्य चेत् तर्हि महाभारतमेव शरणीकरणीयम्, तदर्थं नान्य पन्था विद्यते।

पुरुषार्थचतुष्टयमिव वार्णाश्रमचतुष्टयमिव च वीरव्रतचतुष्टयमपि शास्त्रकारा वर्णयाम्बभूवु। युद्धवीर–दानवीर–दयावीर–धर्मवीरनामकानामेषा चतुर्विधवीराणाम् उत्कटा भव्याश्च आदर्शा भीमसेन-कर्ण–शिबि–युधिष्ठिरादिरूपेण यथा महाभारते एकत्र समुपलभ्यन्ते तथा न कस्मिश्चिदपि ग्रन्थेऽस्मिन् जगतीतले समुपलब्धु शक्येरन्। अस्य चतुर्विधवीरजीवनस्य बाल्य एव दृढतरसस्कारवशात् पुण्यश्लोक श्री शिवछत्रपतिसदृश 'पुरुषोत्तमः' भारतेन लब्ध। अस्य वीरव्रतस्योपदेश सामान्यजनसुलभया उद्बोधकपरिपाट्या महाभारते यत्र तत्र विहितोऽस्ति।

सर्वासु भारतीयदेशभाषासु शतकानुशतक महाभारतीयकथाश्रवणेन सहस्रश काव्यनाटकादिग्रन्था विद्वद्वरैर्निर्मिता समुल्लसन्ति। तद्द्वारैव महाभारतीयदिव्यरसास्वाद सामान्यजना अनुभवन्ति। सस्कृतभाषाध्ययनस्य अल्पप्रसरत्वात् महाभारतग्रन्थाभगाहन स्थगितप्रायमासीत्। अत सुशिक्षितसमाज महाभारताध्ययने प्रवर्तयितु महाभारतस्वरूपस्य सम्यक् परिचयार्थं च यादृशग्रन्थस्य आवश्यकता आसीत् तादृशोऽय महाभारतसारग्रन्थः

प्रकाशककृपया समुपलब्धोऽस्ति। महाभारतस्य निकटपरिचय संस्कृत-भाषाध्ययन च द्वयमपि एतद्ग्रन्थवाचनेन सम्पादयितु शक्येत। यथा मातु प्रदक्षिणया पृथ्वीप्रदक्षिणाफल हस्तगत भवति, यथा समुद्रस्नानेन सर्वतीर्थ-स्नानफल लभ्यते, यथा वा सुधास्वादनेन सर्वरसास्वादानन्दोऽनुभवितु शक्यते, एवमेव अस्य '**महाभारतसार**' ग्रथस्य वाचनेन **महाभारत-वाचनानन्दो** भविष्यतीत्यत्र नास्ति सशयलेशोऽपि।

अत अस्य '**महाभारतसार**' ग्रन्थस्य अवशिष्टखण्डद्वयप्रकाशनार्थं जनताजनार्दन द्रव्यरूपेण प्रकाशकसाहाय्य करोतु इति प्रार्थये।

**गोलवलकरोपाव्ह सदाशिवतनुजन्मा माधवशर्मा**
**सरसंघचालकः।**

---

# महाभारतसारस्य विषयसूचिः

# महाभारतसारांतील ‘ शान्तिपर्वा ’चा मराठी सारांश

वैशम्पायन जनमेजय राजाला सांगूं लागले—युद्धात मृत्यु पावलेल्या सर्व लोकाच्या नावाने पाणी दिल्यावर गंगेच्या बाहेर आल्यावर धर्मराजा तेथेच एक महिना राहिला एकदा त्याच्या समाचाराला पुष्कळ ऋषी आले असता धर्मराजाने मनांतले दु ख त्याना सागितले धर्मराजा म्हणाला, “ माझ्या हातून जातिवधाचे मोठे पातक तर घडलेच पण आमचा सख्खा वडील भाऊ कर्ण याचा वध आमच्या हातून घडला, याचे मला फारच दु ख होत आहे कौरव-सभेत कर्ण आम्हाला कितीही कठोर बोलला, तरी त्याच्या पायाकडे पाहिले म्हणजे माझा राग शात होत असे त्याचे पाय कुन्तीच्या पायासारखे होते पण असे का असावे याचे कारण काही माझ्या लक्षात येत नसे त्याचा मृत्यु झाल्यावर ती गोष्ट मला समजली तर त्याला शाप कोणाचा होता ? शेवटी त्याच्या रथाचे चाक भूमीने का गिळले ते मला सागा ”

नारद ऋषी म्हणाले, “ क्षत्रिय युद्धात मरून स्वर्गलोकास जावेत यासाठीच देवानी तो कन्येचा पुत्र उत्पन्न केला होता. त्याच्यामुळेच आपसात वैर वाढले त्या कर्णाने द्रोणाचार्यांजवळ धनुर्विद्येचे शिक्षण घेतले पुढे अर्जुन आपल्यापेक्षा प्रबळ आहे असे समजून एकदा एकान्तात कर्णाने द्रोणाचार्यांना ब्रह्मास्त्र शिकविण्याची विनति केली द्रोणाचार्यांनी सागितलें कीं, ब्राह्मण किंवा क्षत्रिय यानाच ब्रह्मास्त्र शिकण्याचा अधिकार आहे, दुसऱ्याला नाही ते ऐकून कर्ण महेन्द्रपर्वतावर परशुरामाकडे गेला. मी ब्राह्मण ( त्यात भार्गव गोत्राचा ) आहे असे सागून ब्रह्मास्त्र शिकला. एकदा एका ब्राह्मणाची दुभती गाय कर्णाने अजाणता मारली तेव्हां त्या ब्राह्मणाने कर्णाला शाप दिला—“ ज्याच्याशी तू वैर करीत आहेस, ज्याला मारण्यासाठी एवढा खटाटोप करीत आहेस, त्याच्याशी तू युद्ध करीत असताना तुझ्या रथाचे चाक भूमी गिळील आणि तो सुद्धा तुला असाच मारील ”

" एकदा परशुराम कर्णाच्या माडीवर मस्तक ठेवून निजले असता एका किड्याने कर्णाची माडी खालून कोरली, पण कर्णाने माडी हालविली नाही माडीचे रक्त परशुरामाच्या अगाला लागल्यावर ते जागे झाले त्याना एक किडा दिसला पूर्वी कृतयुगात तो दश नावाचा राक्षस होता त्याने भृगु-ऋषीच्या स्त्रीला—पत्नीला पळवून नेले म्हणून त्या ऋषीच्या शापाने तो किडा झाला होता परशुरामाची दृष्टि त्याच्यावर पडताच तो उद्धरून गेला. तो गेल्यावर परशुराम कर्णाला म्हणाले, " एवढे मोठें दु ख ब्राह्मण सहन करू शकत नाही तूं ब्राह्मण नाहीस, तेव्हा खरे साग काय ते " तेव्हा परशुराम शाप देतील ( व आपली विद्याही नाहीशी होईल ) ह्या भीतीने कर्णाने सागितले, " मी ब्राह्मणही नाही, क्षत्रियही नाही, तर सूत आहें. केवळ ब्रह्मास्त्र शिकण्यासाठीच ' मी भार्गव आहें ' असे तुम्हाला सागितले " ते ऐकून परशुराम रागाने लाल होऊन म्हणाले, " मला फसवून तू ब्रह्मास्त्र शिकलास, पण शेवटी हे तुला आठवणार नाही चल नीघ तुझ्यासारख्या खोट्या माणसाला येथे एक क्षणही राहता येणार नाही " त्यानतर कर्ण तेथे राहिला नाही. ब्रह्मास्त्र व भयंकर दोन शाप घेऊन कर्ण परत आला

एकदा कलिग-देशाचा राजा चित्रांगद याच्या कन्येचा स्वयवर होता स्वयंवरासाठीं पुष्कळ राजे जमले होते पण दुर्योधनानें त्या कन्येला पळविलें तेव्हा जे युद्ध झाले, त्यात कर्णाने दुर्योधनाकरिता पराक्रम करून सर्व राजाना जिकले त्याचा पराक्रम ऐकून जरासधाने त्याला युद्धाला बोलाविले कर्णाने त्याचा पराभव केल्यावर जरासन्ध त्याचा मित्र झाला पुढे इन्द्रानें तुमच्या कल्याणासाठी त्याची कवच-कुण्डले ( सहज असलेली ) मागून नेली अशा रीतीनें कर्ण मोठा पराक्रमी असून सुद्धा परिस्थितीनें ( शाप वगैरे ) नागविल्यामुळे अर्जुनाने त्याचा वध केला, पण युद्धात मृत्यु आल्यामुळें त्याला सद्गति मिळाली, म्हणून, हे धर्मराजा, त्याचा शोक करणें योग्य होणार नाही "

नारद ऋषीचें ते भाषण ऐकून सुद्धा धर्मराजाचा शोक शात झाला नाही तो पुन्हा अरण्यात जाऊन तपश्चर्या करण्याच्या गोष्टी बोलू लागला तेव्हा

पुष्कळजणानी, म्हणजे अर्जुन, भीमसेन, द्रौपदी, व्यास महर्षी आणि श्रीकृष्ण यानी त्याला पुष्कळ समजाविण्याचा प्रयत्न केला व्यास महर्षी म्हणाले, ' अरण्यात जाऊन तप करीत बसणे हे ब्राह्मणाचे मुख्य काम आहे क्षत्रियाचे मुख्य कर्तव्य राज्य करणे हेच आहे कारण राजा अधर्म करणाऱ्याला शिक्षा करतो म्हणून लोक धर्माने वागतात, आणि त्यामुळे त्या राजाला चांगली गति मिळते ''

सुद्युम्न राजाच्या राज्यात शख व लिखित या नावाचे दोन ऋषी आपापल्या आश्रमात राहत होते एकदा लिखिताने शखाच्या आश्रमातली फळे त्याला न विचारता खाल्ली तेव्हा शखाने त्याला सागितले, " तू चोरी केली आहेस त्या पातकाची शिक्षा भोगून ये " लिखित सुद्युम्न राजाकडे गेला सुद्युम्न राजानें त्याचे दोन्ही हात तोडले लिखित आपल्या वडील भावाकडे म्हणजे शखाकडे आला आणि क्षमा मागूं लागला तेव्हां शंख म्हणाला, " मी तुझ्यावर रागावलो नाही केलेल्या पातकाचे प्रायश्चित्त भोगले पाहिजे, म्हणून मी तुला राजाकडे जाण्यास सागितले आतां तू या नदीत स्नान कर " त्याप्रमाणे स्नान करताक्षणीच लिखिताचे हात पूर्वीसारखे चागले झाले त्या दिवसापासून त्या नदीला बाहुदा ( बाहु = हात, दा = देणारी ) म्हणू लागले तें पाहून लिखितानें विचारले, " तुम्हीच मला शिक्षा का केली नाही ?" शख म्हणाला, " अपराधी मनुष्याला शिक्षा करणे हे राजाचें काम आहे. म्हणून सुद्युम्न राजाकडे तुला पाठविले "

व्यास ऋषी म्हणतात, " तो सुद्युम्न राजा क्षत्रियाच्या धर्माप्रमाणे वागल्यामुळे स्वर्गाला गेला तू सुद्धा आपल्या धर्माप्रमाणे वागून राज्य कर "

नतर व्यास महर्षी पुन्हा म्हणाले, " देव-दैत्य भाऊ-भाऊ असून दैत्य अधर्म करणारे म्हणून देवानी त्याचा तर नाश केलाच, पण त्या दैत्याचा पक्ष ज्यानी घेतला, त्या शालावृक नावाच्या अठ्यायशी सहस्र (८८,०००) ब्राह्मणाचाही नाश केला कौरव अधार्मिक होते त्याचा नाश करण्याने तुला पातक लागले नाही. असे असून सुद्धा तुला तसे वाटतच असेल तर अश्वमेध-यज्ञ कर. त्याने सर्व पातकाचा नाश होईल " ते ऐकून धर्मराजा

म्हणाला, "मला सर्व राज-धर्म ऐकण्याची इच्छा आहे" त्यास ऋषींनी सांगितले, 'तू भीष्मपितामहांना जाऊन विचार" धर्मराजा म्हणाला, 'मीच त्यांना मारले आणि आता त्याच्याकडे विचारावयाला कोणत्या तोंडाने जाऊ?" असे म्हणून तो फारच शोक करू लागला तेव्हा श्रीकृष्ण म्हणाले, "धर्मराजा, धर्माची वाढ व्हावी, अधर्माचा नाश व्हावा आणि अशा रीतीने सर्वांचे कल्याण व्हावे म्हणून तू आपले वडिलार्जित राज्य कर आता अधिक आग्रह धरू नको." ते ऐकून सर्वांसहवर्तमान धर्मराजा हस्तिनापुराला आला

तेथे आल्यावर ब्राह्मण त्याला आशीर्वाद देत असता चार्वाक नावाचा राक्षस धर्मराजाला सांगू लागला, "हे सर्व ब्राह्मण म्हणतात की, तुझ्यासारखा आपल्या जातीचा नाश करणारा राजा आम्हाला नको तुझा धिक्कार असो अरे! गुरुहत्या करून जिवंत राहण्यापेक्षा तू मेलास तर फार बरे होईल" ते ऐकून धर्मराजा सर्व ब्राह्मणांची प्रार्थना करून म्हणाला, "मी अगोदरच दुःखी आहे माझा धिक्कार कशाला करता?" ब्राह्मण म्हणाले, "हे आमचे म्हणणे नव्हे हा दुष्ट राक्षस दुर्योधनाचा मित्र आहे ह्याच्या बोलण्याकडे तू लक्ष देऊ नकोस तुझे कल्याण असो" इतके बोलून त्या ब्राह्मणांनी त्या चार्वाक राक्षसाला आपल्या तेजाने मारून टाकले

त्यानंतर राज्याभिषेकाची सर्व सिद्धता झाल्यावर धौम्य ऋषींनी होम हवन केले आणि श्रीकृष्णांनी रत्नजडित सिंहासनावर द्रौपदीसह बसलेल्या धर्मराजाला अभिषेक केला मंगल वाद्ये वाजू लागली सर्व प्रजाजनांनी धर्मराजाला अहेर केला, भेटी दिल्या श्रीकृष्ण इत्यादींनी त्याचे अभिनन्दन केले. उलट धर्मराजाने श्रीकृष्णाची स्तुती केली आणि सर्वांचे आभार मानले अशा रीतीने मोठा समारंभ होऊन राज्याभिषेकाचा कार्यक्रम यथासांग पूर्ण झाला सर्वांना धन्यता वाटली धर्मराजाच्या राज्यात सर्वजण आनंदाने राहू लागले

एके दिवशी धर्मराजा श्रीकृष्णाकडे गेला असता, त्या वेळी श्रीकृष्ण ध्यानस्थ बसलेले पाहून त्याला फार आश्चर्य वाटले. नंतर त्याने श्रीकृष्णांना

प्रश्न केला की, " भगवन्ता, सर्व लोक तुमचे ध्यान करतात पण तुम्ही कोणाचे ध्यान करीत होता ?" त्यावर श्रीकृष्ण म्हणाले, " माझे एकनिष्ठ भक्त भीष्म शरशय्येवर पडल्या पडल्या माझे ध्यान करीत आहेत, म्हणून माझें सर्व लक्ष त्याच्याकडे लागले होते खरोखर भीष्मपितामहासारखा ज्ञानी पुन्हा होणार नाही म्हणून तू त्याच्याकडे जाऊन आपल्या मनातल्या सर्व शका त्याच्यापुढे माड, आणि त्याची उत्तरें समजून घे म्हणजे तुझ्या मनाचे समाधान होईल "

त्याप्रमाणे सर्व पाण्डव, श्रीकृष्ण इत्यादि मडळी भीष्माकडे गेली सर्वजण भीष्मपितामहाना नमस्कार करून बसल्यावर श्रीकृष्ण भीष्माना म्हणाले, " तुमचे शरीर समर्थ आहे ना ? बुद्धि गोंधळलेली नाही ना ? तुमच्यासारखा सर्वज्ञ कोणीच नाही तुम्ही धर्मराजाच्या मनातले सशय दूर करा. तुमच्यासारखे ज्ञानी लोकच अज्ञानी जीवाचे समाधान करू शकतात " तें ऐकून भीष्मपितामह म्हणाले, " भगवंता, केवळ तुमच्या कृपेने मी जिवत आहें एवढेच एरव्ही माझ्या शरीराला वेदना होत आहेत मन ठिकाणावर नाही बुद्धि स्थिर नाही मी बोलू शकत नाही जीभ अडखळत आहे अशा परिस्थितीत मी काय उपदेश करू शकणार ? तेव्हा मला क्षमा करा सर्व ज्ञानी लोकाचे तुम्ही गुरु आहात तुम्हीच धर्मराजाला काय उपदेश करावयाचा, तो करा " ते भाषण ऐकून संतुष्ट झालेल्या श्रीकृष्णानी भीष्मपितामहाना वर दिला, " तुम्हाला पीडा होणार नाही थकवा येणार नाही तहान आणि भूक याचा त्रास होणार नाही मन शात राहील बुद्धि स्थिर होऊन सर्व ज्ञान स्फुरण पावेल " श्रीकृष्णानी तसा वर दिल्यावर व्यास इत्यादि ऋषीना श्रीकृष्णाची पूजा केली. तोच आकाशातून पुष्प-वृष्टि झाली. स्वर्गात मगल वाद्यें वाजूं लागली अप्सरा गायन करू लागल्या सुगधी वायु वाहू लागला इतक्यात सूर्यास्ताची वेळ झालेली पाहून ऋषी सर्वांचा निरोप घेऊन आपापल्या स्थानी निघून गेले आणि पाण्डव, श्रीकृष्ण इत्यादि सर्वजण भीष्माना प्रदक्षिणा, नमस्कार करून रथात बसून हस्तिनापुराला आले निघताना सर्वांनीच उद्या पुन्हा येऊं असे सागितलें होते

# महाभारतसारके ' स्वर्गारोहणपर्व 'का सारांश-( हिंदी )

वैशम्पायनने आगे कहा—स्वर्गलोक पहुँचकर धर्मराजाने दुर्योधन आदि कौरवोंको बडेही ठाट बाटसे बैठे पाया। लेकिन पाडवोंको वहाँ न पाकर धर्मराजाने वहा रुकना स्वीकार नही किया। धर्मराजाके बतानेपर कि जहाँ मेरे कर्ण, भीम आदि बधु और द्रौपदी, सगे-सबधी हो वहा मुझे भी ले चलो, एक देवदूत उन्हे नरकके दर्शन कराने लिवा ले गया। उस नरकमे बहुतसे प्राणी भाँति-भातिकी यातनाओंको भुगत रहे थे। वहा मस्त दुर्गंधि उठ रही थी। वहासे लौटनेका विचार धर्मराजाके दिमागमे आतेही नरकमे बिलबिलानेवाले व्याकुल प्राणी कहने लगे, " धर्मराजा, कुछ समयतक ऐसेही खडे रहो। तुम्हारे शरीरपरसे आनेवाले समीरसे हमारी यातनाएँ दूर हो गई। हमे बहुतही सुख मिल रहा है।" उनके बोल सुनकर धर्मराजाने पूछा, " तुम कौन हो ?" तब " मै नकुल, मै द्रौपदी, मै कर्ण, मै अर्जुन, मै धृष्टद्युम्न " इस तरह आवाजे उठने लगी। उनको सुनकर धर्मराजा मनही मन सोचने लगे, इन्होने कुछ भी पातक नही किया तब इन्हे नरक यातना क्यो ? और उस पापी दुर्योधनको स्वर्गका सम्मान और सुख कैसे ? सोचते-सोचते वे कुपित भी हो गए। उन्होने देव-धर्मकी निदा की। देवदूतको बिदा किया और खुदके वहाँ रुकनेसे स्नेही-संबंधियों-को सुख पहुँच रहा ह, इस लिए वे वही खडे रहे। देवदूतके सारा समाचार देवा.र प्रकट करनेपर इन्द्रादिक देव धर्मराजाके पास आ गये, उसी दम नरक लुप्त हो गया। सुगधि वायु चलने लगी। अनतर इन्द्रने धर्मराजासे कहा, " तुम्हे स्वर्ग लोकही प्राप्त होनेवाला है, लेकिन सभी राजाओंको नरक जाही जाना पडता है। जिनका पुण्य अधिक रहता है उन्हे पहले नरक और बादमें स्वर्ग मिलता ह और जिनका पाप अधिक, उन्हे पहले स्वर्ग और बादमें नरक मिल जाता ह। तुमने अश्वत्थामाके मरनेका समाचार आशिक झूठ-सच बताया इसलिए तुम्हे यह झूठा नरक देखना पडा। यह सब आभासमात्र है। यथार्थमे कर्ण, अर्जुन आदि स्वर्गमे स्थित है। इस आकाशगंगामे अब स्नान करके उन अपने सगे-संबधियोसे मिलने प्रस्तुत हो जाओ।

# महाभारतसारः

## १२. शान्तिपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### कर्णार्थे युधिष्ठिरस्य शोकः, कर्णाय ब्राह्मणशापः

(अ. १) कृतोदकास्ते सुहृदां सर्वेषां पाण्डुनन्दनाः।
वैश०- विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः॥ १॥
तत्र ते सुमहात्मानो न्यवसन्पाण्डुनन्दनाः।
शौचं निवर्तयिष्यन्तो मासमात्रं बहिः पुरात्॥ २॥
कृतोदकं तु राजानं धर्मपुत्रं युधिष्ठिरम्।
अभिजग्मुर्महात्मानः सिद्धा ब्रह्मर्षिसत्तमाः॥ ३॥
तेऽभिगम्य महात्मानः पूजिताश्च यथाविधि।
पर्युपासन्यथान्यायं परिवार्य युधिष्ठिरम्॥ ४॥
पुण्ये भागीरथीतीरे शोकव्याकुलचेतसम्।
आश्वासयन्तो राजानं विप्राः शतसहस्रशः॥ ५॥
नारदस्त्वब्रवीत्काले धर्मपुत्रं युधिष्ठिरम्।
संभाष्य मुनिभिः सार्धं कृष्णद्वैपायनादिभिः॥ ६॥
भवता बाहुवीर्येण प्रसादान्माधवस्य च।
जितेयमवनिः कृत्स्ना धर्मेण च युधिष्ठिर॥ ७॥
दिष्ट्या मुक्तस्तु सङ्ग्रामादस्माल्लोकभयङ्करात्।
क्षत्रधर्मरतश्चापि कच्चिन्मोदसि पाण्डव॥ ८॥
कच्चिच्च निहतामित्रः प्रीणासि सुहृदो नृप।
कच्चिच्छ्रियमिमां प्राप्य न त्वां शोकः प्रबाधते॥ ९॥

युधि०— विजितेयं मही कृत्स्ना कृष्णबाहुबलाश्रयात् ।
ब्राह्मणाना प्रसादेन भीमार्जुनबलेन च ॥ १० ॥
इदं मम महद्दुःखं वर्तते हृदि नित्यदा ।
कृत्वा ज्ञातिक्षयमिमं महान्त लोभकारितम् ॥ ११ ॥
सौभद्रं द्रौपदेयांश्च घातयित्वा सुतान् प्रियान् ।
जयोऽयमजयाकारो भगवन्प्रतिभाति मे ॥ १२ ॥
इदमन्यत्तु भगवन् यत्त्वां वक्ष्यामि नारद ।
मन्त्रसंवरणेनास्मि कुन्त्या दुःखेन योजितः ॥ १३ ॥
यं सूतपुत्रं लोकोऽयं राधेयं चाभ्यमन्यत ।
सोऽर्जुनेन हतो वीरो भ्रात्रा भ्राता सहोदरः ॥ १४ ॥
अहं त्वज्ञासिषं पश्चात् स्वसोदर्यं द्विजोत्तम ।
पूर्वजं भ्रातरं कर्णं पृथाया वचनात् प्रभो ॥ १५ ॥
तेन मे दूयते तीव्रं हृदयं भ्रातृघातिनः ।
कर्णार्जुनसहायोऽहं जयेयमपि वासवम् ॥ १६ ॥
सभाया क्लिश्यमानस्य धार्तराष्ट्रैर्दुरात्मभिः ।
सहसोत्पतितः क्रोधः कर्णं दृष्ट्वा प्रशाम्यति ॥ १७ ॥
यदा ह्यस्य गिरो रूक्षाः शृणोमि कटुकोदया ।
सभायां गदतो द्यूते दुर्योधनहितैषिणः ॥ १८ ॥
तदा नश्यति मे रोषः पादौ तस्य निरीक्ष्य ह ।
कुन्त्या हि सदृशौ पादौ कर्णस्येति मतिर्मम ॥ १९ ॥
सादृश्यहेतुमन्विच्छन् पृथायास्तस्य चैव ह ।
कारणं नाधिगच्छामि कथंचिदपि चिन्तयन् ॥ २० ॥
कथं नु तस्य संग्रामे पृथिवी चक्रमग्रसत् ।
कथं नु शप्तो भ्राता मे तत्त्वं वक्तुमिहार्हसि ॥ २१ ॥
(अ. २) गुह्यमेतत्तु देवानां कथयिष्यामि तेऽनघ ।
नारद०— तन्निबोध महाबाहो यथा वृत्तमिदं पुरा ॥ २२ ॥

क्षत्रं स्वर्गं कथं गच्छेच्छस्त्रपूतमिति प्रभो।
संघर्षजननस्तस्मात्कन्यागर्भो विनिर्मितः ॥ २३ ॥
स बालस्तेजसा युक्तः सूतपुत्रत्वमागत ।
चकारांगिरसां श्रेष्ठाद्धनुर्वेदं गुरोस्तदा ॥ २४ ॥
वीर्याधिकमथालक्ष्य धनुर्वेदे धनञ्जयम्।
द्रोणं रहस्युपागम्य कर्णो वचनमब्रवीत्।
ब्रह्मास्त्रं वेत्तुमिच्छामि सरहस्यनिवर्तनम् ॥ २५ ॥
द्रोणस्तथोक्तः कर्णेन सापेक्षः फाल्गुनं प्रति।
दौरात्म्यं चैव कर्णस्य विदित्वा तमुवाच ह ॥ २६ ॥
ब्रह्मास्त्रं ब्राह्मणो विद्याद्यथावच्चरितव्रतः।
क्षत्रियो वा तपस्वी यो नान्यो विद्यात्कथंचन ॥ २७ ॥
इत्युक्तोऽङ्गिरसां श्रेष्ठमामन्त्र्य प्रतिपूज्य च।
जगाम सहसा रामं महेन्द्रं पर्वतं प्रति ॥ २८ ॥
स तु राममुपागम्य शिरसाऽभिप्रणम्य च।
ब्राह्मणो भार्गवोऽस्मीति गौरवेणाभ्यगच्छत ॥ २९ ॥
रामस्तं प्रतिजग्राह पृष्ट्वा गोत्रादि सर्वशः।
स तत्रेष्वस्त्रमकरोद्भृगुश्रेष्ठाद्यथाविधि ॥ ३० ॥
स कदाचित्समुद्रान्ते कस्यचिद्ब्रह्मवादिनः।
जघानाज्ञानतः पार्थ होमधेनुं यदृच्छया ॥ ३१ ॥
तं स विप्रोऽब्रवीत्क्रुद्धो वाचा निर्भर्त्सयन्निव ॥ ३२ ॥
येन विस्पर्धसे नित्यं यदर्थं घटसेऽनिशम्।
युध्यतस्तेन ते पाप भूमिश्चक्रं ग्रसिष्यति ॥ ३३ ॥
ततश्चक्रे महीग्रस्ते मूर्धानं ते विचेतसः।
पातयिष्यति विक्रम्य शत्रुर्गच्छ नराधम ॥ ३४ ॥
इत्युक्तो ब्राह्मणेनाथ कर्णो दैन्यादधोमुखः।
राममभ्यगमद्भीतस्तदेव मनसा स्मरन् ॥ ३५ ॥

## कर्णाय ब्रह्मास्त्रप्राप्तिः परशुरामशापश्च

(अ. २) कर्णस्य बाहुवीर्येण प्रणयेन दमेन च।
तुतोष भृगुशार्दूलो गुरुशुश्रूषया तथा ॥ ३६ ॥

तस्मै स विधिवत्कृत्स्नं ब्रह्मास्त्रं सनिवर्तनम्।
प्रोवाचाखिलमव्यग्रं तपस्वी तत्तपस्विने ॥ ३७ ॥

ततः कदाचिद्रामस्तु चरन्नाश्रममन्तिकात्।
कर्णेन सहितो धीमानुपवासेन कर्शितः ॥ ३८ ॥

सुष्वाप जामदग्न्यस्तु विश्रंभोत्पन्नसौहृदः।
कर्णस्योत्सङ्ग आधाय शिरः क्लान्तमना गुरुः ॥ ३९ ॥

अथ कृमिः श्लेष्ममेदोमांसशोणितभोजनः।
दारुणो दारुणस्पर्शः कर्णस्याभ्याशमागतः ॥ ४० ॥

स तस्योरुमथासाद्य बिभेद रुधिराशन ॥ ४१ ॥

कर्णस्तु वेदनां धैर्यादसह्यां विनिगृह्य ताम्।
अकम्पयन्नव्यथयन् धारयामास भार्गवम् ॥ ४२ ॥

यदाऽस्य रुधिरेणाङ्गं परिस्पृष्टं भृगूद्वहः।
तदाऽबुध्यत तेजस्वी संत्रस्तश्चेदमब्रवीत् ॥ ४३ ॥

अहोऽस्म्यशुचितां प्राप्त किमिदं क्रियते त्वया।
कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम ॥ ४४ ॥

तस्य कर्णस्तदाऽऽचष्ट कृमिणा परिभक्षणम्।
ददर्श समस्तं चापि कृमिं सूकरसंनिभम् ॥ ४५ ॥

अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिरिव संवृतम्।
रोमभिः सन्निरुद्धाङ्गमलर्कं नाम नामतः ॥ ४६ ॥

स दृष्टमात्रो रामेण कृमिः प्राणानवासृजत्।
ततोऽन्तरिक्षे ददृशे विश्वरूपः करालवान्।
राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः ॥ ४७ ॥

सोऽब्रवीदहमासं प्राक् दंशो नाम महासुरः।
पुरा देवयुगे तात भृगोस्तुल्यवया इव ॥ ४८ ॥

सोऽहं भृगोः सुदयितां भार्यामपहरं बलात्।
महर्षेरभिशापेन कृमिभूतोऽपतं भुवि ॥ ४९ ॥

शापस्यान्तो भवेद्ब्रह्मन्नित्येवं तमथाब्रुवम्।
भविता भार्गवाद्रामादिति मामब्रवीद्भृगुः ॥ ५० ॥

एवमुक्त्वा नमस्कृत्य ययौ रामं महासुर ।
रामः कर्णं च सक्रोधमिदं वचनमब्रवीत् ॥ ५१ ॥

अतिदुःखमिदं मूढ न जातु ब्राह्मणः सहेत्।
क्षत्रियस्येव ते धैर्यं कामया सत्यमुच्यताम् ॥ ५२ ॥

तमुवाच ततः कर्णः शापाद्भीतः प्रसादयन्।
ब्रह्मक्षत्रान्तरे जातं सूतं मां विद्धि भार्गव ॥ ५३ ॥

राधेयः कर्ण इति मां प्रवदन्ति जना भुवि।
प्रसादं कुरु मे ब्रह्मन्नस्त्रलुब्धस्य भार्गव ॥ ५४ ॥

पिता गुरुर्न संदेहो वेदविद्याप्रदः प्रभुः।
अतो भार्गव इत्युक्तं मया गोत्रं तवान्तिके ॥ ५५ ॥

तमुवाच भृगुश्रेष्ठः सरोषः प्रदहन्निव ॥ ५६ ॥

यस्मान्मिथ्योपचरितो ह्यस्त्रलोभादिह त्वया।
तस्मादेतन्न ते मूढ ब्रह्मास्त्रं प्रतिभास्यति।
अन्यत्र वधकालात्ते सदृशेन समीयुषः ॥ ५७ ॥

गच्छेदानीं न ते स्थानमनृतस्येह विद्यते ॥ ५८ ॥

एवमुक्तः स रामेण न्यायेनोपजगाम ह।
दुर्योधनमुपागम्य कृतास्त्रोऽस्मीति चाब्रवीत् ॥ ५९ ॥

(अ. ४) ततः कदाचिद्राजानः समाजग्मुः स्वयंवरे ।
कलिङ्गविषये राजन् राज्ञश्चित्राङ्गदस्य च ॥ ६० ॥

ततः समुपविष्टेषु तेषु राजसु भारत।
विवेश रङ्गं सा कन्या धात्रीवर्षवरान्विता ॥ ६१ ॥

ततः संश्राव्यमाणेषु राज्ञां नामसु भारत।
अत्यक्रामद्धार्तराष्ट्रं सा कन्या वरवर्णिनी ॥ ६२ ॥

दुर्योधनस्तु कौरव्यो नामर्षयत लङ्घनम्।
रथमारोप्य तां कन्यामाजहार नराधिप ॥ ६३ ॥

तमन्वगाद्रथी खड्गी बद्धगोधाङ्गुलित्रवान्।
कर्णः शस्त्रभृतां श्रेष्ठः पृष्ठतः पुरुषर्षभ ॥ ६४ ॥

ततो विमर्दः सुमहान् राज्ञामासीद्युयुत्सताम् ॥ ६५ ॥
कर्णस्तेषामापततामेकैकेन शरेण ह।
धनूंषि च शरव्रातान्पातयामास भूतले।
हतसूतांश्च भूयिष्ठानवजिग्ये नराधिपान् ॥ ६६ ॥

दुर्योधनस्तु कर्णेन पाल्यमानोऽभ्ययात्तदा।
हृष्टः कन्यामुपादाय नगरं नागसाह्वयम् ॥ ६७ ॥

## कर्णकृतः जरासन्धपराभवः

(अ. ५) आविष्कृतबलं कर्णं श्रुत्वा राजा स मागधः।
आह्वयद्द्वैरथेनाजौ जरासन्धो महीपतिः ॥ ६८ ॥

तयोः समभवद्युद्धं दिव्यास्त्रविदुषोर्द्वयोः।
युधि नानाप्रहरणैरन्योन्यमभिवर्षतोः ॥ ६९ ॥

क्षीणबाणौ विधनुषौ भग्नखड्गौ महीं गतौ।
बाहुभिः समसज्जेतामुभावपि बलान्वितौ ॥ ७० ॥

बाहुकण्टकयुद्धेन तस्य कर्णोऽथ युध्यतः।
बिभेद सन्धिं देहस्य जरया श्लेषितस्य हि ॥ ७१ ॥

स विकारं शरीरस्य दृष्ट्वा नृपतिरात्मनः।
प्रीतोऽस्मीत्यब्रवीत्कर्णं वैरमुत्सृज्य दूरतः ॥ ७२ ॥

प्रीत्या ददौ स कर्णाय मालिनीं नगरीमथ ।
अङ्गेषु नरशार्दूल स राजाऽसीत् सपत्नजित् ॥ ७३ ॥

पालयामास चम्पां च कर्णः परबलार्दनः ।
दुर्योधनस्यानुमते तवापि विदितं तथा ॥ ७४ ॥

एवं शस्त्रप्रतापेन प्रथितः सोऽभवत्क्षितौ ।
त्वद्धितार्थं सुरेन्द्रेण भिक्षितो वर्मकुण्डले ॥ ७५ ॥

ब्राह्मणस्याभिशापेन रामस्य च महात्मन ।
हतो वैकर्तन॰ कर्णो दिवाकरसमद्युति॰ ॥ ७६ ॥

न शोच्य॰ पुरुषव्याघ्र युद्धेन निधनं गतः ।
(अ. ६) एतावदुक्त्वा देवर्षिर्विरराम स नारदः ॥ ७७ ॥

(अ. ७) युधिष्ठिरस्तु धर्मात्मा नि॰श्वसंश्च पुन पुनः ।
दृष्ट्वाऽर्जुनमुवाचेदं वचन शोककर्शित॰ ॥ ७८ ॥

यद्भैक्ष्यमाचरिष्याम वृष्ण्यन्धकपुरे वयम् ।
ज्ञातीन्निष्पुरुषान्कृत्वा नेमां प्राप्स्याम दुर्गतिम् ॥ ७९ ॥

धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषम् ।
धिगस्त्वमर्षं येनेमामापदं गमिता वयम् ॥ ८० ॥

साधु क्षमा दमः शौचं वैराग्यं चाप्यमत्सरः ।
अहिंसा सत्यवचन नित्यानि वनचारिणाम् ॥ ८१ ॥

वयं तु लोभान्मोहाच्च दम्भं मान च संश्रिताः ।
इमामवस्थां सम्प्राता राज्यलाभबुभुत्सया ॥ ८२ ॥

न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
न गवाश्वेन सर्वेण ते त्याज्या य इमे हताः ॥ ८३ ॥

दुर्योधनकृते ह्येतत्कुलं नो विनिपातितम् ।
अवध्यानां वधं कृत्वा लोके प्राप्ता स्म वाच्यताम् ॥ ८४ ॥

धनञ्जय कृतं पापं कल्याणेनोपहन्यते ।
ख्यापनेनानुतापेन दानेन तपसाऽपि वा ॥ ८५ ॥

निवृत्त्या तीर्थगमनाच्छ्रुतिस्मृतिजपेन वा ।
त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ॥ ८६ ॥

त्यागवाञ्जन्ममरणे नाप्नोतीति श्रुतिर्यदा ।
प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ॥ ८७ ॥

स धनञ्जय निर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः ।
वनमामन्त्र्य वः सर्वान् गमिष्यामि परंतप ॥ ८८ ॥

प्रशाधि त्वमिमामुर्वीं क्षेमां निहतकण्टकाम् ।
न ममार्थोऽस्ति राज्येन भोगैर्वा कुरुनंदन ॥ ८९ ॥

एतावदुक्त्वा वचनं कुरुराजो युधिष्ठिरः ।
उपारमत्ततः पार्थः कनीयानभ्यभाषत ॥ ९० ॥

## अर्जुनादिकृतः युधिष्ठिरोपदेशः

(अ. ८) अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमम् ।
अर्जुन१-यत्कृत्वाऽमानुषं कर्म त्यजेथाः श्रियमुत्तमाम् ॥ ९१ ॥

शत्रून् हत्वा महीं लब्ध्वा स्वधर्मेणोपपादिताम् ।
एवंविधं कथं सर्वं त्यजेथा बुद्धिलाघवात् ॥ ९२ ॥

क्लीबस्य हि कुतो राज्यं दीर्घसूत्रस्य वा पुनः ।
किमर्थं च महीपालानवधीः क्रोधमूर्च्छितः ॥ ९३ ॥

कापालीं नृप पापिष्ठां वृत्तिमासाद्य जीवतः ।
सन्त्यज्य राज्यमृद्धं ते लोकोऽयं किं वदिष्यति ॥ ९४ ॥

अस्मिन् राजकुले जातो जित्वा कृत्स्नां वसुन्धराम् ।
धर्मार्थावखिलौ हित्वा वनं मौढ्यात्प्रतिष्ठसे ॥ ९५ ॥

अश्वस्तनमृषीणां हि विद्यते वेद तद्भवान् ।
यं त्विमं धर्ममित्याहुर्धनादेष प्रवर्तते ॥ ९६ ॥

धर्मं संहरते तस्य धनं हरति यस्य सः ।
ह्रियमाणे धने राजन् वयं कस्य क्षमेमहि ॥ ९७ ॥

अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वत. स्थितम्।
दरिद्रं पातकं लोके न तच्छंसितुमर्हति ॥ ९८ ॥

पतितः शोच्यते राजन्निर्धनश्चापि शोच्यते।
विशेषं नाधिगच्छामि पतितस्याधनस्य च ॥ ९९ ॥

अर्थेभ्यो हि विवृद्धेभ्य. संभृतेभ्यस्ततस्ततः।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगा. ॥ १०० ॥

अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप।
प्राणयात्रापि लोकस्य विना ह्यर्थं न सिद्ध्यति ॥ १०१ ॥

अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः।
विच्छिद्यन्ते क्रिया. सर्वा ग्रीष्मे कुसरितो यथा ॥ १०२ ॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमाँल्लोके यस्यार्था. स च पण्डितः ॥१०३॥

अधनेनार्थकामेन नार्थः शक्यो विधित्सितुम्।
अर्थैरर्था निबध्यन्ते गजैरिव महागजा. ॥ १०४ ॥

य. कृशार्थ. कृशगव. कृशभृत्य कृशातिथिः।
स वै राजन् कृशो नाम न शरीरकृशः कृशः ॥ १०५ ॥

एतावानेव वेदेषु निश्चय. कविभिः कृत.।
अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता।
सर्वथा धनमाहार्यं यष्टव्यं चापि यत्नतः ॥ १०६ ॥

शाश्वतोऽयं भूतिपथो नास्यान्तमनुशुश्रुम।
महान् दाशरथः पन्था मा राजन् कुपथं गमः ॥ १०७ ॥

(अ. ९) साधुगम्यमहं मार्गं न जातु त्वत्कृते पुनः।
युधि०- गच्छेयं तद्गमिष्यामि हित्वा ग्राम्यसुखान्युत ॥ १०८ ॥

हित्वा ग्राम्यसुखाचारं तप्यमानो महत्तपः।
अरण्ये फलमूलाशी चरिष्यामि मृगैः सह ॥ १०९ ॥

मनःकर्णसुखा नित्यं शृण्वन्नुच्चावचा गिरः।
मुदितानामरण्येषु वसतां मृगपक्षिणाम् ॥ ११० ॥

आजिघ्रन्पेशलान् गन्धान् फुल्लानां वृक्षवीरुधाम्।
नानारूपान् वने पश्यन् रमणीयान्वनौकस. ॥ १११ ॥

एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम्।
सेवमानः प्रतीक्षिष्ये देहस्यास्य समापनम् ॥ ११२ ॥

अथवैकोऽहमेकाहमेकैकस्मिन् वनस्पतौ।
चरन् भैक्ष्यं मुनिर्मुण्ड क्षपयिष्ये कलेवरम् ॥ ११३ ॥

विमुक्त. सर्वसङ्गेभ्यो व्यतीतः सर्ववागुराः।
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वन.।
वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि शाश्वतीम् ॥ ११४ ॥

तृष्णया हि महत्पापमज्ञानादस्मि कारित. ॥ ११५ ॥

जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम्।
अपारमिव चास्वस्थं संसारं त्यजतः सुखम् ॥ ११६ ॥

दिव पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु।
को हि नाम भवेनार्थी भवेत्कारणतत्त्ववित् ॥ ११७ ॥

तस्मात्प्रज्ञामृतमिद चिरान्मां प्रत्युपस्थितम्।
तत्प्राप्य प्रार्थये स्थानमव्ययं शाश्वतं ध्रुवम् ॥ ११८ ॥

(अ. १०) श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः।
भीम०– अनुवाकहता बुद्धिर्नैषा तत्वार्थदर्शिनी ॥ ११९ ॥

आलस्ये कृतचित्तस्य राजधर्मानसूयतः।
विनाशे धार्तराष्ट्राणां किं फलं भरतर्षभ ॥ १२० ॥

यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम्।
शस्त्रं नैव ग्रहीष्यामो न वधिष्याम कञ्चन।
भैक्ष्यमेवाचरिष्याम शरीरस्याविमोक्षणात् ॥ १२१ ॥

यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् ।
पङ्कदिग्धो निवर्तेत कर्मेदं नस्तथोपमम् ॥ १२२ ॥

यथाऽऽरुह्य महावृक्षमपहृत्य ततो मधु ।
अप्राश्य निधनं गच्छेत्कर्मेदं नस्तथोपमम् ॥ १२३ ॥

यथान्नं क्षुधितो लब्ध्वा न भुञ्जीयाद्यदृच्छया ।
कामीव कामिनीं लब्ध्वा कर्मेदं नस्तथोपमम् ॥ १२४ ॥

वयमेवात्र गर्ह्या हि यद्वयं मन्दचेतसम् ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत ॥ १२५ ॥

वय हि बाहुबलिनः कृतविद्या मनस्विनः ।
क्लीबस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा ॥ १२६ ॥

आपत्काले हि संन्यास· कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन वा ॥ १२७ ॥

तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते ।
धर्मव्यतिक्रम चैव मन्यन्ते सूक्ष्मदर्शिनः ॥ १२८ ॥

श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम् ।
वेदवादस्य विज्ञानं सत्याभासमिवानृतम् ॥ १२९ ॥

शक्यं पुनररण्येषु सुखमेकेन जीवितुम् ।
अबिभ्रता पुत्रपौत्रान्देवर्षीनतिथीन्पितॄन् ॥ १३० ॥

नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः ।
अथान्येन प्रकारेण पुण्यमाहुर्न तं जनाः ॥ १३१ ॥

यदि संन्यासतः सिद्धिं राजा कश्चिदवाप्नुयात् ।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥ १३२ ॥

एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः ।
अपरिग्रहवन्तश्च सततं ब्रह्मचारिणः ॥ १३३ ॥

अवेक्षस्व यथा स्वैः स्वै· कर्मभिर्व्यापृतं जगत् ।
तस्मात्कर्मैव कर्तव्य नास्ति सिद्धिरकर्मणः ॥ १३४ ॥

(अ. ११) अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
अर्जुन०- तापसैः सह संवाद शक्रस्य भरतर्षभ ॥ १३५ ॥
केचिद्गृहान्परित्यज्य वनमभ्यागमन् द्विजाः।
अजातश्मश्रवो मन्दाः कुले जाता. प्रवव्रजु. ॥ १३६ ॥
धर्मोऽयमिति मन्वानाः समृद्धा ब्रह्मचारिणः।
त्यक्त्वा भ्रातॄन् पितॄंश्चैव तानिन्द्रोऽन्वकृपायत ॥ १३७ ॥
तानावभाषे भगवान् पक्षी भूत्वा हिरण्मयः।
सुदुष्करं मनुष्यैश्च यत्कृतं विघसाशिभि ॥ १३८ ॥
पुण्यं भवति कर्मेदं प्रशस्तं चैव जीवितम्।
सिद्धार्थास्ते गतिं मुख्यां प्राप्ता धर्मपरायणाः ॥ १३९ ॥
ऋषय०-अहो बतायं शकुनिर्विघसाशान्प्रशंसति।
अस्मान्नूनमयं शास्ति वयं च विघसाशिनः ॥ १४० ॥
शकु०- नाहं युष्मान्प्रशंसामि पङ्कदिग्धान् रजस्वलान्।
उच्छिष्टभोजिनो मन्दानन्ये वै विघसाशिनः ॥ १४१ ॥
देववंशान्पितृवंशान् ब्रह्मवंशांश्च शाश्वतान्।
सन्त्यज्य मूढा वर्तन्ते ततो यान्त्यश्रुतीपथम् ॥ १४२ ॥
देववंशान् ब्रह्मवंशान् पितृवंशांश्च शाश्वतान्।
संविभज्य गुरोश्चर्यां तद्वै दुष्करमुच्यते ॥ १४३ ॥
देवा वै दुष्करं कृत्वा विभूतिं परमां गताः।
तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः ॥ १४४ ॥
दुराधर्षं पदं चैव गच्छन्ति विघसाशिनः ॥ १४५ ॥
सायंप्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि।
दत्वाऽतिथिभ्यो देवेभ्यः पितृभ्य. स्वजनाय च।
अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः ॥ १४६ ॥
त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः।
वसन्ति शाश्वतान्वर्षाञ्जना दुष्करकारिणः ॥ १४७ ॥

ततस्ते तद्वचः श्रुत्वा धर्मार्थसहितं हितम्।
उत्सृज्य नास्तीति गता गार्हस्थ्य समुपाश्रिताः॥ १४८॥
तस्मात्त्वमपि सर्वज्ञ धैर्यमालम्ब्य शाश्वतम्।
प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नरोत्तम॥ १४९॥
(अ. १२) विशाखयूपे देवानां सर्वेषामग्नयश्चिताः।
नकुल०— तस्माद्विद्धि महाराज देवाः कर्मफले स्थिताः॥ १५०॥
अनास्तिकानां भूतानां प्राणदाः पितरश्च ये।
तेऽपि कर्मैव कुर्वन्ति विधिं सम्प्रेक्ष्य पार्थिव॥ १५१॥
वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन्।
कृतात्मा स महाराज स वै त्यागी स्मृतो नरः॥ १५२॥
अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः।
आत्मत्यागी महाराज स त्यागी तामसो मतः॥ १५३॥
आश्रमांस्तुलया सर्वान् धृतानाहुर्मनीषिणः।
एकतश्च त्रयो राजन् गृहस्थाश्रम एकतः॥ १५४॥
समीक्ष्य तुलया पार्थ कामं स्वर्गं च भारत।
अयं पन्था महर्षीणामियं लोकविदां गतिः॥ १५५॥
इति यः कुरुते भावं स त्यागी भरतर्षभ।
न यः परित्यज्य गृहान् वनमेति विमूढवत्॥ १५६॥
अभिमानकृतं कर्म नैतत्फलवदुच्यते।
त्यागयुक्तं महाराज सर्वमेव महाफलम्॥ १५७॥
असृजद्धि प्रजा राजन्प्रजापतिरकल्मषः।
मां यक्ष्यन्तीति धर्मात्मा यज्ञैर्विविधदक्षिणैः॥ १५८॥
गृहस्थाश्रमिणस्तच्च यज्ञकर्म विरोधकम्।
तस्माद्गार्हस्थ्यमेवेह दुष्करं दुर्लभं तथा॥ १५९॥
तत्सम्प्राप्य गृहस्था ये पशुधान्यधनान्विताः।
न यजन्ते महाराज शाश्वतं तेषु किल्बिषम्॥ १६०॥

स रत्नानि विचित्राणि संहृतानि ततस्ततः।
मखेष्वनभिसत्यज्य नास्तिक्यमभिजल्पसि ॥ १६१ ॥

अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधाम्।
तीर्थेष्वनभिसंप्लुत्य प्रव्रजिष्यसि चेत्प्रभो ॥ १६२ ॥

छिन्नाभ्रमिव गन्तासि विलय मारुतेरितम्।
लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थित. ॥ १६३ ॥

अन्तर्बहिश्च यत्किंचिन्मनोव्यासङ्गकारकम्।
परित्यज्य भवेत्त्यागी न हित्वा प्रतितिष्ठति ॥ १६४ ॥

क्षात्रेण धर्मेण पराक्रमेण
जित्वा महीं मन्त्रविद्भ्यः प्रदाय।
नाकस्य पृष्ठेऽसि नरेन्द्र गन्ता
न शोचितव्यं भवताऽद्य पार्थ ॥ १६५ ॥

(अ. १३) न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत।
सह०- शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ १६६ ॥

बाह्यद्रव्यविमुक्तस्य शारीरेष्वनुगृध्यतः।
यो धर्मो यत्सुखं वा स्याद्द्विषतां तत्तथाऽस्तु नः ॥ १६७ ॥

शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासत.।
यो धर्मो यत्सुखं वा स्यात्सुहृदां तत्तथाऽस्तु नः ॥ १६८ ॥

द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥ १६९ ॥

अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत।
हत्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ॥ १७० ॥

अथापि च सहोत्पत्तिः सत्त्वस्य प्रलयस्तथा।
नष्टे शरीरे नष्टः स्याद्वृथा च स्यात् क्रियापथः ॥ १७१ ॥

तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः।
पन्था निषेवितः सद्भि. स निषेव्यो विजानता ॥ १७२ ॥

लब्ध्वाऽपि पृथिवीं कृत्स्नां सहस्थावरजंगमाम्।
न भुङ्क्ते यो नृप॰ सम्यङ्निष्फलं तस्य जीवितम्॥ १७३॥

अथवा वसतो राजन् वने वन्येन जीवतः।
द्रव्येषु यस्य ममता मृत्योरास्ये स वर्तते॥ १७४॥

बाह्यान्तरं च भूतानां स्वभावं पश्य भारत।
ये तु पश्यन्ति तद्भूतं मुच्यन्ते ते महाभयात्॥ १७५॥

भवान्पिता भवान् माता भवान् भ्राता भवान् गुरुः।
दुःखप्रलापानार्तस्य तन्मे त्व क्षन्तुमर्हसि॥ १७६॥

तथ्यं वा यदि वाऽतथ्यं यन्मयैतत्प्रभाषितम्।
तद्विद्धि पृथिवीपाल भक्त्या भरतसत्तम॥ १७७॥

(अ. १४) इमे ते भ्रातर॰ पार्थ शुष्यन्ते स्तोकका इव।
द्रौपदी०–वावाश्यमानास्तिष्ठन्ति न चैनानभिनन्दसे॥ १७८॥

नन्दयैतान्महाराज मत्तानिव महाद्विपान्।
उपपन्नेन वाक्येन सततं दुःखभागिनः॥ १७९॥

कथं द्वैतवने राजन् पूर्वमुक्त्वा तथा वच॰।
भ्रातॄनेतान् स्म सहितान् शीतवातातपार्दितान्।
वयं दुर्योधनं हत्वा मृधे भोक्ष्याम मेदिनीम्॥ १८०॥

यजतां विविधैर्यज्ञैः समृद्धैराप्तदक्षिणै॰।
वनवासकृतं दुःखं भविष्यति सुखाय वः॥ १८१॥

इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतां वर।
कथमद्य पुनर्वीर विनिहंसि मनांसि न॥ १८२॥

न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते।
न क्लीबस्य गृहे पुत्रा मत्स्याः पङ्क इवासते॥ १८३॥

नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते।
नादण्डस्य प्रजा राज्ञः सुखं विन्दन्ति भारत॥ १८४॥

असतां प्रतिषेधश्च सतां च परिपालनम्।
एष राज्ञां परो धर्मः समरे चापलायनम् ॥ १८५ ॥

यत्तद्बलममित्राणां तथा वीर्यसमुद्यतम्।
तत्त्वया निहतं वीर तस्माद्भुङ्क्ष्व वसुन्धराम् ॥ १८६ ॥

अनृतं नाब्रवीच्छ्वश्रूः सर्वज्ञा सर्वदर्शिनी।
युधिष्ठिरस्त्वां पाञ्चालि सुखे धास्यत्यनुत्तमे ॥ १८७ ॥

हत्वा राजसहस्राणि बहून्याशुपराक्रमः।
तद्व्यर्थं संप्रपश्यामि मोहात्तव जनाधिप ॥ १८८ ॥

येषामुन्मत्तको ज्येष्ठः सर्वे तेऽप्यनुसारिणः।
तवोन्मादान्महाराज सोन्मादाः सर्वपाण्डवाः ॥ १८९ ॥

यदि हि स्युरनुन्मत्ता भ्रातरस्ते नराधिप।
बद्ध्वा त्वां नास्तिकैः सार्धं प्रशासेयुर्वसुन्धराम् ॥ १९० ॥

प्रशाधि पृथिवीं देवीं प्रजा धर्मेण पालयन्।
सपर्वतवनद्वीपां मा राजन् विमना भव ॥ १९१ ॥

(अ. १५) दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।
अर्जुन०– दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ १९२ ॥

दण्डः संरक्षते धर्मं तथैवार्थं नराधिप।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥ १९३ ॥

राजदण्डभयादेके पापाः पापं न कुर्वते।
यमदण्डभयादेके परलोकभयादपि ॥ १९४ ॥

परस्परभयादेके पापाः पापं न कुर्वते।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ १९५ ॥

यस्माददान्तान् दमयत्यशिष्टान् दण्डयत्यपि।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ १९६ ॥

असंमोहाय मर्त्यानामर्थसंरक्षणाय च।
मर्यादा स्थापिता लोके दण्डसंज्ञा विशां पते ॥ १९७ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥ १९८ ॥

नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दुष्करम्।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥ १९९ ॥

न हि पश्यामि जीवन्तं लोके कंचिदहिंसया।
सत्त्वैः सत्त्वा हि जीवन्ति दुर्बलैर्बलवत्तराः ॥ २०० ॥

नकुलो मूषिकानत्ति बिडालो नकुलं तथा।
बिडालमत्ति श्वा राजन् श्वानं व्यालमृगस्तथा।
तानत्ति पुरुषः सर्वान् पश्य कालो यथागतः ॥ २०१ ॥

प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत्।
विधानं दैवविहितं तत्र विद्वान् न मुह्यति ॥ २०२ ॥

यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ॥ २०३ ॥

विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः।
विना वधं न कुर्वन्ति तापसाः प्राणयापनम् ॥ २०४ ॥

उदके बह्वः प्राणाः पृथिव्यां च फलेषु च।
न च कश्चिन्न तान् हन्ति किमन्यत्प्राणयापनात् ॥ २०५ ॥

सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित्।
पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्ययः ॥ २०६ ॥

दण्डनीत्यां प्रणीतायां सर्वे सिद्ध्यन्त्युपक्रमाः।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥ २०७ ॥

दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः।
जले मत्स्यानिवाऽभक्ष्यन् दुर्बलान्बलवत्तराः ॥ २०८ ॥

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्जनः।
दण्डस्य हि भयाद्भीतो भोगायैव प्रवर्तते ॥ २०९ ॥

चातुर्वर्ण्यप्रमोदाय सुनीतिनयनाय च।
दण्डो विधात्रा विहितो धर्मार्थौ भुवि रक्षितुम् ॥ २१० ॥

मा च ते निघ्नत शत्रून् मन्युर्भवतु पार्थिव।
न तत्र किल्बिष किंचित्कर्तुर्भवति भारत ॥ २११ ॥

आततायी हि यो हन्यादाततायिनमागतम्।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमार्च्छति ॥ २१२ ॥

(अ. २०) अजातशत्रो धर्मेण कृत्स्ना ते वसुधा जिता।
तां जित्वा च वृथा राजन्न परित्यक्तुमर्हसि ॥ २१३ ॥

चतुष्पदी हि निःश्रेणी ब्रह्मण्येव प्रतिष्ठिता।
तां क्रमेण महाबाहो यथावज्जय पार्थिव ॥ २१४ ॥

(अ. २२) क्षत्रधर्मेण धर्मज्ञ प्राप्य राज्यं सुदुर्लभम्।
जित्वा चारीन्नरश्रेष्ठ तप्यते किं भृशं भवान् ॥ २१५ ॥

## शङ्खलिखितकथा

(अ. २३) एवमुक्तस्तु कौन्तेयो गुडाकेशेन पाण्डवः।
नोवाच किंचित्कौरव्यस्ततो द्वैपायनोऽब्रवीत् ॥ २१६ ॥

व्यास०– बीभत्सोर्वचनं सौम्य सत्यमेतद्युधिष्ठिर।
शास्त्रदृष्टः परो धर्म स्थितो गार्हस्थ्यमाश्रितः ॥ २१७ ॥

स्वधर्मं चर धर्मज्ञ यथाशास्त्रं यथाविधि।
न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ॥ २१८ ॥

गृहस्थं हि सदा देवाः पितरोऽतिथयस्तथा।
भृत्याश्चैवोपजीवन्ति तान् भरस्व महीपते ॥ २१९ ॥

वयांसि पशवश्चैव भूतानि च जनाधिप।
गृहस्थैरेव धार्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमी ॥ २२० ॥

तपो यज्ञस्तथा विद्या भैक्ष्यमिन्द्रियसंयमः।
ध्यानमेकान्तशीलत्वं तुष्टिर्ज्ञानं च शक्तितः।
ब्राह्मणानां महाराज चेष्टा संसिद्धिकारिका ॥ २२१ ॥
क्षत्रियाणां तु वक्ष्यामि तवापि विदितं पुनः ॥ २२२ ॥

यज्ञो विद्या समुत्थानमसंतोषः श्रियं प्रति ।
दण्डधारणमुग्रत्वं प्रजानां परिपालनम् ॥ २२३ ॥

वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा ।
द्रविणोपार्जनं भूरि पात्रे च प्रतिपादनम् ॥ २२४ ॥

एतानि राज्ञां कर्माणि सुकृतानि विशाम्पते ।
इमं लोकममुं चैव साधयन्तीति नः श्रुतम् ॥ २२५ ॥

एषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते ।
बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः ॥ २२६ ॥

भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ २२७ ॥

सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात् ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ २२८ ॥

युधि०- भगवन्कर्मणा केन सुद्युम्नो वसुधाधिप ।
संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम् ॥ २२९ ॥

व्यास०-अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शङ्खश्च लिखितश्चास्तां भ्रातरौ संशितव्रतौ ॥ २३० ॥

तयोरावसथावास्तां रमणीयौ पृथक् पृथक् ।
नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ॥ २३१ ॥

ततः कदाचिल्लिखितः शङ्खस्याश्रममागतः ।
यदृच्छयाऽथ शङ्खोऽपि निष्क्रान्तोऽभवदाश्रमात् ॥ २३२ ॥

सोऽभिगम्याश्रमं भ्रातुः शङ्खस्य लिखितस्तदा ।
फलानि पातयामास सम्यक्परिणतान्युत ॥ २३३ ॥

तान्युपादाय विस्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागतः ॥ २३४ ॥

भक्षयन्तं तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फलान्यवाप्तानि हेतुना केन खादसि ॥ २३५ ॥

सोऽब्रवीद्भ्रातरं ज्येष्ठमुपसृत्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥ २३६ ॥

तमब्रवीत्तथा शङ्खस्तीव्ररोषसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ॥ २३७ ॥

गच्छ राजानमासाद्य स्वकर्म कथयस्व वै ।
अदत्तादानमेवं हि कृतं पार्थिवसत्तम ॥ २३८ ॥

स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय ।
शीघ्रं धारय चौरस्य मम दण्डं नराधिप ॥ २३९ ॥

इत्युक्तस्तस्य वचनात्सुद्युम्नं स नराधिपम् ।
अभ्यगच्छन्महाबाहो लिखितः संशितव्रतः ॥ २४० ॥

सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् ।
अभ्यगच्छत्सहामात्यः पद्भ्यामेव जनेश्वरः ॥ २४१ ॥

तमब्रवीत्समागम्य स राजा धर्मवित्तमम् ।
किमागमनमाचक्ष्व भगवन् कृतमेव तत् ॥ २४२ ॥

एवमुक्तः स विप्रर्षि सुद्युम्नमिदमब्रवीत् ।
प्रतिश्रुत्य करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥ २४३ ॥

अनिसृष्टानि गुरुणा फलानि मनुजर्षभ ।
भक्षितानि महाराज तत्र मां शाधि मा चिरम् ॥ २४४ ॥

सुद्युम्न०—प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ॥ २४५ ॥

स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।
ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥ २४६ ॥

व्यास०—स च्छंद्यमानो ब्रह्मर्षिः पार्थिवेन महात्मना ।
नान्यं स वरयामास तस्माद्दण्डादृते वरम् ॥ २४७ ॥

ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥ २४८ ॥

स गत्वा भ्रातरं शङ्खमार्तरूपोऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भवांस्तत् क्षन्तुमर्हति ॥ २४९ ॥

शंख०- न कुप्ये तव धर्मज्ञ न त्वं दूषयसे मम ।
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥ २५० ॥

त्वं गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि ।
देवानृषीन्पितॄंश्चैवं मा चाऽधर्मे मनः कृथाः ॥ २५१ ॥

तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा ।
अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे ॥ २५२ ॥

प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ ॥ २५३ ॥

ततस्तमब्रवीच्छंखस्तपसेदं कृतं मया ।
मा च तेऽत्र विशंकाऽभूद्दैवमत्र विधीयते ॥ २५४ ॥

लिखि०-किं तु नाहं त्वया पूतः पूर्वमेव महाद्युते ।
यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम ॥ २५५ ॥

शंख०- एवमेतन्मया कार्यं नाहं दण्डधरस्तव ।
स च पूतो नरपतिस्त्वं चापि पितृभिः सह ॥ २५६ ॥

व्यास०-स राजा पाण्डवश्रेष्ठ श्रेयान् वै तेन कर्मणा ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ २५७ ॥

एष धर्मः क्षत्रियाणां प्रजानां परिपालनम् ।
उत्पथोऽन्यो महाराज मा स्म शोके मनः कृथाः ॥ २५८ ॥

भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम ।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ॥ २५९ ॥

(अ. २४) अरण्ये वसतां तात भ्रातॄणां ते मनस्विनाम् ।
मनोरथा महाराज ये तत्रासन् युधिष्ठिर ॥ २६० ॥

तानिमे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः ।
प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः ॥ २६१ ॥

अरण्ये दुःखवसतिरनुभूता तपस्विभिः।
दुःखस्यान्ते नरव्याघ्र सुखान्यनुभवन्तु वै ॥ २६२ ॥

धर्ममर्थं च कामं च भ्रातृभिः सह भारत।
अनुभूय ततः पश्चात्प्रस्थाताऽसि विशां पते ॥ २६३ ॥

सर्वमेधाश्वमेधाभ्यां यजस्व कुरुनंदन।
ततः पश्चान्महाराज गमिष्यसि परां गतिम् ॥ २६४ ॥

भ्रातृंश्च सर्वान् क्रतुभिः संयोज्य बहुदक्षिणैः।
संप्राप्तः कीर्तिमतुला पाण्डवेय भविष्यसि ॥ २६५ ॥

(अ. २५) न पार्थिवमिदं राज्यं न भोगाश्च पृथग्विधाः।
युधि०– प्रीणयन्ति मनो मेऽद्य शोको मां रुन्धयत्ययम् ॥ २६६ ॥

श्रुत्वा वीरविहीनानामपुत्राणां च योषिताम्।
परिदेवयमानानां शान्ति नोपलभे मुने ॥ २६७ ॥

इत्युक्तः प्रत्युवाचेदं व्यासो योगविदां वरः।
युधिष्ठिरं महाप्राज्ञो धर्मज्ञो वेदपारगः ॥ २६८ ॥

न कर्मणा लभ्यते चेज्यया वा
नाप्यस्ति दाता पुरुषस्य कश्चित्।
पर्याययोगाद्विहितं विधात्रा
कालेन सर्वं लभते मनुष्यः ॥ २६९ ॥

न बुद्धिशास्त्राध्ययनेन शक्यं
प्राप्तुं विशेषं मनुजैरकाले।
मूर्खोऽपि चाप्नोति कदाचिदर्थान्
कालो हि कार्यं प्रति निर्विशेषः ॥ २७० ॥

नाभूतिकालेषु फलं ददन्ति
शिल्पानि मन्त्राश्च तथौषधानि।
तान्येव कालेन समाहितानि
सिद्ध्यन्ति वर्धन्ति च भूतिकाले ॥ २७१ ॥

नाकालतो भानुरुपैति योगं
नाकालतोऽस्तंगिरिमभ्युपैति ।
नाकालतो वर्धते हीयते च
चन्द्रः समुद्रोऽपि महोर्मिमाली ॥ २७२ ॥

सर्वानेवैष पर्यायो मर्त्यान्स्पृशति दुःसहः ।
कालेन परिपक्वा हि म्रियन्ते सर्वपार्थिवाः ॥ २७३ ॥

घ्नन्ति चान्यान्नरान् राजंस्तानप्यन्ये तथा नराः ।
संज्ञैषा लौकिकी राजन्न हिनस्ति न हन्यते ॥ २७४ ॥

हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरः ।
स्वभावतस्तु नियतौ भूतानां प्रभवाप्ययौ ॥ २७५ ॥

आत्मापि चायं न मम सर्वापि पृथिवी मम ।
यथा मम तथाऽन्येषामिति पश्यन्न मुह्यति ॥ २७६ ॥

शोकस्थानसहस्राणि हर्षस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ २७७ ॥

एवमेतानि कालेन प्रियद्वेष्याणि भागशः ।
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ॥ २७८ ॥

तृष्णार्तिप्रभवं दुःखं दुःखार्तिप्रभवं सुखम् ।
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ॥ २७९ ॥

न नित्यं लभते दुःखं न नित्यं लभते सुखम् ।
सुखमेव हि दुःखान्तं कदाचिद्दुःखतः सुखम् ।
तस्मादेतद्द्वयं जह्याद्य इच्छेच्छाश्वतं सुखम् ॥ २८० ॥

सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ २८१ ॥

ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
त एव सुखमेधन्ते मध्यमः क्लिश्यते जनः ॥ २८२ ॥

सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च।
पर्यायतः सर्वमवाप्नुवन्ति
तस्माद्धीरो नैव हृष्येन्न शोचेत् ॥ २८३ ॥

(अ. २७) सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ २८४ ॥

सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयम्।
भूतिः श्रीर्ह्रीर्धृतिः कीर्तिर्दक्षे वसति नालसे ॥ २८५ ॥

नालं सुखाय सुहृदो नालं दुःखाय शत्रवः।
न च प्रज्ञाऽलमर्थेभ्यो न सुखेभ्योऽप्यलं धनम् ॥ २८६ ॥

यथा सृष्टोऽसि कौन्तेय धात्रा कर्मसु तत्कुरु।
अत एव हि सिद्धिस्ते नेशस्त्वं कर्मणां नृप ॥ २८७ ॥

(अ. २८) उत्पन्नमिममात्मानं नरस्यानन्तरं ततः।
तानि तान्यनुवर्तन्ते दुःखानि च सुखानि च ॥ २८८ ॥

ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः।
परेण ते वर्षशतान्न भविष्यन्ति पार्थिव ॥ २८९ ॥

जरामृत्यू हि भूतानां खादितारौ वृकाविव।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ २९० ॥

न कश्चिज्जात्वतिक्रामेज्जरामृत्यू हि मानवः।
अपि सागरपर्यन्तां विजित्येमां वसुन्धराम् ॥ २९१ ॥

सुखं वा यदि वा दुःखं भूतानां पर्युपस्थितम्।
प्राप्तव्यमवशैः सर्वं परिहारो न विद्यते ॥ २९२ ॥

आसनं शयनं यानमुत्थानं पानभोजनम्।
नियतं सर्वभूतानां कालेनैव भवत्युत ॥ २९३ ॥

वैद्याश्चाप्यातुराः सन्ति बलवन्तश्च दुर्बलाः।
श्रीमन्तश्चापरे षण्ढा विचित्रः कालपर्ययः॥ २९४॥

सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम्।
नास्ति पुत्रः समृद्धानां विचित्रं विधिचेष्टितम्॥ २९५॥

अकिञ्चनाश्च दृश्यन्ते पुरुषाश्चिरजीविन ।
समृद्धे च कुले जाता विनश्यन्ति पतङ्गवत्॥ २९६॥

इति कालेन सर्वार्थानीप्सितानीप्सितानिह।
स्पृशन्ति सर्वभूतानि निमित्तं नोपलभ्यते॥ २९७॥

शीतमुष्णं तथा वर्षं कालेन परिवर्तते।
एवमेव मनुष्याणां सुखदुःखे नरर्षभ॥ २९८॥

नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः।
त्रायन्ते मृत्युनोपेतं जरया चापि मानवम्॥ २९९॥

ये चैव पुरुषाः स्त्रीभिर्गीतवाद्यैरुपस्थिताः।
ये चानाथाः परान्नादा कालस्तेषु समक्रियः॥ ३००॥

मातापितृसहस्राणि पुत्रदारशतानि च।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम्॥ ३०१॥

नैवास्य कश्चिद्भविता नायं भवति कस्यचित्।
पथि सङ्गतमेवेदं दारबन्धुसुहृज्जनैः॥ ३०२॥

क्वासे क्व च गमिष्यामि को न्वहं किमिहास्थितः।
कस्मात्किमनुशोचेयमित्येवं स्थापयेन्मनः॥ ३०३॥

नायमत्यन्तसंवासो लभ्यते जातु केनचित्।
अपि स्वेन शरीरेण किमुतान्येन केनचित्॥ ३०४॥

क्व नु तेऽद्य पिता राजन् क्व नु तेऽद्य पितामहाः।
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽनघ॥ ३०५॥

## षोडशराजकीयम्

(अ २९) अव्याहरति राजेन्द्रे धर्मपुत्रे युधिष्ठिरे।
वैश०- गुडाकेशो हृषीकेशमभ्यभाषत पाण्डव ॥ ३०६ ॥
ज्ञातिशोकाधिसंतप्तो धर्मपुत्रः परंतपः।
एष शोकार्णवे मग्नस्तमाश्वासय माधव ॥ ३०७ ॥
वासु०- मा कृथाः पुरुषव्याघ्र शोकं त्वं गात्रशोषणम्।
न हि ते सुलभा भूयो ये हताऽस्मिन् रणाजिरे ॥ ३०८ ॥
क्षत्रधर्मरताः शूरा वेदवेदाङ्गपारगाः।
प्राप्ता वीरगतिं पुण्यां तान्न शोचितुमर्हसि ॥ ३०९ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
सृञ्जयं पुत्रशोकार्तं यथाऽयं नारदोऽब्रवीत् ॥ ३१० ॥
महाभाग्यं पुरा राज्ञां कीर्त्यमानं मया शृणु।
गच्छावधानं नृपते ततो दुःखं प्रहास्यसि ॥ ३११ ॥
मृतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन्।
शममानय संतापं शृणु विस्तरशश्च मे ॥ ३१२ ॥
(१) आविक्षितं मरुत्तं च मृतं सृञ्जय शुश्रुम।
यः स्पर्धयाऽजयच्छक्रं देवराजं पुरन्दरम् ॥ ३१३ ॥
आविक्षितस्य वै सत्रे विश्वेदेवाः सभासदः।
मरुतः परिवेष्टारः साध्याश्चासन्महात्मनः ॥ ३१४ ॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ३१५ ॥
(२) सुहोत्रं चैवातिथिनं मृतं सृञ्जय शुश्रुम।
यस्मिन् हिरण्यं ववृषे मघवा परिवत्सरम् ॥ ३१६ ॥
सत्यनामा वसुमती यं प्राप्यासीज्जनाधिपम्।
हिरण्यमवहन्नद्यस्तस्मिञ्जनपदेश्वरे ॥ ३१७ ॥
(३) अङ्गं बृहद्रथं चैव मृतं सृञ्जय शुश्रुम ॥ ३१८ ॥

यः सहस्रं सहस्राणां गजानामतिपद्मिनाम् ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥ ३१९ ॥
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
यस्य यज्ञेषु राजेन्द्र शतसङ्ख्येषु वै पुरा ॥ ३२० ॥
न जातो जनिता नान्यः पुमान् यः संप्रदास्यति ।
यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु ॥ ३२१ ॥
(४) शिबिमौशीनरं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वां चर्मवत्समवेष्टयत् ॥ ३२२ ॥
महता रथघोषेण पृथिवीमनुनादयन् ।
एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ॥ ३२३ ॥
(५) भरतं चैव दौष्यन्तिं मृतं सृञ्जय शुश्रुम ।
शाकुन्तलं महात्मानं भूरिद्रविणसञ्चयम् ॥ ३२४ ॥
अश्वमेधसहस्रेण राजसूयशतेन च ।
इष्टवान्स महातेजा दौष्यन्तिर्भरतः पुरा ॥ ३२५ ॥
(६) रामं दाशरथिं चैव मृतं सृञ्जय शुश्रुम ।
योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ॥ ३२६ ॥
कालवर्षी च पर्जन्यः सस्यानि समपादयत् ।
नित्यं सुभिक्षमेवासीद्रामे राज्यं प्रशासति ॥ ३२७ ॥
स चतुर्दशवर्षाणि वने प्रोष्य महातपाः ।
दशाश्वमेधान् जारूथ्यानाजहार निरर्गलान् ॥ ३२८ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत् ॥ ३२९ ॥
(७) भगीरथं च राजानं मृतं सृञ्जय शुश्रुम ।
यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ॥ ३३० ॥
भूरिदक्षिणमिक्ष्वाकुं यजमानं भगीरथम् ।
त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ॥ ३३१ ॥

(८) दिलीपं च महात्मानं मृतं सृञ्जय शुश्रुम।
यस्य कर्माणि भूरीणि कथयन्ति द्विजातय ॥ ३३२ ॥
यस्येह यजमानस्य यज्ञे यज्ञे पुरोहित•।
सहस्त्र वारणान्हैमान्दक्षिणामत्यकालयत् ॥ ३३३ ॥
त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने।
स्वाध्यायघोपो ज्याघोपो दीयतामिति वै त्रयः ॥ ३३४ ॥

(९) मान्धातारं यौवनाश्वं मृतं सृञ्जय शुश्रुम।
यं देवा मरुतो गर्भं पितु• पार्श्वादपाहरन् ॥ ३३५ ॥
यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम्।
अन्योन्यमब्रुवन्देवा• कमयं धास्यतीति वै ॥ ३३६ ॥
मामेव धास्यतीत्येवमिन्द्रोऽथाभ्युपपद्यत।
मान्धातेति ततस्तस्य नाम चक्रे शतक्रतुः ॥ ३३७ ॥
ततस्तु पयसो धारां पुष्टिहेतोर्महात्मन•।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥ ३३८ ॥
यत्र सूर्य उदेति स्म यत्र च प्रतितिष्ठति।
सर्वं तद्यौवनाश्वस्य मान्धातु• क्षेत्रमुच्यते ॥ ३३९ ॥

(१०) ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम।
य इमां पृथिवीं कृत्स्नां विजित्य सहसागराम् ॥ ३४० ॥
शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्महीम्।
ईजानः क्रतुभिर्मुख्यैः पर्यगच्छद्वसुन्धराम् ॥ ३४१ ॥
इष्ट्वा क्रतुसहस्रेण वाजपेयशतेन च।
तर्पयामास विप्रेन्द्रांस्त्रिभिः काञ्चनपर्वतै ॥ ३४२ ॥

(११) अम्बरीषं च नाभाग मृतं सृञ्जय शुश्रुम।
यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तमम् ॥ ३४३ ॥
यः सहस्रं सहस्राणां राज्ञामयुत याजिनाम्।
ईजानो वितते यज्ञे ब्राह्मणेभ्य• सुसंहितः ॥ ३४४ ॥

नैतत्पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे।
इत्यम्बरीषं नाभागिमन्वमोदन्त दक्षिणाः ॥ ३४५ ॥

(१२) शशविन्दुं चैत्ररथं मृतं शुश्रुम सृञ्जय।
यस्य भार्यासहस्राणां शतमासीन्महात्मनः ॥ ३४६ ॥

सहस्रं तु सहस्राणां यस्यासन् शशबिन्दवाः।
हिरण्यकवचा· सर्वे सर्वे चोत्तमधन्विनः ॥ ३४७ ॥

शतं कन्या राजपुत्रमेकैकं पृथगन्वयुः।
कन्यां कन्यां शतं नागा नागं नागं शतं रथाः ॥ ३४८ ॥

रथे रथे शतं चाश्वा देशजा हेममालिनः।
अश्वे अश्वे शतं गावो गवां तद्वदजाविकम् ॥ ३४९ ॥

एतद्धनमपर्यन्तमश्वमेधे महामखे।
शशबिन्दुर्महाराज ब्राह्मणेभ्यः समार्पयत् ॥ ३५० ॥

(१३) गयं चामूर्तरयसं मृतं शुश्रुम सृञ्जय।
यः स वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥ ३५१ ॥

शतं गवां सहस्राणि शतमश्वतराणि च।
उत्थायोत्थाय वै प्रादात्सहस्रं परिवत्सरान् ॥ ३५२ ॥

सौवर्णां पृथिवीं कृत्वा दशव्यामां द्विरायताम्।
दक्षिणामददद्राजा वाजिमेधे महाक्रतौ ॥ ३५३ ॥

(१४) रन्तिदेवं च सांकृत्यं मृतं सृञ्जय शुश्रुम।
सम्यगाराध्य यः शक्राद्वरं लेभे महातपाः ॥ ३५४ ॥

अन्नं च नो बहु भवेदतिथींश्च लभेमहि।
श्रद्धा च नो मा व्यगमन्मा च याचिष्म कञ्चन ॥ ३५५ ॥

उपातिष्ठन्त पशवः स्वयं तं संशितव्रतम्।
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ॥ ३५६ ॥

महानदी चर्मराशेरुत्क्लेदात् ससृजे यतः।
ततश्चर्मण्वतीत्येवं विख्याता सा महानदी ॥ ३५७ ॥

घटाः पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च ।
नासीत्किंचिदसौवर्णं रन्तिदेवस्य धीमत. ॥ ३५८ ॥

(१५) सगरं च महात्मानं मृतं शुश्रुम सृञ्जय ।
षष्टिः पुत्रसहस्राणि यं यान्तमनुजग्मिरे ॥ ३५९ ॥
खानयामास यः कोपात्पृथिवीं सागराङ्किताम् ।
यस्य नाम्ना समुद्रश्च सागरत्वमुपागत. ॥ ३६० ॥

(१६) राजान च पृथुं वैन्यं मृतं शुश्रुम सृञ्जय ।
यमभ्यषिञ्चन्संभूय महारण्ये महर्षयः ॥ ३६१ ॥
प्रथयिष्यति वै लोकान्पृथुरित्येव शब्दितः ।
क्षताद्यो वै त्रायतीति स तस्मात्क्षत्रिय. स्मृतः ॥ ३६२ ॥
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥ ३६३ ॥
अकृष्टपच्या पृथिवी पुटके पुटके मधु ।
सर्वा द्रोणदुघा गावो वैन्यस्यासन्प्रशासतः ॥ ३६४ ॥
आपस्तस्तंभिरे चास्य समुद्रमभियास्यत ।
सरितश्चानुदीर्यन्त ध्वजभङ्गश्च नाभवत् ॥ ३६५ ॥
हैरण्यांस्त्रिनलोत्सेधान्पर्वतानेकविंशतिम् ।
ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे ॥ ३६६ ॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथा. ॥ ३६७ ॥

सृञ्जय०— अमोघदर्शिन्मम चेत्प्रसादं
सन्तापदग्धस्य विभो प्रकुर्या' ।
सुतस्य सञ्जीवनमद्य मे स्या-
त्तव प्रसादात्सुतसङ्गमश्च ॥ ३६८ ॥

नारद०— यस्ते पुत्रो गमितोऽयं विजात.
स्वर्णष्ठीवी यमदात्पर्वतस्ते ।
पुनस्तु ते पुत्रमहं ददामि
हिरण्यनाभं वर्षसहस्रिणं च ॥ ३६९ ॥

## नारदपर्वतोपाख्यानम्

पर्वतेन किमर्थं वा दत्तस्तेन ममार च ।
कथं वा काञ्चनष्ठीवीत्येतदिच्छामि वेदितुम् ॥ ३७० ॥
अत्र ते वर्णयिष्यामि यथावृत्तं जनेश्वर ॥ ३७१ ॥
नारद: पर्वतश्चैव द्वावृषी लोकसत्तमौ ।
मातुलो भागिनेयश्च देवलोकादिहागतौ ॥ ३७२ ॥
विहर्तुकामौ सम्प्रीत्या मानुषेषु पुरा विभो ।
प्रीतिमन्तौ मुदा युक्तौ समयं चैव चक्रतु: ॥ ३७३ ॥
यो भवेद्धृदि संकल्पः शुभो वा यदि वाऽशुभ: ।
अन्योन्यस्य स आख्येयोऽमृषा शापोऽन्यथा भवेत् ॥३७४॥
तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ ।
सृञ्जय श्वैत्यमभ्येत्य राजानमिदमूचतुः ॥ ३७५ ॥
आवां भवति वत्स्यावः कञ्चित्कालं हिताय ते ।
तथेति कृत्वा राजा तौ सत्कृत्योपचचार ह ॥ ३७६ ॥
ततः कदाचित्तौ राजा महात्मानौ तपोधनौ ।
अब्रवीत्परमप्रीतः सुतेयं वरवर्णिनी ॥ ३७७ ॥
एकैव मम कन्यैषा युवां परिचरिष्यति ।
सुकुमारी कुमारी च पद्मकिञ्जल्कसुप्रभा ॥ ३७८ ॥
परमं सौम्यमित्युक्तं ताभ्यां राजा शशास ताम् ।
कन्ये विप्रावुपचर देववत्पितृवच्च ह ॥ ३७९ ॥
सा तु कन्या तथेत्युक्त्वा पितरं धर्मचारिणी ।
यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह ॥ ३८० ॥
तस्यास्तेनोपचारेण रूपेणाप्रतिमेन च ।
नारदं हृच्छयस्तूर्णं सहसैवाभ्यपद्यत ॥ ३८१ ॥
ववृधे हि ततस्तस्य हृदि कामो महात्मनः ।
न च तं भागिनेयाय पर्वताय महात्मने ।
शशंस हृच्छयं तीव्रं व्रीडमानः स धर्मवित् ॥ ३८२ ॥

तपसा चेङ्गितैश्चैव पर्वतोऽथ बुबोध तम् ।
कामार्तं नारदं क्रुद्ध शशापैनं ततो भृशम् ॥ ३८३ ॥
ब्रह्मचारी गुरुर्यस्मात्तपस्वी ब्राह्मणश्च सन् ।
अकार्षीः समयभ्रंशमावाभ्या य कृतो मिथ ॥ ३८४ ॥
शप्स्ये तस्मात्सुसंक्रुद्धो भवन्तं तं निबोध मे ।
सुकुमारी च ते भार्या भविष्यति न संशयः ॥ ३८५ ॥
वानरं चैव ते रूपं विवाहात्प्रभृति प्रभो ।
संद्रक्ष्यन्ति नराश्चान्ये स्वरूपेण विनाशनम् ॥ ३८६ ॥
स तद्वाक्यं तु विज्ञाय नारद पर्वतं तथा ।
अशपत्तमपि क्रोधाद्भागिनेयं स मातुल ॥ ३८७ ॥
तपसा ब्रह्मचर्येण सत्येन च दमेन च ।
युक्तोऽपि नित्यधर्मश्च न वै स्वर्गमवाप्स्यसि ॥ ३८८ ॥
तौ तु शप्त्वा भृशं क्रुद्धौ परस्परममर्षणौ ।
प्रतिजग्मतुरन्योन्यं क्रुद्धाविव गजोत्तमौ ॥ ३८९ ॥
पर्वतः पृथिवीं कृत्स्ना विचचार महामतिः ।
पूज्यमानो यथान्यायं तेजसा स्वेन भारत ॥ ३९० ॥
अथ तामलभत्कन्यां नारदः सृञ्जयात्मजाम् ।
धर्मेण विप्रप्रवर सुकुमारीमनिन्दिताम् ॥ ३९१ ॥
सा तु कन्या यथाशापं नारदं तं ददर्श ह ॥ ३९२ ॥
पाणिग्रहणमन्त्राणां नियोगादेव नारदम् ।
सुकुमारी च देवर्षिं वानरप्रतिमाननम् ।
नैवावमन्यत तदा प्रीतिमत्येव चाभवत् ॥ ३९३ ॥
उपतस्थे च भर्तारं न चान्यं मनसाऽप्यगात् ॥ ३९४ ॥
ततः कदाचिद्भगवान्पर्वतोऽनुचचार ह ।
वनं विरहितं किंचित्तत्रापश्यत्स नारदम् ।
निवर्तयेतां तौ शापावन्योन्येन तदा मुनी ॥ ३९५ ॥

श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणम् ।
सुकुमारी प्रदुद्राव परपत्यभिशङ्कया ॥ ३९६ ॥

तां पर्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम् ।
अब्रवीत्तव भर्तैष नात्र कार्या विचारणा ॥ ३९७ ॥

सानुनीता बहुविधं पर्वतेन महात्मना ।
शापदोषं च तं भर्तुः श्रुत्वा प्रकृतिमागता ॥ ३९८ ॥

पर्वतोऽथ ययौ स्वर्गं नारदोऽभ्यगमद्गृहान् ॥ ३९९ ॥

प्रत्यक्षकर्ता सर्वस्य नारदो भगवानृषिः ।
एष वक्ष्यति ते पृष्टो यथावृत्तं नरोत्तम ॥ ४०० ॥

(अ. ३१) ततो राजा पाण्डुसुतो नारदं प्रत्यभाषत ।
भगवञ्छ्रोतुमिच्छामि सुवर्णष्ठीविसंभवम् ॥ ४०१ ॥

नारद०– एवमेतन्महाबाहो यथाऽयं केशवोऽब्रवीत् ।
कार्यस्यास्य तु यच्छेषं तत्ते वक्ष्यामि पृच्छतः ॥ ४०२ ॥

अहं च पर्वतश्चैव स्वस्रीयो मे महामुनिः ।
वस्तुकामावभिगतौ सृञ्जयं जयतां वरम् ॥ ४०३ ॥

तत्रावां पूजितौ तेन विधिदृष्टेन कर्मणा ।
सर्वकामैः सुविहितौ निवसावोऽस्य वेश्मनि ॥ ४०४ ॥

तत आहूय राजानं सृञ्जयं जयतां वरम् ।
पर्वतोऽनुमतो वाक्यमुवाच कुरुपुङ्गव ॥ ४०५ ॥

प्रीतौ स्वो नृप सत्कारैर्भवदार्जवसंभृतैः ।
आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ॥ ४०६ ॥

सृञ्जय०– अभीप्सामि सुतं वीरं वीर्यवन्तं दृढव्रतम् ।
आयुष्मन्तं महाभागं देवराजसमद्युतिम् ॥ ४०७ ॥

पर्वत०– भविष्यत्येष ते कामो न त्वायुष्मान्भविष्यति ।
देवराजाभिभूत्यर्थं सङ्कल्पो ह्येष ते हृदि ॥ ४०८ ॥

ख्यातः सुवर्णष्ठीवीति पुत्रस्तव भविष्यति।
रक्ष्यश्च देवराजात्स देवराजसमद्युतिः॥ ४०९॥

तच्छ्रुत्वा सृञ्जयो वाक्यं पर्वतस्य महात्मनः।
प्रसादयामास तदा नैतदेवं भवेदिति॥ ४१०॥

आयुष्मान्मे भवेत्पुत्रो भवतस्तपसा मुने।
न च तं पर्वतः किंचिदुवाचेन्द्रव्यपेक्षया॥ ४११॥

तमहं नृपतिं दीनमब्रुवं पुनरेव च।
स्मर्तव्योऽस्मि महाराज दर्शयिष्यामि ते सुतम्॥ ४१२॥

अहं ते दयितं पुत्रं प्रेतराजवशं गतम्।
पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते॥ ४१३॥

एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितम्।
सृञ्जयश्च यथाकामं प्रविवेश स्वमन्दिरम्॥ ४१४॥

सृञ्जयस्याथ राजर्षे कस्मिंश्चित्कालपर्यये।
जज्ञे पुत्रो महावीर्यस्तेजसा प्रज्वलन्निव॥ ४१५॥

ववृधे स यथाकालं सरसीव महोत्पलम्।
बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत्॥ ४१६॥

तदद्भुततमं लोके पप्रथे कुरुसत्तम।
बुबुधे तच्च देवेन्द्रो वरदानं महर्षितः॥ ४१७॥

चोदयामास तद्वज्रं दिव्यास्त्रं मूर्तिमत्स्थितम्।
व्याघ्रो भूत्वा जहीमं त्वं राजपुत्रमिति प्रभो॥ ४१८॥

एवमुक्तस्तु शक्रेण वज्रः परपुरंजयः।
कुमारमन्तरप्रेक्षी नित्यमेवान्वपद्यत॥ ४१९॥

सृञ्जयोऽपि सुतं प्राप्य देवराजसमद्युतिम्।
हृष्टः सान्तःपुरो राजा वननित्यो बभूव ह॥ ४२०॥

ततो भागीरथीतीरे कदाचिन्निर्जने वने।
धात्रीद्वितीयो बालः स क्रीडार्थं पर्यधावत॥ ४२१॥

पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः।
सहसोत्पतितं व्याघ्रमाससाद महाबलम्॥ ४२२॥

स बालस्तेन निष्पिष्टो वेपमानो नृपात्मजः।
व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे॥ ४२३॥

हत्वा तु राजपुत्रं स तत्रैवान्तरधीयत।
शार्दूलो देवराजस्य माययाऽन्तर्हितस्तदा॥ ४२४॥

धात्र्यास्तु निनदं श्रुत्वा रुदत्याः परमार्तवत्।
अभ्यधावत तं देशं स्वयमेव महीपतिः॥ ४२५॥

स तमुत्सङ्गमारोप्य परिपीडितमानसः।
पुत्रं रुधिरसंसिक्तं पर्यदेवयदातुरः॥ ४२६॥

ततस्ता मातरस्तस्य रुदत्यः शोककर्शिताः।
अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः॥ ४२७॥

ततः स राजा सस्मार मामेव गतमानसः।
तदाहं चिन्तनं ज्ञात्वा गतवांस्तस्य दर्शनम्॥ ४२८॥

मयैतानि च वाक्यानि श्रावितः शोकलालसः।
यानि ते यदुवीरेण कथितानि महीपते॥ ४२९॥

सञ्जीवितश्चापि पुनर्वासवानुमते तदा।
भवितव्यं तथा तच्च न तच्छक्यमतोऽन्यथा॥ ४३०॥

तत ऊर्ध्वं कुमारस्तु स्वर्णष्ठीवी महायशाः।
चित्तं प्रसादयामास पितुर्मातुश्च वीर्यवान्॥ ४३१॥

कारयामास राज्यं च पितरि स्वर्गते नृप।
वर्षाणां शतमेकं च सहस्रं भीमविक्रमः॥ ४३२॥

तत ईजे महायज्ञैर्बहुभिर्भूरिदक्षिणैः।
तर्पयामास देवांश्च पितॄंश्चैव महाद्युतिः॥ ४३३॥

उत्पाद्य च बहून्पुत्रान्कुलसन्तानकारिणः।
कालेन महता राजन् कालधर्ममुपेयिवान्॥ ४३४॥

स त्वं राजेन्द्र सज्ञातं शोकमेनं निवर्तय ।
यथा त्वां केशव प्राह व्यासश्च सुमहातपाः ॥ ४३५ ॥

पितृपैतामहं राज्यमास्थाय धुरमुद्वह ।
इष्ट्वा पुण्यैर्महायज्ञैरिष्टं लोकमवाप्स्यसि ॥ ४३६ ॥

(अ. ३२) तूष्णीभूतं तु राजानं शोचमानं युधिष्ठिरम् ।
वैश०— तपस्वी धर्मतत्त्वज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ४३७ ॥

व्यास०—प्रजानां पालनं धर्मो राज्ञां राजीवलोचन ।
धर्मः प्रमाणं लोकस्य नित्यं धर्मानुवर्तिनः ॥ ४३८ ॥

अनुतिष्ठस्व तद्राजन्पितृपैतामहं पदम् ।
ब्राह्मणेषु तपो धर्मः स नित्यो वेदनिश्चितः ॥ ४३९ ॥

तत्प्रमाणं ब्राह्मणानां शाश्वतं भरतर्षभ ।
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ॥ ४४० ॥

धर्मं विनश्यमानं हि यो न रक्षेत्स धर्महा ।
ते त्वया धर्महन्तारो निहताः सपदानुगाः ॥ ४४१ ॥

स्वधर्मे वर्तमानस्त्वं किं नु शोचसि पाण्डव ।
राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ॥ ४४२ ॥

(अ. ३३) इदं तु श्रूयते पार्थ युद्धे देवासुरे पुरा ।
असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः ॥ ४४३ ॥

तेषामपि श्रीनिमित्तं महानासीत्समुच्छ्रयः ।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत्किल ॥ ४४४ ॥

एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम् ।
जघ्नुर्दैत्यांस्तथा देवास्त्रिदिवं चाभिलेभिरे ॥ ४४५ ॥

तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः ।
संश्रिता दानवानां वै साह्यार्थं दर्पमोहिताः ॥ ४४६ ॥

शालावृका इति ख्यातास्त्रिषु लोकेषु भारत ।
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥ ४४७ ॥

धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः ॥ ४४८ ॥
एकं हत्वा यदि कुले शिष्टानां स्यादनामयम्।
कुलं हत्वा च राष्ट्रं च न तद्वृत्तोपघातकम् ॥ ४४९ ॥
अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप।
धर्मश्चाधर्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता ॥ ४५० ॥
तस्मात्संस्तंभयात्मानं श्रुतवानसि पाण्डव।
देवैः पूर्वगतं मार्गमनुयातोऽसि भारत ॥ ४५१ ॥
न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ।
भ्रातॄनाश्वासयैतांस्त्वं सुहृदश्च परन्तप ॥ ४५२ ॥
यो हि पापसमारम्भे कार्ये तद्भावभावितः।
कुर्वन्नपि तथैव स्यात्कृत्वा च निरपत्रपः ॥ ४५३ ॥
तस्मिंस्तत्कलुषं सर्वं समाप्तमिति शब्दितम्।
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः ॥ ४५४ ॥
त्वं तु शुक्लाभिजातीयः परदोषेण कारितः।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥ ४५५ ॥
अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम्।
तमाहर महाराज विपाप्मैवं भविष्यसि ॥ ४५६ ॥
मरुद्भिः सह जित्वाऽरीन् भगवान्पाकशासनः।
एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ॥ ४५७ ॥
धूतपाप्मा जितस्वर्गो लोकान्प्राप्य सुखोदयान्।
मरुद्गणैर्वृतः शक्रः शुशुभे भासयन्दिशः ॥ ४५८ ॥
स्वर्गे लोके महीयन्तमप्सरोभिः शचीपतिम्।
ऋषयः पर्युपासन्ते देवाश्च विबुधेश्वरम् ॥ ४५९ ॥
सेयं त्वामनुसम्प्राप्ता विक्रमेण वसुन्धरा।
निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ ॥ ४६० ॥

तेषां पुराणि राष्ट्राणि गत्वा राजन्सुहृद्वृतः।
भ्रातॄन्पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ॥ ४६१ ॥

बालानपि च गर्भस्थान्सान्त्वेन समुदाचरन्।
रञ्जयन्प्रकृतीः सर्वाः परिपाहि वसुन्धराम् ॥ ४६२ ॥

कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय।
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यति ॥ ४६३ ॥

एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत।
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा ॥ ४६४ ॥

## युधिष्ठिरादीनां हस्तिनापुरागमनम्, चार्वाकराक्षसवधः

(अ ३७) श्रोतुमिच्छामि भगवन् विस्तरेण महामुने।
युधि०— राजधर्मान् द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान् ॥ ४६५ ॥

आपत्सु च यथा नीतिः प्रणेतव्या द्विजोत्तम।
धर्म्यमालक्ष्य पन्थानं विजयेयं कथं महीम् ॥ ४६६ ॥

धर्मचर्या च राज्यं च नित्यमेव विरुध्यते।
एवं मुह्यति मे चेतश्चिन्तयानस्य नित्यशः ॥ ४६७ ॥

तमुवाच महाराज व्यासो वेदविदां वरः।
नारदं समभिप्रेक्ष्य सर्वज्ञानां पुरातनम् ॥ ४६८ ॥

श्रोतुमिच्छसि चेद्धर्मं निखिलेन नराधिप।
प्रैहि भीष्मं महाबाहो वृद्धं कुरुपितामहम् ॥ ४६९ ॥

स ते धर्मरहस्येषु संशयान्मनसि स्थितान्।
छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वधर्मवित् ॥ ४७० ॥

युधि०— घातयित्वा तमेवाजौ छलेनाऽजिह्मयोधिनम्।
उपसंप्रष्टुमर्हामि तमहं केन हेतुना ॥ ४७१ ॥

ततस्तं नृपतिश्रेष्ठं चातुर्वर्ण्यहितेप्सया।
पुनराह महाबाहुर्यदुश्रेष्ठो महामतिः ॥ ४७२ ॥

नेदानीमतिनिर्बन्धं शोके त्वं कर्तुमर्हसि।
यदाह भगवान् व्यासस्तत्कुरुष्व नृपोत्तम ॥ ४७३ ॥

ब्राह्मणास्त्वां महाबाहो भ्रातरश्च महौजसः।
पर्जन्यमिव घर्मान्ते नाथमाना उपासते ॥ ४७४ ॥

सुहृदामस्मदादीनां द्रौपद्याश्च परंतप।
कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु ॥ ४७५ ॥

एवमुक्तः स कृष्णेन राजा राजीवलोचनः।
हितार्थं सर्वलोकस्य समुत्तस्थौ महामनाः ॥ ४७६ ॥

सोऽनुनीतो नरव्याघ्र विष्टरश्रवसा स्वयम्।
व्यजहान्मानसं दुःखं सन्तापं च महायशा ॥ ४७७ ॥

स तैः परिवृतो राजा नक्षत्रैरिव चंद्रमाः।
धृतराष्ट्रं पुरस्कृत्य स्वपुरं प्रविवेश ह ॥ ४७८ ॥

प्रविविक्षुः स धर्मज्ञः कुन्तीपुत्रो युधिष्ठिरः।
अर्चयामास देवांश्च ब्राह्मणांश्च सहस्रशः ॥ ४७९ ॥

ततो नवं रथं शुभ्रं कम्बलाजिनसंवृतम्।
युक्तं षोडशभिर्गोभिः पाण्डुरैः शुभलक्षणैः ॥ ४८० ॥

मन्त्रैरभ्यर्चितं पुण्यैः स्तूयमानश्च बन्दिभिः।
आरुरोह यथा देवः सोमोऽमृतमयं रथम् ॥ ४८१ ॥

जग्राह रश्मीन्कौन्तेयो भीमो भीमपराक्रमः।
अर्जुनः पाण्डुरं छत्रं धारयामास भानुमत् ॥ ४८२ ॥

ध्रियमाणं च तच्छत्रं पाण्डुरं रथमूर्धनि।
शुशुभे तारकाकीर्णं सितमभ्रमिवाम्बरे ॥ ४८३ ॥

चामरव्यजने त्वस्य वीरौ जगृहतुस्तदा।
चन्द्ररश्मिप्रभे शुभ्रे माद्रीपुत्रावलङ्कृते ॥ ४८४ ॥

आस्थाय तु रथं शुभ्रं युक्तमश्वैर्मनोजवैः।
अन्वयात्पृष्ठतो राजन् युयुत्सुः पाण्डवाग्रजम् ॥ ४८५ ॥

रथं हेममयं शुभ्रं शैब्यसुग्रीवयोजितम्।
सह सात्यकिना कृष्ण. समास्थायाऽन्वयात्कुरून्॥ ४८६॥

नरयानेन तु ज्येष्ठ पिता पार्थस्य भारत।
अग्रतो धर्मराजस्य गान्धारीसहितो ययौ॥ ४८७॥

कुरुस्त्रियश्च ताः सर्वाः कुन्ती कृष्णा तथैव च।
यानैरुच्चावचैर्जग्मुर्विदुरेण पुरस्कृताः॥ ४८८॥

ततो रथाश्च बहुला नागाश्वसमलङ्कृताः।
पादाताश्च हयाश्चैव पृष्ठत. समनुव्रजन्॥ ४८९॥

ततो वैतालिकैः सूतैर्मागधैश्च सुभाषितै.।
स्तूयमानो ययौ राजा नगरं नागसाह्वयम्॥ ४९०॥

अभियाने तु पार्थस्य नरैर्नगरवासिभि.।
नगरं राजमार्गाश्च यथावत्समलङ्कृताः॥ ४९१॥

पाण्डुरेण च माल्येन पताकाभिश्च मेदिनी।
संस्कृतो राजमार्गोऽभूद्धूपनैश्च प्रधूपितः॥ ४९२॥

अथ चूर्णैश्च गन्धानां नानापुष्पप्रियङ्गुभिः।
माल्यदामभिरासक्तै राजवेश्माभिसंवृत्तम्॥ ४९३॥

कुम्भाश्च नगरद्वारि वारिपूर्णा नवा दृढाः।
सिताः सुमनसो गौराः स्थापितास्तत्र तत्र ह॥ ४९४॥

यथा स्वलङ्कृतं द्वारं नगरं पाण्डुनन्दनः।
स्तूयमानः शुभैर्वाक्यै प्रविवेश सुहृद्वृत॥ ४९५॥

(अ. ३८) प्रवेशने तु पार्थानां जनानां पुरवासिनाम्।
दिदृक्षूणां सहस्राणि समाजग्मुः सहस्रशः॥ ४९६॥

स राजमार्गः शुशुभे समलङ्कृतचत्वर.।
यथा चन्द्रोदये राजन्वर्धमानो महोदधिः॥ ४९७॥

गृहाणि राजमार्गेषु रत्नवन्ति महान्ति च।
प्राकम्पन्तीव भारेण स्त्रीणां पूर्णानि भारत॥ ४९८॥

ताः शनैरिव सव्रीडं प्रशशंसुर्युधिष्ठिरम् ।
भीमसेनार्जुनौ चैव माद्रीपुत्रौ च पाण्डवौ ॥ ४९९ ॥

प्रशंसावचनैस्तासां मिथःशब्दैश्च भारत ।
प्रीतिजैश्च तदा शब्दैः पुरमासीत्समाकुलम् ॥ ५०० ॥

तमतीत्य यथायुक्त राजमार्ग युधिष्ठिरः ।
अलङ्कृतं शोभमानमुपायाद्राजवेश्म ह ॥ ५०१ ॥

आशीर्वादान्द्विजैरुक्तान् प्रतिगृह्य समन्ततः ।
प्रविश्याभ्यन्तरं श्रीमान् दैवतान्यभिगम्य च ॥ ५०२ ॥

पूजयामास रत्नैश्च गन्धमाल्यैश्च सर्वशः ।
निश्चक्राम ततः श्रीमान् पुनरेव महायशाः ॥ ५०३ ॥

तत पुण्याहघोषोऽभूद्दिवं स्तब्ध्वेव भारत ।
सुहृदां प्रीतिजननः पुण्य श्रुतिसुखावहः ॥ ५०४ ॥

ततो दुन्दुभिनिर्घोषः शङ्खानां च मनोरमः ।
जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप ॥ ५०५ ॥

निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः ।
राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् ॥ ५०६ ॥

इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि ।
धिग् भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै ॥ ५०७ ॥

किं तेन स्याद्धि कौन्तेय कृत्वेवं ज्ञातिसङ्क्षयम् ।
घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम् ॥ ५०८ ॥

युधि०— प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः ।
प्रत्यासन्नव्यसनिनं न मां धिक्कर्तुमर्हथ ॥ ५०९ ॥

ब्राह्म०— एष दुर्योधनसखा चार्वाको नाम राक्षसः ।
परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ ५१० ॥

न वयं ब्रूम धर्मात्मन् व्येतु ते भयमीदृशम् ।
उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिः सह ॥ ५११ ॥

ततस्ते ब्राह्मणाः सर्वे हुङ्कारैः क्रोधमूर्च्छिता ।
निर्भर्त्सयन्तः शुचयो निजघ्नु· पापराक्षसम् ॥ ५१२ ॥

पूजिताश्च ययुर्विप्रा राजानमभिनन्द्य तम् ।
राजा च हर्षमापेदे पाण्डव· ससुहृज्जनः ॥ ५१३ ॥

(अ. ३९) पुरा कृतयुगे राजंश्चार्वाको नाम राक्षसः ।
वासु०— तपस्तेपे महाबाहो बदर्यां बहुवार्षिकम् ॥ ५१४ ॥

वरेण च्छन्द्यमानश्च ब्रह्मणा च पुन· पुनः ।
अभयं सर्वभूतेभ्यो वरयामास भारत ॥ ५१५ ॥

द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम् ॥ ५१६ ॥

अभयं सर्वभूतेभ्यो ददौ तस्मै जगत्पतिः ॥ ५१७ ॥

स तु लब्धवरः पापो देवानमितविक्रमः ।
राक्षसस्तापयामास तीव्रकर्मा महाबल ॥ ५१८ ॥

ततो देवाः समेताश्च ब्रह्माणमिदमब्रुवन् ।
वधाय रक्षसस्तस्य बलविप्रकृतास्तदा ॥ ५१९ ॥

तानुवाच ततो देवो विहितस्तत्र वै मया ।
यथाऽस्य भविता मृत्युरचिरेणेति भारत ॥ ५२० ॥

राजा दुर्योधनो नाम सखाऽस्य भविता नृषु ।
तस्य स्नेहावबद्धोऽसौ ब्राह्मणानवमंस्यते ॥ ५२१ ॥

तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिता ।
धक्ष्यन्ति वाग्बला पापं ततो नाशं गमिष्यति ॥ ५२२ ॥

स एष निहतः शेते ब्रह्मदण्डेन राक्षसः ।
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ॥ ५२३ ॥

हतास्ते क्षत्रधर्मेण ज्ञातयस्तव पार्थिव ।
स्वर्गताश्च महात्मानो वीराः क्षत्रियपुङ्गवाः ॥ ५२४ ॥

स त्वमातिष्ठ कार्याणि मा तेऽभूद्ग्लानिरच्युत ।
शत्रून् जहि प्रजा रक्ष द्विजांश्च परिपूजय ॥ ५२५ ॥

## युधिष्ठिरस्य राज्याभिषेकः

१(अ. ४०) ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः।
काञ्चने प्राङ्मुखो हृष्टो न्यषीदत्परमासने ॥ ५२६ ॥

तमेवाभिमुखौ पीठे प्रदीप्ते काञ्चने शुभे।
सात्यकिर्वासुदेवश्च निषीदतुररिन्दमौ ॥ ५२७ ॥

मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ।
निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः ॥ ५२८ ॥

दान्ते सिंहासने शुभ्रे जाम्बूनदविभूषिते।
पृथाऽपि सहदेवेन सहास्ते नकुलेन च ॥ ५२९ ॥

सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः।
निषेदुर्ज्वलनाकारेष्वासनेषु पृथक् पृथक् ॥ ५३० ॥

युयुत्सुः सञ्जयश्चैव गान्धारी च यशस्विनी।
धृतराष्ट्रो यतो राजा ततः सर्वे समाविशन् ॥ ५३१ ॥

तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत्।
स्वस्तिकानक्षतान्भूमिं सुवर्णं रजतं मणिम् ॥ ५३२ ॥

ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितम्।
ददृशुर्धर्मराजानमादाय बहुमङ्गलम् ॥ ५३३ ॥

पृथिवीं च सुवर्णं च रत्नानि विविधानि च।
आभिषेचनिकं भाण्डं सर्वसंभारसंभृतम् ॥ ५३४ ॥

काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः।
पूर्णकुम्भाः सुमनसो लाजा बर्हींषि गोरसम् ॥ ५३५ ॥

शमीपिप्पलपालाशसमिधो मधुसर्पिषी।
स्रुव औदुम्बरः शङ्खस्तथा हेमविभूषितः ॥ ५३६ ॥

दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः।
प्रागुदक्प्रवणे वेदीं लक्षणेनोपलिख्य च ॥ ५३७ ॥

व्याघ्रचर्मोत्तरे शुक्ले सर्वतोभद्र आसने।
दृढपादप्रतिष्ठाने हुताशनसमत्विषि ॥ ५३८ ॥
उपवेश्य महात्मानं कृष्णां च द्रुपदात्मजाम्।
जुहाव पावकं धीमान्विधिमन्त्रपुरस्कृतम् ॥ ५३९ ॥
तत उत्थाय दाशार्हः शङ्खमादाय पूजितम्।
अभ्यषिञ्चत्पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम् ॥ ५४० ॥
धृतराष्ट्रश्च राजर्षिः सर्वाः प्रकृतयस्तथा ॥ ५४१ ॥
अनुज्ञातोऽथ कृष्णेन भ्रातृभिः सह पाण्डवः।
पाञ्चजन्याभिषिक्तश्च राजाऽमृतमुखोऽभवत् ॥ ५४२ ॥
ततोऽनुवादयामासुः पणवानकदुन्दुभीन् ॥ ५४३ ॥
धर्मराजोऽपि तत्सर्वं प्रतिजग्राह धर्मतः।
पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः ॥ ५४४ ॥
ततो निष्कसहस्रेण ब्राह्मणान् स्वस्ति वाचयन्।
वेदाध्ययनसंपन्नान्धृतिशीलसमन्वितान् ॥ ५४५ ॥
ते प्रीता ब्राह्मणा राजन् स्वस्त्यूचुर्जयमेव च।
हंसा इव च नर्दन्तः प्रशशंसुर्युधिष्ठिरम् ॥ ५४६ ॥
युधिष्ठिर महाबाहो दिष्ट्या जयसि पाण्डव।
दिष्ट्या स्वधर्मं प्राप्तोऽसि विक्रमेण महाद्युते ॥ ५४७ ॥
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः।
त्वं चापि कुशली राजन् माद्रीपुत्रौ च पाण्डवौ ॥ ५४८ ॥
मुक्ता वीरक्षयात्तस्मात्सङ्ग्रामाद्विजितद्विषः।
क्षिप्रमुत्तरकार्याणि कुरु सर्वाणि भारत ॥ ५४९ ॥
ततः प्रत्यर्चितः सद्भिर्धर्मराजो युधिष्ठिर।
प्रतिपेदे महद्राज्यं सुहृद्भिः सह भारत ॥ ५५० ॥
(अ. ४१) प्रकृतीनां च तद्वाक्यं देशकालोपबृंहितम्।
श्रुत्वा युधिष्ठिरो राजा सोऽन्तरं प्रत्यभाषत ॥ ५५१ ॥

धन्याः पाण्डुसुता नूनं येषां ब्राह्मणपुङ्गवाः ।
तथ्यान्वाऽप्यथवाऽतथ्यान् गुणानाहुः समागताः ॥ ५५२ ॥

अनुग्राह्या वयं नूनं भवतामिति मे मतिः ।
यदेवं गुणसंपन्नानस्मान्ब्रूथ विमत्सराः ॥ ५५३ ॥

धृतराष्ट्रो महाराजः पिता मे दैवतं परम् ।
शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकाङ्क्षिभिः ॥ ५५४ ॥

एतदर्थं हि जीवामि कृत्वा ज्ञातिवधं महत् ।
अस्य शुश्रूषणं कार्यं मया नित्यमतन्द्रिणा ॥ ५५५ ॥

यदि चाहमनुग्राह्यो भवतां सुहृदां तथा ।
धृतराष्ट्रे यथापूर्वं वृत्तिं वर्तितुमर्हथ ॥ ५५६ ॥

एष नाथो हि जगतो भवतां च मया सह ।
अस्यैव पृथिवी कृत्स्ना पाण्डवाः सर्व एव च ॥ ५५७ ॥

एतन्मनसि कर्तव्यं भवद्भिर्वचनं मम ॥ ५५८ ॥

अनुज्ञाप्याथ तान् राजा यथेष्टं गम्यतामिति ।
पौरजानपदान्सर्वान्विसृज्य कुरुनन्दनः ।
यौवराज्येन कौन्तेयं भीमसेनमयोजयत् ॥ ५५९ ॥

मन्त्रे च निश्चये चैव षाड्गुण्यस्य च चिन्तने ।
विदुरं बुद्धिसंपन्नं प्रीतिमान्स समादिशत् ॥ ५६० ॥

कृताकृतपरिज्ञाने तथाऽऽयव्ययचिन्तने ।
सञ्जयं योजयामास वृद्धं सर्वगुणैर्युतम् ॥ ५६१ ॥

बलस्य परिमाणे च भक्तवेतनयोस्तथा ।
नकुलं व्यादिशद्राजा कर्मणां चान्ववेक्षणे ॥ ५६२ ॥

परचक्रोपरोधे च दुष्टानां चावमर्दने ।
युधिष्ठिरो महाराज फाल्गुनं व्यादिदेश ह ॥ ५६३ ॥

द्विजानां देवकार्येषु कार्येष्वन्येषु चैव ह ।
धौम्यं पुरोधसां श्रेष्ठं नित्यमेव समादिशत् ॥ ५६४ ॥

सहदेवं समीपस्थं नित्यमेव समादिशत् ।
तेन गोप्यो हि नृपतिः सर्वावस्थो विशाम्पते ॥ ५६५ ॥

यान्यानमन्यद्योग्यांश्च येषु येष्विह कर्मसु ।
तांस्तांस्तेष्वेव युयुजे प्रीयमाणो महीपतिः ॥ ५६६ ॥

विदुरं सञ्जयं चैव युयुत्सुं च महामतिम् ।
अब्रवीत्परवीरघ्नो धर्मात्मा धर्मवत्सलः ॥ ५६७ ॥

उत्थायोत्थाय यत्कार्यमस्य राज्ञः पितुर्मम ।
सर्वं भवद्भिः कर्तव्यमप्रमत्तैर्यथायथम् ॥ ५६८ ॥

पौरजानपदानां च यानि कार्याणि सर्वशः ।
राजानं समनुज्ञाप्य तानि कार्याणि भागशः ॥ ५६९ ॥

(अ. ४२) ततो युधिष्ठिरो राजा ज्ञातीनां ये हता युधि ।
श्राद्धानि कारयामास तेषां पृथगुदारधीः ॥ ५७० ॥

धृतराष्ट्रो ददौ राजा पुत्राणामौर्ध्वदेहिकम् ।
सर्वकामगुणोपेतमन्नं गाश्च धनानि च ।
रत्नानि च विचित्राणि महार्हाणि महायशाः ॥ ५७१ ॥

युधिष्ठिरस्तु द्रोणस्य कर्णस्य च महात्मनः ।
धृष्टद्युम्नाभिमन्युभ्यां हैडिम्बस्य च रक्षसः ॥ ५७२ ॥

विराटप्रभृतीनां च सुहृदामुपकारिणाम् ।
द्रुपदद्रौपदेयानां द्रौपद्या सहितो ददौ ॥ ५७३ ॥

ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन् ।
धनै रत्नैश्च गोभिश्च वस्त्रैश्च समतर्पयत् ॥ ५७४ ॥

ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः ।
उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्वदेहिकम् ॥ ५७५ ॥

सभाः प्रपाश्च विविधास्तटाकानि च पाण्डवः ।
सुहृदां कारयामास सर्वेषामौर्ध्वदेहिकम् ॥ ५७६ ॥

स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यताम् ।
कृतकृत्योऽभवद्राजा प्रजा धर्मेण पालयन् ॥ ५७७ ॥
धृतराष्ट्रं यथापूर्वं गान्धारीं विदुरं तथा ।
सर्वांश्च कौरवान्मान्यान्भृत्यांश्च समपूजयत् ॥ ५७८ ॥
याश्च तत्र स्त्रिय काश्चिद्धतवीरा हतात्मजाः ।
सर्वास्ताः कौरवो राजा संपूज्यापालयद्घृणी ॥ ५७९ ॥
दीनान्धकृपणानां च गृहाच्छादनभोजनैः ।
आनृशंस्यपरो राजा चकारानुग्रहं प्रभु· ॥ ५८० ॥
स विजित्य महीं कृत्स्नामानृण्यं प्राप्य वैरिषु ।
नि·सपत्न· सुखी राजा विजहार युधिष्ठिर ॥ ५८१ ॥
(अ ४४) ततो युधिष्ठिरो राजा भीमं भीमपराक्रमम् ।
सान्त्वयन्नब्रवीच्छ्रीमानर्जुनं यमजौ तथा ॥ ५८२ ॥
शत्रुभिर्विविधैः शस्त्रैः क्षतदेहा महारणे ।
श्रान्ता भवन्तः सुभृशं तापिता· शोकमन्युभिः ॥ ५८३ ॥
अरण्ये दु·खवसतीर्मत्कृते भरतर्षभाः ।
भवद्भिरनुभूता हि यथा कुपुरुषैस्तथा ॥ ५८४ ॥
यथासुखं यथाजोषं जयोऽयमनुभूयताम् ।
विश्रान्तांल्लब्धविज्ञानान् श्वः समेताऽस्मि व पुनः ॥५८५॥
ततो दुर्योधनगृहं प्रासादैरुपशोभितम् ।
बहुरत्नसमाकीर्णं दासीदाससमाकुलम् ॥ ५८६ ॥
धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः ।
प्रतिपेदे महाबाहुर्मन्दिरं मघवानिव ॥ ५८७ ॥
यथा दुर्योधनगृहं तथा दु·शासनस्य तु ।
प्रतिपेदे महाबाहुरर्जुनो राजशासनात् ॥ ५८८ ॥
दुर्मर्षणस्य भवनं दुःशासनगृहाद्वरम् ।
नकुलाय वरार्हाय कर्शिताय महावने ।
ददौ प्रीतो महाराज धर्मपुत्रो युधिष्ठिरः ॥ ५८९ ॥

दुर्मुखस्य च वेश्माग्र्यं श्रीमत्कनकभूषणम्।
प्रददौ सहदेवाय संततं प्रियकारिणे ॥ ५९० ॥
युयुत्सुर्विदुरश्चैव सञ्जयश्च विशा पते।
सुधर्मा चैव धौम्यश्च यथास्वान् जग्मुरालयान् ॥ ५९१ ॥
सह सात्यकिना शौरिरर्जुनस्य निवेशनम्।
विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव ॥ ५९२ ॥
तत्र भक्ष्यान्नपानैस्ते मुदिताः सुसुखोषिताः।
सुखप्रबुद्धा राजानमुपतस्थुर्युधिष्ठिरम् ॥ ५९३ ॥

## श्रीकृष्णादीनां भीष्मसमीपे गमनम्, रामोपाख्यानम्

(अ. ४५) प्राप्य राज्यं महाराज कुन्तीपुत्रो युधिष्ठिरः।
चातुर्वर्ण्यं यथायोग्यं स्वे स्वे स्थाने न्यवेशयत् ॥ ५९४ ॥
कृपाय च महाराज गुरुवृत्तिमवर्तत।
विदुराय च राजाऽसौ पूजां चक्रे यतव्रतः ॥ ५९५ ॥
भक्ष्यान्नपानैर्विविधैर्वासोभिः शयनासनैः।
सर्वान्संतोषयामास संश्रितान्ददतां वर. ॥ ५९६ ॥
धृतराष्ट्राय तद्राज्यं गान्धार्यै विदुराय च।
निवेद्य सुस्थवद्राजा सुखमास्ते युधिष्ठिरः ॥ ५९७ ॥
तथा सर्वं स नगरं प्रसाद्य भरतर्षभ।
वासुदेवं महात्मानमभ्यगच्छत् कृताञ्जलि ॥ ५९८ ॥
सोऽभिगम्य महात्मानं विष्णुं पुरुषविग्रहम्।
उवाच मधुरं राजा स्मितपूर्वमिदं तदा ॥ ५९९ ॥
सुखेन ते निशा कच्चिद्व्युष्टा बुद्धिमतां वर।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत ॥ ६०० ॥
वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता।
तव प्रसादाद्भगवस्त्रिलोकगतिविक्रम।
जयं प्राप्ता यशश्चाग्र्यं न च धर्मच्युता वयम् ॥ ६०१ ॥

तं तथा भाषमाणं तु धर्मराजमरिन्दमम् ।
नोवाच भगवान्किंचिद्ध्यानमेवान्वपद्यत ॥ ६०२ ॥

(अ. ४६) किमिदं परमाश्चर्यं ध्यायस्यमितविक्रम ।
युधि०- कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण ॥ ६०३ ॥
चतुर्थं ध्यानमार्गं त्वमालम्ब्य पुरुषर्षभ ।
अपक्रान्तो यतो देवस्तेन मे विस्मितं मनः ॥ ६०४ ॥

यथा दीपो निवातस्थो निरिङ्गो ज्वलते पुनः ।
तथाऽसि भगवन्देव पाषाण इव निश्चल ॥ ६०५ ॥
यदि श्रोतुमिहार्हामि न रहस्यं च ते यदि ।
छिन्धि मे संशयं देव प्रपन्नायाभियाचते ॥ ६०६ ॥
त्वं हि कर्ता विकर्ता च क्षरं चैवाक्षरं च हि ।
अनादिनिधनश्चाद्यस्त्वमेव पुरुषोत्तम ॥ ६०७ ॥

त्वत्प्रपन्नाय भक्ताय शिरसा प्रणताय च ।
ध्यानस्यास्य यथातत्त्वं ब्रूहि धर्मभृतां वर ॥ ६०८ ॥
वासु०- शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः ।
मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥ ६०९ ॥
स हि भूतं भविष्यच्च भवच्च भरतर्षभ ।
वेत्ति धर्मविदां श्रेष्ठं तमस्मि मनसा गतः ॥ ६१० ॥

तस्मिन्हि पुरुषव्याघ्रे कर्मभिः स्वैर्दिवं गते ।
भविष्यति मही पार्थ नष्टचन्द्रेव शर्वरी ॥ ६११ ॥
तद्युधिष्ठिर गाङ्गेयं भीष्मं भीमपराक्रमम् ।
अभिगम्योपसङ्गृह्य पृच्छ यत्ते मनोगतम् ॥ ६१२ ॥

तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरन्धरे ।
ज्ञानान्यस्तं गमिष्यन्ति तस्मात्त्वां चोदयाम्यहम् ॥ ६१३ ॥
तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमम् ।
साश्रुकण्ठ स धर्मज्ञो जनार्दनमुवाच ह ॥ ६१४ ॥

यदि त्वनुग्रहवती बुद्धिस्ते मयि माधव।
त्वामग्रतः पुरस्कृत्य भीष्मं यास्यामहे वयम् ॥ ६१५ ॥

श्रुत्वैवं धर्मराजस्य वचनं मधुसूदन ।
पार्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति ॥ ६१६ ॥

(अ. ४७) विदित्वा भक्तियोगं तु भीष्मस्य पुरुषोत्तमः।
सहसोत्थाय संहृष्टो यानमेवान्वपद्यत ॥ ६१७ ॥

केशवः सात्यकिश्चापि रथेनैकेन जग्मतुः।
अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ ॥ ६१८ ॥

भीमसेनो यमौ चोभौ रथमेकं समाश्रिताः।
कृपो युयुत्सु सूतश्च सञ्जयश्च परन्तपः ॥ ६१९ ॥

(अ. ४८) ते रथैर्नगराकारैः पताकाध्वजशोभितै ।
ययुराशु कुरुक्षेत्रं वाजिभिः शीघ्रगामिभिः ॥ ६२० ॥

गच्छन्नेव महाबाहुः स वै यादवनन्दनः।
युधिष्ठिराय प्रोवाच जामदग्न्यस्य विक्रमम् ॥ ६२१ ॥

अमी रामह्रदाः पञ्च दृश्यन्ते पार्थ दूरतः।
तेषु संतर्पयामास पितॄन् क्षत्रियशोणितैः ॥ ६२२ ॥

त्रिःसप्तकृत्वो वसुधा कृत्वा निःक्षत्रियां प्रभु ।
इहेदानीं ततो रामः कर्मणो विरराम ह ॥ ६२३ ॥

युधि०- त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा।
रामेणेति तथाऽऽत्थ त्वमत्र मे संशयो महान् ॥ ६२४ ॥

क्षत्रबीजं यथा दग्धं रामेण यदुपुङ्गव।
कथं भूयः समुत्पत्तिः क्षत्रस्यामितविक्रम ॥ ६२५ ॥

(अ. ४९) ऋचीको जनयामास जमदग्निं तपोनिधिम्।
वासु०- सोऽपि पुत्रं ह्यजनयज्जमदग्निः सुदारुणम्।
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् ॥ ६२६ ॥

एतस्मिन्नेव काले तु कृतवीर्यात्मजो बली।
अर्जुनो नाम तेजस्वी क्षत्रियो हैहयाधिपः॥ ६२७॥

दत्तात्रेयप्रसादेन राजा बाहुसहस्रवान्।
तस्य पुत्रास्तु बलिनो नृशंसाश्चैव सर्वदा॥ ६२८॥

गत्वाऽऽश्रममसंबुद्धा जमदग्नेर्महात्मनः।
अपातयन्त भल्लाग्रैः शिरः कायान्नराधिप।
समित्कुशार्थं रामस्य निर्यातस्य यशस्विनः॥ ६२९॥

ततः पितृवधामर्षाद्रामः परममन्युमान्।
निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमगृह्णत॥ ६३०॥

ततः स भृगुशार्दूलः कार्तवीर्यस्य वीर्यवान्।
विक्रम्य निजघानाशु पुत्रान्पौत्रांश्च सर्वशः॥ ६३१॥

स हैहयसहस्राणि हत्वा परममन्युमान्।
चकार भार्गवो राजन् महीं शोणितकर्दमाम्॥ ६३२॥

ततो ये क्षत्रिया राजन् शतशस्तेन वर्जिता।
ते विवृद्धा महावीर्या पृथिवीपतयोऽभवन्॥ ६३३॥

स पुनस्ताञ्जघानाशु बालानपि नराधिप।
गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत्तदा॥ ६३४॥

जातं जातं स गर्भं तु पुनरेव जघान ह।
अरक्षंश्च सुतान् कांश्चित्तदा क्षत्रिययोषित॥ ६३५॥

त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः।
दक्षिणामश्वमेधान्ते कश्यपायाददात्ततः॥ ६३६॥

स क्षत्रियाणां शेषार्थं करेणोद्दिश्य कश्यपः।
स्रुक्प्रग्रहवता राजंस्ततो वाक्यमथाब्रवीत्॥ ६३७॥

गच्छ तीरं समुद्रस्य दक्षिणस्य महामुने।
न ते मद्विषये राम वस्तव्यमिह कर्हिचित्॥ ६३८॥

तत शूर्पारकं देशं सागरस्तस्य निर्ममे ।
सहसा जामदग्न्यस्य सोऽपरान्तमहीतलम् ॥ ६३९ ॥

कश्यपस्ता महाराज प्रतिगृह्य वसुन्धराम् ।
कृत्वा ब्राह्मणसंस्थां वै प्रविष्टः सुमहद्वनम् ॥ ६४० ॥

ततः शूद्राश्च वैश्याश्च यथास्वैरप्रचारिणः ।
अवर्तन्त द्विजाग्र्याणा दारेषु भरतर्षभ ॥ ६४१ ॥

अराजके जीवलोके दुर्बला बलवत्तरैः ।
पीड्यन्ते न हि विप्रेषु प्रभुत्वं कस्यचित्तदा ॥ ६४२ ॥

ततः कालेन पृथिवी पीड्यमाना दुरात्मभिः ।
प्रसाद्य कश्यपं देवी वरयामास भूमिपम् ॥ ६४३ ॥

पृथिवी०—सन्ति ब्रह्मन्मया गुप्ताः स्त्रीषु क्षत्रियपुङ्गवाः ।
हैहयाना कुले जातास्ते संरक्षन्तु मां मुने ॥ ६४४ ॥

अस्ति पौरवदायादो विदूरथसुतः प्रभो ।
ऋक्षैः संवर्धितो विप्र ऋक्षवत्यथ पर्वते ॥ ६४५ ॥

तथाऽनुकम्पमानेन यज्वनाऽथामितौजसा ।
पराशरेण दायादः सौदासस्याभिरक्षितः ॥ ६४६ ॥

सर्वकर्माणि कुरुते शूद्रवत्तस्य स द्विजः ।
सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिवः ॥ ६४७ ॥

शिबिपुत्रो महातेजा गोपतिर्नाम नामतः ।
वने संवर्धितो गोभिः सोऽभिरक्षतु मां मुने ॥ ६४८ ॥

प्रतर्दनस्य पुत्रस्तु वत्सो नाम महाबलः ।
वत्सैः संवर्धितो गोष्ठे स मां रक्षतु पार्थिवः ॥ ६४९ ॥

दधिवाहनपौत्रस्तु पुत्रो दिविरथस्य च ।
गुप्तः स गौतमेनासीद्गङ्गाकूलेऽभिरक्षित ॥ ६५० ॥

बृहद्रथो महातेजा भूरिभूतिपरिष्कृत ।
गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः ॥ ६५१ ॥

मरुत्तस्यान्ववाये च रक्षिताः क्षत्रियात्मजाः।
मरुत्पतिसमा वीर्ये समुद्रेणाभिरक्षिता॰॥ ६५२॥

एते क्षत्रियदायादास्तत्र तत्र परिश्रुताः।
द्योकारहेमकारादिजातिं नित्यं समाश्रिता॰।
यदि मामभिरक्षन्ति ततः स्थास्यामि निश्चला॥ ६५३॥

ततः पृथिव्या निर्दिष्टांस्तान्समानीय कश्यपः।
अभ्यषिञ्चन्महीपालान् क्षत्रियान्वीर्यसंमतान्॥ ६५४॥

तेषां पुत्राश्च पौत्राश्च येषां वंशा॰ प्रतिष्ठिता॰।
एवमेतत्पुरावृत्तं यन्मां पृच्छसि पाण्डव॥ ६५५॥

एवं ब्रुवंस्तं च यदुप्रवीरो
युधिष्ठिरं धर्मभृतां वरिष्ठम्।
रथेन तेनाशु ययौ महात्मा
दिश प्रकाशन्भगवानिवार्कः॥ ६५६॥

(अ. ५०) तथावृत्तौ कथां तात तावच्युतयुधिष्ठिरौ।
जग्मतुर्यत्र गाङ्गेय॰ शरतल्पगत॰ प्रभु॰॥ ६५७॥

ततस्ते ददृशुर्भीष्मं शरप्रस्तरशायिनम्।
स्वरश्मिजालसंवीतं सायंसूर्यसमप्रभम्॥ ६५८॥

उपास्यमानं मुनिभिर्देवैरिव शतक्रतुम्।
देशे परमधर्मिष्ठे नदीमोघवतीमनु॥ ६५९॥

दूरादेव तमालोक्य कृष्णो राजा च धर्मज॰।
चत्वार पाण्डवाश्चैव ते च शारद्वतादयः॥ ६६०॥

अवस्कन्द्याथ वाहेभ्यः संयम्य प्रचलं मनः।
एकीकृत्येन्द्रियग्राममुपतस्थुर्महामुनीन्॥ ६६१॥

अभिवाद्य तु गोविन्दः सात्यकिस्ते च पार्थिवाः।
व्यासादीनृषिमुख्यांश्च गाङ्गेयमुपतस्थिरे॥ ६६२॥

ततो निशाम्य गाङ्गेयं शाम्यमानमिवानलम्।
किंचिद्दीनमना भीष्ममिति होवाच केशवः॥ ६६३॥

कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि यथा पुरा।
कच्चिन्न व्याकुला चैव बुद्धिस्ते वदतां वर॥ ६६४॥

शराभिघातदुःखात्ते कच्चिद्गात्रं न दूयते।
मानसादपि दुःखाद्धि शारीरं बलवत्तरम्॥ ६६५॥

सुसूक्ष्मोऽपि तु देहे वै शल्यो जनयते रुजम्।
किं पुनः शरसङ्घातैश्चितस्य तव पार्थिव॥ ६६६॥

कामं नैतत्तवाख्येयं प्राणिनां प्रभवाप्ययौ।
उपदेष्टुं भवान् शक्तो देवानामपि भारत॥ ६६७॥

यच्च भूतं भविष्यं च भवच्च पुरुषर्षभ।
सर्वं तज्ज्ञानवृद्धस्य तव भीष्म प्रतिष्ठितम्॥ ६६८॥

ये च केचन लोकेऽस्मिन्नर्थाः संशयकारकाः।
तेषां छेत्ता नास्ति लोके त्वदन्यः पुरुषर्षभ॥ ६६९॥

स पाण्डवेयस्य मनःसमुत्थितं
नरेन्द्र शोकं व्यपकर्ष मेधया।
भवद्विधा ह्युत्तमबुद्धिविस्तरा
विमुह्यमानस्य नरस्य शान्तये॥ ६७०॥

## श्रीकृष्णस्य भीष्माय वरदानम्, पुनर्भीष्मसमीपे गमनम्

(अ. ५२) ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हितम्।
श्रुत्वा शान्तनवो भीष्मः प्रत्युवाच कृताञ्जलिः॥ ६७१॥

लोकनाथ महाबाहो शिव नारायणाच्युत।
तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः॥ ६७२॥

किं चाहमभिधास्यामि वाक्यं ते तव सन्निधौ।
यदा वाचोगतं सर्वं तव वाचि समाहितम्॥ ६७३॥

यच्च किञ्चित्क्वचिल्लोके कर्तव्यं क्रियते च यत्।
त्वत्तस्तन्निःसृतं देव लोके बुद्धिमतो हि ते॥ ६७४॥

कथयेद्देवलोकं यो देवराजसमीपतः।
धर्मकामार्थमोक्षाणां सोऽर्थं ब्रूयात्तवाग्रतः ॥ ६७५ ॥

शराभितापाद्व्यथितं मनो मे मधुसूदन।
गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति ॥ ६७६ ॥

न च मे प्रतिभा काचिदस्ति किञ्चित्प्रभाषितुम्।
पीड्यमानस्य गोविन्द विषानलसमैः शरैः ॥ ६७७ ॥

बलं मे प्रजहातीव प्राणाः सन्त्वरयन्ति च।
मर्माणि परितप्यन्ति भ्रान्तचित्तस्तथा ह्यहम् ॥ ६७८ ॥

दौर्बल्यात्सज्जते वाङ्मे स कथं वक्तुमुत्सहे।
साधु मे त्वं प्रसीदस्व दाशार्हकुलवर्धन ॥ ६७९ ॥

तत्क्षमस्व महाबाहो न ब्रूयां किञ्चिदच्युत।
त्वत्सन्निधौ च सीदेद्धि वाचस्पतिरपि ब्रुवन् ॥ ६८० ॥

न दिशः संप्रजानामि नाकाशं न च मेदिनीम्।
केवलं तव वीर्येण तिष्ठामि मधुसूदन ॥ ६८१ ॥

स्वयमेव भवांस्तस्माद्धर्मराजस्य यद्धितम्।
तद्ब्रवीत्वाशु सर्वेषामागमानां त्वमागमः ॥ ६८२ ॥

कथं त्वयि स्थिते कृष्णे शाश्वते लोककर्तरि।
प्रब्रूयान्मद्विधः कश्चिद्गुरौ शिष्य इव स्थिते ॥ ६८३ ॥

वासु०— उपपन्नमिदं वाक्यं कौरवाणां धुरन्धरे।
महावीर्ये महासत्त्वे स्थिरे सर्वार्थदर्शिनि ॥ ६८४ ॥

यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति।
गृहाणात्र वरं भीष्म मत्प्रसादकृतं प्रभो ॥ ६८५ ॥

न ते ग्लानिर्न ते मूर्च्छा न दाहो न च ते रुजा।
प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत ॥ ६८६ ॥

ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ।
न च ते क्वचिदासक्तिर्बुद्धेः प्रादुर्भविष्यति ॥ ६८७ ॥

सत्त्वस्थं च मनो नित्यं तव भीष्म भविष्यति।
रजस्तमोभ्यां रहितं घनैर्मुक्त इवोडुराट् ॥ ६८८ ॥

ततस्ते व्याससहिताः सर्व एव महर्षयः।
ऋग्यजुःसामसहितैर्वचोभिः कृष्णमार्चयन् ॥ ६८९ ॥

ततः सर्वार्तवं दिव्यं पुष्पवर्षं नभस्तलात्।
पपात यत्र वार्ष्णेयः सगाङ्गेयः सपाण्डवः ॥ ६९० ॥

वादित्राणि च सर्वाणि जगुश्चाप्सरसा गणा।
न चाहितमनिष्टं च किञ्चित्तत्र प्रदृश्यते ॥ ६९१ ॥

ववौ शिवः सुखो वायुः सर्वगन्धवहः शुचिः।
शान्तायां दिशि शान्ताश्च प्रावदन्मृगपक्षिणः ॥ ६९२ ॥

ततो मुहूर्ताद्भगवान् सहस्रांशुर्दिवाकरः।
दहन् वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत ॥ ६९३ ॥

ततो महर्षयः सर्वे समुत्थाय जनार्दनम्।
भीष्ममामन्त्रयाञ्चक्रू राजानं च युधिष्ठिरम् ॥ ६९४ ॥

ततः प्रणाममकरोत्केशवः सहपाण्डवः।
सात्यकिः सञ्जयश्चैव स च शारद्वतः कृपः ॥ ६९५ ॥

ततस्ते धर्मनिरताः सम्यक् तैरभिपूजिताः।
श्वः समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः ॥ ६९६ ॥

तथैवामन्त्र्य गाङ्गेयं केशवः पाण्डवास्तथा।
प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ॥ ६९७ ॥

ततः पुरं सुरपुरसंमितद्युति
प्रविश्य ते यदुवृषपाण्डवास्तदा।
यथोचितान्भवनवरान्समाविशन्
श्रमान्विता मृगपतयो गुहा इव ॥ ६९८ ॥

(अ. ५३) ततः शयनमाविश्य प्रसुप्तो मधुसूदनः।
याममात्रार्धशेषायां यामिन्यां प्रत्यबुध्यत ॥ ६९९ ॥

ततः स्तुतिपुराणज्ञा रक्तकण्ठाः सुशिक्षिताः।
अस्तुवन् विश्वकर्माणं वासुदेव प्रजापतिम् ॥ ७०० ॥

ततो युधिष्ठिरस्यापि राज्ञो मङ्गलसहिताः।
उच्चेरुर्मधुरा वाचो गीतवादित्रनि स्वनाः ॥ ७०१ ॥

तत उत्थाय दाशार्हः स्नात. प्राञ्जलिरच्युतः।
जप्त्वा गुह्यं महाबाहुरग्नीनाश्रित्य तस्थिवान् ॥ ७०२ ॥

ततः सहस्रं विप्राणां चतुर्वेदविदां तथा।
गवां सहस्रेणैकैकं वाचयामास माधवः ॥ ७०३ ॥

ततो युधिष्ठिरो राजा यमौ भीमार्जुनावपि।
भूतानीव समस्तानि ययु. कृष्णनिवेशनम् ॥ ७०४ ॥

आगच्छत्स्वथ कृष्णोऽपि पाण्डवेषु महात्मसु।
शैनेयसहितो धीमान् रथमेवान्वपद्यत ॥ ७०५ ॥

रथस्थाः संविदं कृत्वा सुखां पृष्ट्वा च शर्वरीम्।
मेघघोषै रथवरैः प्रययुस्ते नरर्षभा. ॥ ७०६ ॥

ततो ययुर्यत्र भीष्मः शरतल्पगतः प्रभु ।
आस्ते महर्षिभिः सार्धं ब्रह्मा देवगणैर्यथा ॥ ७०७ ॥

(अ. ५४) ततोऽवतीर्य गोविन्दो भगवान् केशवस्तदा।
अभिगम्य दुराधर्षं प्रव्याहारयदच्युतः ॥ ७०८ ॥

कच्चित्सुखेन रजनी व्युष्टा ते राजसत्तम।
विस्पष्टलक्षणा बुद्धि. कच्चिच्चोपस्थिता तव ॥ ७०९ ॥

कच्चिज्ज्ञानानि सर्वाणि प्रतिभान्ति च तेऽनघ।
न ग्लायते च हृदयं न च ते व्याकुलं मनः ॥ ७१० ॥

भीष्म०—दाहो मोह. श्रमश्चैव क्लमो ग्लानिस्तथा रुजा।
तव प्रसादाद्वार्ष्णेय सद्य. प्रतिगतानि मे ॥ ७११ ॥

यच्च भूतं भविष्यच्च भवच्च परमद्युते।
तत्सर्वमनुपश्यामि पाणौ फलमिवार्पितम् ॥ ७१२ ॥

वेदोक्ताश्चैव ये धर्मा वेदान्ताधिगताश्च ये ।
तान्सर्वान् संप्रपश्यामि वरदानात्तवाच्युत ॥ ७१३ ॥

युवेवाऽस्मि समावृत्तस्त्वदनुध्यानबृंहितः ।
वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन ॥ ७१४ ॥

स्वयं किमर्थं तु भवान् श्रेयो न प्राह पाण्डवम् ।
किं ते विवक्षितं चात्र तदाशु वद माधव ॥ ७१५ ॥

वासु०- यशसः श्रेयसश्चैव मूलं मां विद्धि कौरव ।
मत्त' सर्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः ॥ ७१६ ॥

शीतांशुश्चन्द्र इत्युक्ते लोके को विस्मयिष्यति ।
तथैव यशसा पूर्णे मयि को विस्मयिष्यति ॥ ७१७ ॥

आधेयं तु मया भूयो यशस्तव महाद्युते ।
ततो मे विपुला बुद्धिस्त्वयि भीष्म समर्पिता ॥ ७१८ ॥

यावद्धि पृथिवीपाल पृथ्वीयं स्थास्यति ध्रुवा ।
तावत्तवाक्षया कीर्तिर्लोकाननुचरिष्यति ॥ ७१९ ॥

यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते ।
वेदप्रवाद इव ते स्थास्यते वसुधातले ॥ ७२० ॥

यावद्धि प्रथते लोके पुरुषस्य यशो भुवि ।
तावत्तस्याक्षया कीर्तिर्भवतीति विनिश्चिता ॥ ७२१ ॥

तस्मात्पुत्रैश्च पौत्रैश्च धर्मान् पृष्टान् सनातनान् ।
विद्वान् जिज्ञासमानैस्त्वं प्रब्रूहि भरतर्षभ ॥ ७२२ ॥

(अ. ५५) अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः ॥ ७२३ ॥

हन्त धर्मान्प्रवक्ष्यामि दृढे वाङ्मनसी मम ।
तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः ॥ ७२४ ॥

युधिष्ठिरस्तु धर्मात्मा मां धर्माननुपृच्छतु ।
एवं प्रीतो भविष्यामि धर्मान्वक्ष्यामि चाखिलान् ॥ ७२५ ॥

वासु०- लज्जया परयोपेतो धर्मराजो युधिष्ठिरः।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ ७२६ ॥

लोकस्य कदनं कृत्वा लोकनाथो विशां पते।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ ७२७ ॥

पूज्यान्मान्यांश्च भक्तांश्च गुरून्सम्बन्धिबान्धवान्।
अर्घार्हानिषुभिर्भित्वा भवन्त नोपसर्पति ॥ ७२८ ॥

भीष्म०- ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः।
क्षत्रियाणां तथा कृष्ण समरे देहपातनम् ॥ ७२९ ॥

पितॄन्पितामहान्भ्रातॄन् गुरून्सम्बन्धिबान्धवान्।
मिथ्याप्रवृत्तान् यः सङ्ख्ये निहन्याद्धर्म एव सः ॥ ७३० ॥

समयत्यागिनो लुब्धान् गुरूनपि च केशव।
निहन्ति समरे पापान् क्षत्रियो य. स धर्मवित् ॥ ७३१ ॥

आहूतेन रणे नित्य योद्धव्यं क्षत्रबन्धुना।
धर्म्यं स्वर्ग्यं च लोक्य च युद्धं हि मनुरब्रवीत् ॥ ७३२ ॥

एवमुक्तस्तु भीष्मेण धर्मपुत्रो युधिष्ठिरः।
विनीतवदुपागम्य तस्थौ सन्दर्शनेऽग्रतः ॥ ७३३ ॥

अथास्य पादौ जग्राह भीष्मश्चापि ननन्द तम्।
मूर्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा ॥ ७३४ ॥

तमुवाचाथ गाङ्गेयो वृषभ. सर्वधन्विनाम्।
मा पृच्छ तात विश्रब्धं मा भैस्त्वं कुरुसत्तम ॥ ७३५ ॥

## सङ्क्षेपतो राजधर्मानुशासनम्

(अ ५६) प्रणिपत्य हृषीकेशमभिवाद्य पितामहम्।
वैश०- अनुमान्य गुरून्सर्वान्पर्यपृच्छद्युधिष्ठिरः ॥ ७३६ ॥

राजधर्मान्विशेषेण कथयस्व पितामह।
सर्वस्य जीवलोकस्य राजधर्म परायणम् ॥ ७३७ ॥

यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा।
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहण स्मृतम् ॥ ७३८ ॥

तदग्रे राजधर्मान् हि मदर्थे त्वं पितामह।
प्रब्रूहि भरतश्रेष्ठ त्वं हि धर्मभृतां वर ॥ ७३९ ॥

भीष्म०— नमो धर्माय महते नमः कृष्णाय वेधसे।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥ ७४० ॥

शृणु कार्त्स्न्येन मत्तस्त्वं राजधर्मान्युधिष्ठिर।
निरुच्यमानान्नियतो यच्चान्यदपि वाञ्छसि ॥ ७४१ ॥

उत्थानेन सदा पुत्र प्रयतेथा युधिष्ठिर।
न ह्युत्थानमृते दैवं राज्ञामर्थं प्रसाधयेत् ॥ ७४२ ॥

साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च।
पौरुषं हि परं मन्ये दैवं निश्चित्यमुच्यते ॥ ७४३ ॥

विपन्ने च समारंभे सन्तापं मा स्म वै कृथाः।
घटस्वैव सदात्मानं राज्ञामेष परो नय ॥ ७४४ ॥

गुणवाञ्शीलवान्दान्तो मृदुर्धर्म्यो जितेन्द्रियः।
सुदर्श. स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥ ७४५ ॥

मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाश्रय ॥ ७४६ ॥

अदण्ड्याश्चैव ते पुत्र विप्राश्च ददतां वर।
भूतमेतत्परं लोके ब्राह्मणो नाम पाण्डव ॥ ७४७ ॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ७४८ ॥

अयो हन्ति यदाऽश्मानमग्निना वारि हन्यते।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥ ७४९ ॥

उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे।
निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नराधिपः ॥ ७५० ॥

विनश्यमानं धर्मं हि योऽभिरक्षेत्स धर्मवित् ।
धर्मात्मा सत्यवाक् चैव राजा रञ्जयति प्रजाः ॥ ७५१ ॥

न च क्षान्तेन ते नित्यं भाव्यं पुत्र समन्ततः ।
अधर्मो हि मृदू राजा क्षमावानिव कुञ्जरः ॥ ७५२ ॥

क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः ।
हस्तियन्ता गजस्येव शिर एवारुरुक्षति ॥ ७५३ ॥

तस्मान्नैव मृदुर्नित्यं तीक्ष्णो नैव भवेन्नृपः ।
वासन्तार्क इव श्रीमान्न शीतो न च घर्मदः ॥ ७५४ ॥

प्रत्यक्षेणानुमानेन तथौपम्यागमैरपि ।
परीक्ष्यास्ते महाराज स्वे परे चैव नित्यशः ॥ ७५५ ॥

व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण ।
लोकस्य व्यसनी नित्यं परिभूतो भवत्युत ॥ ७५६ ॥

यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयम् ॥ ७५७ ॥

वर्तितव्यं कुरुश्रेष्ठ सदा धर्मानुवर्तिना ।
स्वं प्रियं तु परित्यज्य यद्यल्लोकहितं भवेत् ॥ ७५८ ॥

परिहासश्च भृत्यैस्ते नात्यर्थं वदतां वर ।
कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ॥ ७५९ ॥

अवमन्यन्ति भर्तारं सङ्घर्षादुपजीविनः ।
स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति च तद्वचः ॥ ७६० ॥

प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते ।
अयाच्यं चैव याचन्ते भोज्यान्याहारयन्ति च ॥ ७६१ ॥

उत्कोचैर्वञ्चनाभिश्च कार्याण्यनुविहन्ति च ।
जर्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ॥ ७६२ ॥

स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ।
वान्तं निष्ठीवनं चैव कुर्वते चास्य सन्निधौ ॥ ७६३ ॥

निन्दन्ते स्वानधीकारान् सन्त्यजन्ते च भारत।
न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च ॥ ७६४ ॥

क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा।
अस्मत्प्रणेयो राजेति लोकांश्चैव वदन्त्युत ॥ ७६५ ॥

एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत।
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ॥ ७६६ ॥

(अ. ५७) नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर।
प्रशस्यते न राजा हि नारीवोद्यमवर्जित. ॥ ७६७ ॥

द्वाविमौ ग्रसते भूमि. सर्पो बिलशयानिव।
राजान चाविरोद्धार ब्राह्मणं चाप्रवासिनम् ॥ ७६८ ॥

तदेतन्नरशार्दूल हृदि त्वं कर्तुमर्हसि।
सन्धेयानभिसन्धत्स्व विरोध्यांश्च विरोधय ॥ ७६९ ॥

सप्ताङ्गस्य च राज्यस्य विपरीतं य आचरेत्।
गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव स. ॥ ७७० ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानत.।
उत्पथप्रतिपन्नस्य दण्डो भवति शाश्वतः ॥ ७७१ ॥

बाहो. पुत्रेण राज्ञा च सगरेण च धीमता।
असमञ्जा. सुतो ज्येष्ठस्त्यक्त. पौरहितैषिणा ॥ ७७२ ॥

असमञ्जाः सरय्वां स पौराणां बालकान्नृप।
न्यमज्जयदत. पित्रा निर्भर्त्स्य स विवासित. ॥ ७७३ ॥

लोकरञ्जनमेवात्र राज्ञा धर्म. सनातनः।
सत्यस्य रक्षणं चैव व्यवहारस्य चार्जवम् ॥ ७७४ ॥

न हिंस्यात्परवित्तानि देयं काले च दापयेत्।
विक्रान्त. सत्यवाक्क्षान्तो नृपो न चलते पथः ॥ ७७५ ॥

चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता।
धर्मसङ्कररक्षा च राज्ञां धर्मः सनातनः ॥ ७७६ ॥

न विश्वसेच्च नृपतिर्न चात्यर्थं च विश्वसेत् ।
षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्याऽवलोकयेत् ॥ ७७७ ॥

द्विट्छिद्रदर्शी नृपतिर्नित्यमेव प्रशस्यते ।
त्रिवर्गे विदितार्थश्च युक्तचारोपधिश्च यः ॥ ७७८ ॥

अभृतानां भवेद्भर्ता भृतानामन्ववेक्षक ।
नृपतिः सुमुखश्च स्यात्स्मितपूर्वाभिभाषिता ॥ ७७९ ॥

उपासिता च वृद्धानां जिततन्द्रिरलोलुपः ।
सतां वृत्ते स्थितमति सन्तोप्यश्चारुदर्शनः ॥ ७८० ॥

न चाददीत वित्तानि सतां हस्तात्कदाचन ।
असद्भ्यश्च समादद्यात्सद्भ्यस्तु प्रतिपादयेत् ॥ ७८१ ॥
शूरान्भक्तानसंहार्यान् कुले जातानरोगिणः ।
शिष्टान्शिष्टाभिसम्बन्धान् मानिनोऽनवमानिनः ॥ ७८२ ॥

सहायान् सततं कुर्याद्राजा भूतिपरिष्कृत ।
तैश्च तुल्यो भवेद्भोगैश्छत्रमात्राज्ञयाऽधिक ॥ ७८३ ॥

सर्वाभिशङ्की नृपतिर्यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव वध्यते ॥ ७८४ ॥

अक्रोधनो ह्यव्यसनी मृदुदण्डो जितेन्द्रिय ।
राजा भवति भूतानां विश्वास्यो हिमवानिव ॥ ७८५ ॥

आरब्धान्येव कार्याणि सुपर्यवसितानि च ।
यस्य राज्ञः प्रदृश्यन्ति स राजा राजसत्तमः ॥ ७८६ ॥

पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति स राजा राजसत्तम ॥ ७८७ ॥

यः सत्करोति ज्ञानानि ज्ञेये परहिते रतः ।
सतां वर्त्मानुगस्त्यागी स राजा राज्यमर्हति ॥ ७८८ ॥

यस्य चाराश्च मन्त्राश्च नित्यं चैव कृताकृताः ।
न ज्ञायन्ते हि रिपुभिः स राजा राज्यमर्हति ॥ ७८९ ॥

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम्।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥ ७९० ॥

तद्राज्ये राज्यकामानां नान्यो धर्मः सनातनः।
ऋते रक्षां तु विस्पष्टां रक्षा लोकस्य धारिणी ॥ ७९१ ॥

(अ. ५८) एतत्ते राजधर्माणां नवनीतं युधिष्ठिर।
बृहस्पतिर्हि भगवान् न्याय्यं धर्मं प्रशंसति ॥ ७९२ ॥

राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः।
रक्षामेव प्रशंसन्ति धर्मं धर्मभृतां वर ॥ ७९३ ॥

राज्ञां राजीवताम्राक्ष साधनं चात्र मे शृणु।
चारश्च प्रणिधिश्चैव काले दानममत्सरात् ॥ ७९४ ॥

युक्त्यादानं न चादानमयोगेन युधिष्ठिर।
सतां सङ्ग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम् ॥ ७९५ ॥

अनार्जवैरार्जवैश्च शत्रुपक्षस्य भेदनम्।
केतनानां च जीर्णानामवेक्षा चैव सीदताम् ॥ ७९६ ॥

द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः।
साधूनामपरित्यागः कुलीनानां च धारणम् ॥ ७९७ ॥

निचयश्च निचेयानां सेवा बुद्धिमतामपि।
बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम् ॥ ७९८ ॥

कार्येष्वखेदः कोशस्य तथैव च विवर्धनम्।
पुरगुप्तिरविश्वासः पौरसङ्घातभेदनम् ॥ ७९९ ॥

अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणम्।
उपजापश्च भृत्यानामात्मनः पुरदर्शनम् ॥ ८०० ॥

अविश्वासः स्वयं चैव परस्याश्वासनं तथा।
नीतिधर्मानुसरणं नित्यमुत्थानमेव च।
रिपूणामनवज्ञानं नित्यं चानार्यवर्जनम् ॥ ८०१ ॥

उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत।
राजधर्मस्य तन्मूलं श्लोकांश्चात्र निबोध मे ॥ ८०२ ॥

उत्थानवीरः पुरुषो वाग्वीरानधितिष्ठति।
उत्थानवीरान्वाग्वीरा रमयन्त उपासते ॥ ८०३ ॥
उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः।
प्रधर्षणीयः शत्रूणां भुजङ्ग इव निर्विषः ॥ ८०४ ॥
न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा।
अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च ॥ ८०५ ॥
एकाङ्गेनापि संभूतः शत्रुर्दुर्गमुपाश्रितः।
सर्वं तापयते देशमपि राज्ञः समृद्धिनः ॥ ८०६ ॥
राज्यं हि सुमहत्तन्त्रं धार्यते नाकृतात्मभिः।
न शक्यं मृदुना वोढुमायासस्थानमुत्तमम् ॥ ८०७ ॥
राज्यं सर्वामिषं नित्यमार्जवेनेह धार्यते।
तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर ॥ ८०८ ॥
यद्यप्यस्य विपत्तिः स्याद्रक्षमाणस्य वै प्रजाः।
सोऽप्यस्य विपुलो धर्म एवंवृत्ता हि भूमिपाः ॥ ८०९ ॥
एष ते राजधर्माणां लेशः समनुवर्णितः।
भूयस्ते यत्र सन्देहस्तद्ब्रूहि कुरुसत्तम ॥ ८१० ॥
ततो दीनमना भीष्ममुवाच कुरुसत्तमः।
नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैः स्पृशन् ॥ ८११ ॥
श्व इदानीं स्वसन्देहं प्रक्ष्यामि त्वां पितामह।
उपैति सविता ह्यस्तं रसमापीय पार्थिवम् ॥ ८१२ ॥
ततो द्विजातीनभिवाद्य केशवः
कृपश्च ते चैव युधिष्ठिरादयः।
प्रदक्षिणीकृत्य महानदीसुतं
ततो रथानारुरुहुर्मुदान्विताः ॥ ८१३ ॥
दृषद्वतीं चाप्यवगाह्य सुव्रताः
कृतोदकार्थाः कृतजप्यमङ्गलाः।
उपास्य सन्ध्यां विधिवत्परंतपा-
स्ततः पुरं ते विविशुर्गजाह्वयम् ॥ ८१४ ॥

## तृतीयदिने भीष्मसमीपे गमनम्, विस्तरेण राजधर्मकथनम्

(अ. ५९) ततः कल्यं समुत्थाय कृतपूर्वाह्णिकक्रियाः ।
ययुस्ते नगराकारै रथैः पाण्डवयादवाः ॥ ८१५ ॥

प्रतिपद्य कुरुक्षेत्रं भीष्ममासाद्य चानघ ।
सुखां च रजनीं पृष्ट्वा गाङ्गेयं रथिनां वरम् ॥ ८१६ ॥

व्यासादीनभिवाद्यर्षीन्सर्वैस्तैश्चाभिनन्दिताः ।
निषेदुरभितो भीष्मं परिवार्य समन्ततः ॥ ८१७ ॥

ततो राजा महातेजा धर्मराजो युधिष्ठिरः ।
अब्रवीत्प्राञ्जलिर्भीष्मं प्रतिपूज्य यथाविधि ॥ ८१८ ॥

य एष राजन् राजेति शब्दश्चरति भारत ।
कथमेष समुत्पन्नस्तन्मे ब्रूहि परन्तप ॥ ८१९ ॥

तुल्यपाणिभुजग्रीवस्तुल्यबुद्धीन्द्रियात्मकः ।
तुल्यदुःखसुखात्मा च तुल्यपृष्ठमुखोदरः ॥ ८२० ॥

तुल्यशुक्रास्थिमज्जा च तुल्यमांसासृगेव च ।
निःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ॥ ८२१ ॥

समानजन्ममरणः समः सर्वैर्गुणैर्नृणाम् ।
विशिष्टबुद्धीन् शूरांश्च कथमेकोऽधितिष्ठति ॥ ८२२ ॥

नैतत्कारणमल्पं हि भविष्यति विशाम्पते ।
यदेकस्मिन् जगत्सर्वं देववद्याति सन्नतिम् ॥ ८२३ ॥

भीष्म०– नियतस्त्वं नरव्याघ्र शृणु सर्वमशेषतः ।
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् ॥ ८२४ ॥

न वै राज्यं न राजाऽऽसीन्न च दण्डो न दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥ ८२५ ॥

पाल्यमानास्तथान्योऽन्यं नरा धर्मेण भारत ।
खेदं परमुपाजग्मुस्ततस्तान्मोह आविशत् ॥ ८२६ ॥

नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा ।
लोभस्य वशमापन्ना. सर्वे भरतसत्तम ॥ ८२७ ॥

अप्राप्तस्याभिमर्ष तु कुर्वन्तो मनुजास्तत. ।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो ॥ ८२८ ॥

तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत् ।
रक्ताश्च नाभ्यजानन्त कार्याकार्यं युधिष्ठिर ॥ ८२९ ॥

अगम्यागमनं चैव वाच्यावाच्यं तथैव च ।
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोष च नात्यजन् ॥ ८३० ॥

विप्लुते नरलोके वै ब्रह्म चैव ननाश ह ।
नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत् ॥ ८३१ ॥

नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत् ।
ते त्रस्ता नरशार्दूल ब्रह्माणं शरण ययुः ॥ ८३२ ॥

प्रसाद्य भगवन्तं ते देवं लोकपितामहम् ।
ऊचुः प्राञ्जलयः सर्वे दुःखवेगसमाहता. ॥ ८३३ ॥

भगवन्नरलोकस्थ ग्रस्तं ब्रह्म सनातनम् ।
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् ॥ ८३४ ॥

ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वर ।
तत. स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर ॥ ८३५ ॥

अधो हि वर्षमस्माकं नरास्तूर्ध्वप्रवर्षिणः ।
क्रियाव्युपरमात्तेषां ततो गच्छाम संशयम् ॥ ८३६ ॥

अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह ।
त्वत्प्रभावसमुत्थोऽसौ स्वभावो नो विनश्यति ॥ ८३७ ॥

तानुवाच सुरान्सर्वान् स्वयंभूर्भगवांस्ततः ।
श्रेयोऽहं चिन्तयिष्यामि व्येतु वो भीः सुरर्षभाः ॥ ८३८ ॥

ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।
यत्र धर्मस्तथैवार्थ कामश्चैवाभिवर्णित. ॥ ८३९ ॥

त्रिवर्ग इति विख्यातो गण एष स्वयंभुवा।
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः ॥ ८४० ॥
मोक्षस्यास्ति त्रिवर्गोऽन्य प्रोक्तः सत्त्वं रजस्तमः।
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डज ॥ ८४१ ॥
आत्मा देशश्च कालश्चाप्युपाया. कृत्यमेव च।
सहाया. कारणं चैव षड्वर्गो नीतिजः स्मृत. ॥ ८४२ ॥
त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥ ८४३ ॥
यैर्यैरुपायैर्लोकस्तु न चलेदार्यवर्त्मन.।
तत्सर्वं राजशार्दूल नीतिशास्त्रेऽभिवर्णितम् ॥ ८४४ ॥
एतत्कृत्वा शुभं शास्त्रं तत. स भगवान् प्रभुः।
देवानुवाच संहृष्ट सर्वाञ्छक्रपुरोगमान् ॥ ८४५ ॥
उपकाराय लोकस्य त्रिवर्गस्थापनाय च।
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता ॥ ८४६ ॥
दण्डेन नीयते चेदं दण्डं नयति वा पुनः।
दण्डनीतिरिति ख्याता त्रीन्लोकानभिवर्तते ॥ ८४७ ॥
ततस्तां भगवान्नीतिं पूर्वं जग्राह शङ्करः।
बहुरूपो विशालाक्षः शिव. स्थाणुरुमापति. ॥ ८४८ ॥
प्रजानामायुषो ह्रासं विज्ञाय भगवान् शिवः।
सञ्चिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥ ८४९ ॥
वैशालाक्षमिति प्रोक्तं तदिन्द्र प्रत्यपद्यत।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥ ८५० ॥
भगवानपि तच्छास्त्रं सञ्चिक्षेप पुरन्दरः।
सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ॥ ८५१ ॥
अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः।
सञ्चिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं तदुच्यते ॥ ८५२ ॥

अध्यायानां सहस्रेण काव्यः सङ्क्षेपमब्रवीत्।
तच्छास्त्रममितप्रज्ञो योगाचार्यो महायशाः॥ ८५३॥

अथ देवाः समागम्य विष्णुमूचुः प्रजापतिम्।
एको योऽर्हति मर्त्येभ्यः श्रैष्ठ्यं वै तं समादिश॥ ८५४॥

ततः सञ्चिन्त्य भगवान् देवो नारायणः प्रभुः।
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम्॥ ८५५॥

विरजास्तु महाभागः प्रभुत्वं भुवि नैच्छत।
न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव॥ ८५६॥

कीर्तिमांस्तस्य पुत्रोऽभूत् सोऽपि पञ्चातिगोऽभवत्।
कर्दमस्तस्य तु सुत सोऽप्यतप्यन्महत्तपः॥ ८५७॥

प्रजापतेः कर्दमस्य त्वनङ्गो नाम वै सुतः।
प्रजा रक्षयिता साधुर्दण्डनीतिविशारदः॥ ८५८॥

अनङ्गपुत्रोतिबलो नीतिमानभिगम्य वै।
प्रतिपेदे महाराज्यमथेन्द्रियवशोऽभवत्॥ ८५९॥

मृत्योस्तु दुहिता राजन् सुनीथा नाम मानसी।
प्रख्याता त्रिषु लोकेषु याऽसौ वेनमजीजनत्॥ ८६०॥

तं प्रजासु विधर्माणं रागद्वेषवशानुगम्।
मन्त्रभूतैः कुशैर्जघ्नुर्ऋषयो ब्रह्मवादिनः॥ ८६१॥

ममन्थुर्दक्षिण चोरुमृषयस्तस्य मन्त्रतः।
ततोऽस्य विकृतो जज्ञे ह्रस्वाङ्गः पुरुषो भुवि॥ ८६२॥

दग्धस्थूणाप्रतीकाशो रक्ताक्षः कृष्णमूर्धजः।
निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः॥ ८६३॥

तस्मान्निषादाः संभूताः क्रूराः शैलवनाश्रयाः।
ये चान्ये विन्ध्यनिलया म्लेच्छाः शतसहस्रशः॥ ८६४॥

भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः।
ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः॥ ८६५॥

कवची बद्धनिस्त्रिंशः सशरः सशरासनः।
वेदवेदाङ्गविच्चैव धनुर्वेदे च पारग ॥ ८६६ ॥

तं दण्डनीति सकला श्रिता राजन्नरोत्तमम्।
तमूचुस्तत्र देवास्ते ते चैव परमर्षय. ॥ ८६७ ॥

नियतो यत्र धर्मो वै तमशङ्कः समाचर।
प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु।
कामं क्रोधं च लोभ च मानं चोत्सृज्य दूरतः॥ ८६८ ॥

यश्च धर्मात्प्रविचलेल्लोके कश्चन मानवः।
निग्राह्यस्ते स्वबाहुभ्यां शश्वद्धर्ममवेक्षता ॥ ८६९ ॥

प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ॥ ८७० ॥

यश्चात्र धर्मो नित्योक्तो दण्डनीतिव्यपाश्रयः।
तमशङ्क करिष्यामि स्ववशो न कदाचन ॥ ८७१ ॥

वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान्।
ब्राह्मणा मे महाभागा नमस्याः पुरुषर्षभाः॥ ८७२ ॥

समतां वसुधायाश्च स सम्यगुदपादयत्।
वैषम्यं हि परं भूमेरासीदिति च न. श्रुतम् ॥ ८७३ ॥

मन्वन्तरेषु सर्वेषु विषमा जायते मही ॥ ८७४ ॥

उज्जहार ततो वैन्य. शिलाजालान् समन्ततः।
धनुष्कोट्या महाराज तेन शैला विवर्धिताः॥ ८७५ ॥

स विष्णुना च देवेन शक्रेण विबुधै. सह।
ऋषिभिश्च प्रजापालैर्ब्राह्मणैश्चाभिषेचितः॥ ८७६ ॥

तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च।
यक्षराक्षसनागैश्चापीप्सित यस्य यस्य यत् ॥ ८७७ ॥

तेन धर्मोत्तरश्चायं कृतो लोको महात्मना।
रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते ॥ ८७८ ॥

ब्राह्मणाना क्षतत्राणात्ततः क्षत्रिय उच्यते ॥ ८७९ ॥
तपसा भगवान् विष्णुराविवेश च भूमिपम्।
देववन्नरदेवानां नमते यं जगन्नृपम् ॥ ८८० ॥
ततो जगति राजेन्द्र सततं शब्दितं बुधैः।
देवाश्च नरदेवाश्च तुल्या इति विशाम्पते ॥ ८८१ ॥
एतत्ते सर्वमाख्यातं महत्त्व प्रति राजसु।
कात्स्न्येंन भरतश्रेष्ठ किमन्यदिह वर्तते ॥ ८८२ ॥

## वर्णाश्रमधर्मकथनम्

(अ. ६०) ततः पुन. स गाङ्गेयमभिवाद्य पितामहम्।
प्राञ्जलिर्नियतो भूत्वा पर्यपृच्छद्युधिष्ठिरः ॥ ८८३ ॥
के धर्माः सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक्।
चातुर्वर्ण्याश्रमाणां च राजधर्माश्च के मताः ॥ ८८४ ॥

भीष्म०— अक्रोधः सत्यवचन संविभाग क्षमा तथा।
प्रजन. स्वेषु दारेषु शौचमद्रोह एव च।
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः ॥ ८८५ ॥
ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम्।
दममेव महाराज धर्ममाहु पुरातनम्।
स्वाध्यायाभ्यसनं चैव तत्र कर्म समाप्यते ॥ ८८६ ॥
तं चेद्द्विजमुपागच्छेद्वर्तमानं स्वकर्मणि।
अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् ॥ ८८७ ॥
कुर्वीतापत्यसन्तानमथो दद्याद्यजेत च।
संविभज्य च भोक्तव्यं धनं सद्भिरितीर्यते ॥ ८८८ ॥
परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ८८९ ॥
क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि भारत।
दद्याद्राजन्न याचेत यजेत न च याजयेत् ॥ ८९० ॥

नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवध रणे कुर्यात्पराक्रमम् ॥ ८९१ ॥

अविक्षतेन देहेन समराद्यो निवर्तते ।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥ ८९२ ॥

स्वेषु धर्मेष्ववस्थाप्य प्रजाः सर्वा महीपतिः ।
धर्मेण सर्वकृत्यानि शमनिष्ठानि कारयेत् ॥ ८९३ ॥

परिनिष्ठितकार्यस्तु नृपतिः परिपालनात् ।
कुर्यादन्यन्न वा कुर्यादैन्द्रो राजन्य उच्यते ॥ ८९४ ॥

वैश्यस्यापि हि यो धर्मस्तं ते वक्ष्यामि शाश्वतम् ।
दानमध्ययनं यज्ञ शौचेन धनसञ्चय ॥ ८९५ ॥

पितृवत्पालयेद्वैश्यो युक्तः सर्वान् पशूनिह ।
विकर्म तद्भवेदन्यत्कर्म यत्स समाचरेत् ॥ ८९६ ॥

तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् ॥ ८९७ ॥

लब्धाच्च सप्तम भागं तथा शृङ्गे कला खुरे ।
सस्यानां सर्वबीजानामेषा सांवत्सरी भृतिः ॥ ८९८ ॥

प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत् ।
तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते ॥ ८९९ ॥

तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते ॥ ९०० ॥

यं च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्प्यां तेन तु ते प्राहुर्वृत्तिं धर्मविदो जनाः ॥ ९०१ ॥

(अ. ६१) आश्रमाणां महाबाहो शृणु सत्यपराक्रम ।
चतुर्णामपि नामानि कर्माणि च युधिष्ठिर ॥ ९०२ ॥

वानप्रस्थं भैक्ष्यचर्यं गार्हस्थ्यं च महाश्रमम् ।
ब्रह्मचर्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैर्वृतम् ॥ ९०३ ॥

जटाधरणसंस्कारं द्विजातित्वमवाप्य च।
आधानादीनि कर्माणि प्राप्य वेदमधीत्य च ॥ १०४ ॥

सदारो वाऽप्यदारो वा आत्मवान् संयतेन्द्रियः।
वानप्रस्थाश्रमं गच्छेत् कृतकृत्यो गृहाश्रमात् ॥ १०५ ॥

तत्रारण्यकशास्त्राणि समधीत्य स धर्मवित्।
उर्ध्वरेताः प्रव्रजित्वा गच्छत्यक्षरसात्मताम् ॥ १०६ ॥

एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसाम्।
कर्तव्यानीह विप्रेण राजन्नादौ विपश्चिता ॥ १०७ ॥

चरितब्रह्मचर्यस्य ब्राह्मणस्य विशाम्पते।
भैक्ष्यचर्यास्वधीकार प्रशस्त इव मोक्षिणः ॥ १०८ ॥

निराशीः स्यात्सर्वसमो निर्भोगो निर्विकारवान्।
विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मताम् ॥ १०९ ॥

अधीत्य वेदान्कृतसर्वकृत्य-
सन्तानमुत्पाद्य सुखानि भुक्त्वा।
समाहितः प्रचरेद् दुश्चरं यो
गार्हस्थ्यधर्मं मुनिधर्मजुष्टम् ॥ ११० ॥

स्वदारतुष्टस्त्वृतुकालगामी
नियोगसेवी न शठो न जिह्म।
मिताशनो देवरतः कृतज्ञः
सत्यो मृदुश्चानृशंस क्षमावान् ॥ १११ ॥

दान्तो विधेयो हव्यकव्येऽप्रमत्तो
ह्यन्नस्य दाता सततं द्विजेभ्यः।
अमत्सरी सर्वलिङ्गप्रदाता
वैताननित्यश्च गृहाश्रमी स्यात् ॥ ११२ ॥

स्मरन्नेको जपन्नेकः सर्वानेको युधिष्ठिर।
एकस्मिन्नेव चाचार्ये शुश्रूषुर्मलपङ्कवान् ॥ ११३ ॥

ब्रह्मचारी व्रती नित्यं नित्यं दीक्षापरो वशी ।
परिचार्य तथा वेदं कृत्यं कुर्वन् वसेत्सदा ॥ ९१४ ॥

शुश्रूषां सततं कुर्वन् गुरोः संप्रणमेत च ।
षट्कर्मसु निवृत्तश्च न प्रवृत्तश्च सर्वशः ॥ ९१५ ॥

न चरत्यधिकारेण सेवेत द्विषतो न च ।
एषोऽश्रमपदस्तात ब्रह्मचारिण इष्यते ॥ ९१६ ॥

क्षात्राणि वैश्यानि च सेव्यमानः
शौद्राणि कर्माणि च ब्राह्मणः सन् ।
अस्मिँल्लोके निन्दितो मन्दचेताः
परे च लोके निरयं प्रयाति ॥ ९१७ ॥

या संज्ञा विहिता लोके दासे शुनि वृके पशौ ।
विकर्मणि स्थिते विप्रे सैव संज्ञा च पाण्डव ॥ ९१८ ॥

(अ. ६३) शूद्रो राजन् भवति ब्रह्मबन्धु-
दुश्चारित्रो यश्च धर्मादपेत ।
वृषलीपतिः पिशुनो नर्तनश्च
राजप्रेष्यो यश्च भवेद्विकर्मा ॥ ९१९ ॥

जपन्वेदानजपंश्चापि राजन्
समः शूद्रैर्दासवच्चापि भोज्यः ।
एते सर्वे शूद्रसमा भवन्ति
राजन्नेतान्वर्जयेद्देवकृत्ये ॥ ९२० ॥

यथा राजन्हस्तिपदे पदानि
संलीयन्ते सर्वसत्त्वोद्भवानि ।
एवं धर्मान् राजधर्मेषु सर्वान्
सर्वावस्थ संप्रलीनान्निबोध ॥ ९२१ ॥

अल्पाश्रयानल्पफलान्वदन्ति
धर्मानन्यान्धर्मविदो मनुष्याः ।

महाश्चर्यं बहुकल्याणरूपं
क्षात्रं धर्मं नेतरं प्राहुरार्याः ॥ ९२२ ॥

(अ. ६५) मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥ ९२३ ॥
अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम्।
भरणं पुत्रदाराणां शौचमद्रोह एव च ॥ ९२४ ॥
दक्षिणा सर्वयज्ञाना दातव्या भूतिमिच्छता।
पाकयज्ञा महार्हाश्च दातव्याः सर्वदस्युभिः ॥ ९२५ ॥

(अ ६६) यः स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत्।
आश्रमाणां हि सर्वेषां फलं प्राप्नोत्यनामयम् ॥ ९२६ ॥
देशधर्मांश्च कौन्तेय कुलधर्मांस्तथैव च।
पालयन्पुरुषव्याघ्र राजा सर्वाश्रमी भवेत् ॥ ९२७ ॥
दशधर्मगतश्चापि यो धर्मं प्रत्यवेक्षते।
सर्वलोकस्य कौन्तेय राजा भवति सोऽऽश्रमी ॥ ९२८ ॥
ये धर्मकुशला लोके धर्मं कुर्वन्ति भारत।
पालिता यस्य विषये धर्मांशस्तस्य भूपतेः ॥ ९२९ ॥
धर्मारामान्धर्मपरान् ये न रक्षन्ति मानवान्।
पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ॥ ९३० ॥
ये चाप्यत्र सहायाः स्युः पार्थिवानां युधिष्ठिर।
ते चैवांशहरा सर्वे धर्मे परकृतेऽनघ ॥ ९३१ ॥
सर्वाश्रमपदेऽप्याहुर्गार्हस्थ्यं दीप्तनिर्णयम्।
पावनं पुरुषव्याघ्र यं धर्मं पर्युपास्महे ॥ ९३२ ॥

अराजकनिषेधः

(अ. ६७) चातुराश्रम्यमुक्तं ते चातुर्वर्ण्यं तथैव च।
युधि०– राष्ट्रस्य यत्कृत्यतमं ततो ब्रूहि पितामह ॥ ९३३ ॥
भीष्म०– राष्ट्रस्यैतत्कृत्यतमं राज्ञ एवाभिषेचनम्।
अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत ॥ ९३४ ॥

अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते ।
परस्परं च खादन्ति सर्वथा धिगराजकम् ॥ १३५ ॥

इन्द्रमेव प्रवृणुते यद्राजानमिति श्रुतिः ।
यथैवेन्द्रस्तथा राजा सम्पूज्यो भूतिमिच्छता ॥ १३६ ॥

नाराजकेषु राष्ट्रेषु वस्तव्यमिति रोचये ।
नाराजकेषु राष्ट्रेषु हव्यमग्निर्वहत्युत ॥ १३७ ॥

अथ चेदभिवर्तेत राज्यार्थी बलवत्तरः ।
अराजकाणि राष्ट्राणि हतवीर्याणि वा पुनः ।
प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम् ॥ १३८ ॥

न हि पापात्परतरमस्ति किञ्चिदराजकात् ॥ १३९ ॥
स चेत्समनुपश्येत समग्रं कुशलं भवेत् ।
बलवान्हि प्रकुपितः कुर्यान्निःशेषतामपि ॥ १४० ॥

भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ॥ १४१ ॥

यदतप्तं प्रणमते नैतत्सन्तापमर्हति ।
यत्स्वयं नमते दारु न तत्सन्नामयन्त्यपि ॥ १४२ ॥

एतयोपमया वीर सन्नमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ १४३ ॥

तस्माद्राजैव कर्तव्यः सततं भूतिमिच्छता ।
न धनार्थो न दारार्थस्तेषां येषामराजकम् ॥ १४४ ॥

प्रीयते हि हरन्पापः परवित्तमराजके ।
यदास्य उद्धरन्त्यन्ये तदा राजानमिच्छति ॥ १४५ ॥

पापा ह्यपि तदा क्षेमं न लभन्ते कदाचन ।
एकस्य हि द्वौ हरतो द्वयोश्च बहवोऽपरे ॥ १४६ ॥

अदासः क्रियते दासो ह्रियन्ते च बलात् स्त्रियः ।
एतस्मात्कारणाद्देवाः प्रजापालान् प्रचक्रिरे ॥ १४७ ॥

राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः।
जले मत्स्यानिवाभक्ष्यन्दुर्बलं बलवत्तराः ॥ ९४८ ॥

अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम्।
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ॥ ९४९ ॥

सहितास्तास्तदा जग्मुरसुखार्ताः पितामहम्।
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश।
यं पूजयेम संभूय यश्च नः प्रतिपालयेत् ॥ ९५० ॥

ततो मनुं व्यादिदेश मनुर्नाभिननन्द ताः ॥ ९५१ ॥

मनु०- बिभेमि कर्मणः पापाद्राज्यं हि भृशदुस्तरम्।
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥ ९५२ ॥

तमब्रुवन् प्रजा मा भैः कर्तॄनेनो गमिष्यति।
पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च।
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम् ॥ ९५३ ॥

स त्वं जातबलो राजा दुष्प्रधर्षः प्रतापवान्।
सुखे धास्यसि नः सर्वान् कुबेर इव नैर्ऋतान् ॥ ९५४ ॥

यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं वै भविष्यति ॥ ९५५ ॥

विजयाय हि निर्याहि प्रतपन् रश्मिवानिव।
मानं विधम शत्रूणां जयोऽस्तु तव सर्वदा ॥ ९५६ ॥

स निर्ययौ महातेजा बलेन महता वृतः।
महाभिजनसंपन्नस्तेजसा प्रज्वलन्निव ॥ ९५७ ॥

ततो महीं परिययौ पर्जन्य इव वृष्टिमान्।
शमयन्सर्वतः पापान्स्वकर्मसु च योजयन् ॥ ९५८ ॥

एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित्।
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ॥ ९५९ ॥

नमस्येरंश्च तं भक्त्या शिष्या इव गुरुं सदा।
देवा इव च देवेन्द्रं तत्र राजानमन्तिके ॥ ९६० ॥
सत्कृतं स्वजनेनेह परोऽपि बहु मन्यते।
स्वजनेन त्ववज्ञातं परे परिभवन्त्युत ॥ ९६१ ॥
(अ. ६८) राजमूलो महाप्राज्ञ धर्मो लोकस्य लक्ष्यते।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥ ९६२ ॥
यथा ह्यनुदये राजन् भूतानि शशिसूर्ययोः।
अन्धे तमसि मज्जेयुरपश्यन्तः परस्परम् ॥ ९६३ ॥
यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः।
विहरेयुर्यथाकामं विहिंसन्तः पुनः पुनः ॥ ९६४ ॥
विमथ्यातिक्रमेरंश्च विषह्यापि परस्परम्।
अभावमचिरेणैव गच्छेयुर्नात्र संशयः ॥ ९६५ ॥
एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः।
अन्धे तमसि मज्जेयुरगोपाः पशवो यथा ॥ ९६६ ॥
हरेयुर्बलवन्तोऽपि दुर्बलानां परिग्रहान्।
हन्युर्व्यायच्छमानाश्च यदि राजा न पालयेत् ॥ ९६७ ॥
ममेदमिति लोकेऽस्मिन्न भवेत्संपरिग्रहः।
न दारा न च पुत्रः स्यान्न धनं न परिग्रहः।
विष्वग्लोपः प्रवर्तेत यदि राजा न पालयेत् ॥ ९६८ ॥
एतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु।
अधर्मः प्रगृहीतः स्याद्यदि राजा न पालयेत् ॥ ९६९ ॥
मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम्।
क्लिश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत् ॥ ९७० ॥
वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत्।
ममत्वं च न विन्देयुर्यदि राजा न पालयेत् ॥ ९७१ ॥
न योनिदोषो वर्तेत न कृषिर्न वणिक्पथः।
मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् ॥ ९७२ ॥

हस्ताद्धस्तं परिमुषेत् भिद्येरन् सर्वसेतवः।
भयार्तं विद्रवेत्सर्वं यदि राजा न पालयेत् ॥ ९७३ ॥

अनया संप्रवर्तेरन् भवेद्वै वर्णसङ्करः।
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् ॥ ९७४ ॥

विवृत्य हि यथाकामं गृहद्वाराणि शेरते।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभया ॥ ९७५ ॥

स्त्रियश्चापुरुषा मार्गं सर्वालङ्कारभूषिताः।
निर्भयाः प्रतिपद्यन्ते यदि रक्षति भूमिपः ॥ ९७६ ॥

वार्तामूलो ह्ययं लोकस्त्रय्या वै धार्यते सदा।
तत्सर्वं वर्तते सम्यग्यदा रक्षति भूमिपः ॥ ९७७ ॥

यस्याभावेन भूतानामभावः स्यात्समन्ततः।
भावे च भावो नित्यं स्यात्कस्तं न प्रतिपूजयेत् ॥ ९७८ ॥

न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ९७९ ॥

कुरुते पञ्चरूपाणि कालयुक्तानि यः सदा।
भवत्यग्निस्तथाऽऽदित्यो मृत्युर्वैश्रवणो यमः ॥ ९८० ॥

यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा।
मिथ्योपचरितो राजा तदा भवति पावकः ॥ ९८१ ॥

यदा पश्यति चारेण सर्वभूतानि भूमिपः।
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ॥ ९८२ ॥

अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान्।
सपुत्रपौत्रान् सामात्यांस्तदा भवति सोऽन्तकः ॥ ९८३ ॥

यदा त्वधार्मिकान् सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति।
धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥ ९८४ ॥

यदा तु धनधाराभिस्तर्पयत्युपकारिणः।
आच्छिनत्ति च रत्नानि विविधान्यपकारिणाम् ॥ ९८५ ॥

श्रियं ददाति कस्मैचित्कस्माच्चिदपकर्षति।
तदा वैश्रवणो राजा लोके भवति भूमिप॰ ॥ ९८६ ॥
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः।
य एभि स्तूयते शब्दै॰ कस्त नार्चितुमर्हति ॥ ९८७ ॥

## राज्ञः कर्तव्यम्

(अ॰ ६९) पार्थिवेन विशेषेण किं कार्यमवशिष्यते।
युधि०– कथं रक्ष्यो जनपदः कथं जेयाश्च शत्रव॰ ॥ ९८८ ॥
भीष्म०–राजवृत्तं महाराज शृणुष्वावहितोऽखिलम्।
यत्कार्यं पार्थिवेनादौ पार्थिवप्रकृतेन वा ॥ ९८९ ॥
आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः।
अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥ ९९० ॥
एतावानात्मविजय॰ पञ्चवर्गविनिग्रहः।
जितेन्द्रियो नरपतिर्बाधितुं शक्नुयादरीन् ॥ ९९१ ॥
न्यसेत गुल्मान्दुर्गेषु सन्धौ च कुरुनन्दन।
नगरोपवने चैव पुरोद्यानेषु चैव ह ॥ ९९२ ॥
संस्थानेषु च सर्वेषु पुरेषु नगरेषु च।
मध्ये च नरशार्दूल तथा राजनिवेशने ॥ ९९३ ॥
प्रणिधींश्च ततः कुर्याज्जडान्धबधिराकृतीन्।
पुंसः परीक्षितान् प्राज्ञान् क्षुत्पिपासाश्रमक्षमान् ॥ ९९४ ॥
अमात्येषु च सर्वेषु मित्रेषु विविधेषु च।
पुत्रेषु च महाराज प्रणिदध्यात्समाहित॰ ॥ ९९५ ॥
पुरे जनपदे चैव तथा सामन्तराजसु।
यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते ॥ ९९६ ॥
चारांश्च विद्यात्प्रहितान् परेण भरतर्षभ।
आपणेषु विहारेषु समाजेषु च भिक्षुषु ॥ ९९७ ॥
आरामेषु तथोद्याने पण्डितानां समागमे।
देशेषु चत्वरे चैव सभास्वावसथेषु च ॥ ९९८ ॥

एवं विचिनुयाद्राजा परचारं विचक्षणः।
चारे हि विदिते पूर्वं हितं भवति पाण्डव ॥ ९९९ ॥

यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना।
अमात्यैः सह संमन्त्र्य कुर्यात्सन्धिं बलीयसा ॥ १००० ॥

अज्ञायमाने हीनत्वे सन्धिं कुर्यात्परेण वै।
लिप्सुर्वा कश्चिदेवार्थं त्वरमाणो विचक्षणः ॥ १ ॥

गुणवन्तो महोत्साहा धर्मज्ञाः साधवश्च ये।
सन्दधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् ॥ २ ॥

उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः।
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः ॥ ३ ॥

यो नोपकर्तुं शक्नोति नापकर्तुं महीपतिः।
न शक्यरूपश्चोद्धर्तुमुपेक्ष्यस्तादृशो भवेत् ॥ ४ ॥

यात्राया यदि विज्ञातमनाक्रन्दमनन्तरम्।
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षण ॥ ५ ॥

यात्रामाज्ञापयेद्वीरः कल्यः पुष्टबलः सुखी।
पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा ॥ ६ ॥

न च वश्यो भवेदस्य नृपो यश्चातिवीर्यवान्।
हीनश्च बलवीर्याभ्यां कर्षयंस्तत्परो वसेत् ॥ ७ ॥

राष्ट्रं च पीडयेत्तस्य शस्त्राग्निविषमूर्च्छनैः।
अमात्यवल्लभानां च विवादांस्तस्य कारयेत् ॥ ८ ॥

वर्जनीयं सदा युद्धं राज्यकामेन धीमता।
उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः ॥ ९ ॥

सान्त्वेन तु प्रदानेन भेदेन च नराधिप।
यदर्थं शक्नुयात्प्राप्तुं तेन तुष्येत पण्डितः ॥ १०१० ॥

आददीत बलिं चापि प्रजाभ्यः कुरुनन्दन।
स षड्भागमपि प्राज्ञस्तासामेवाभिगुप्तये ॥ ११ ॥

दशाधर्मगतेभ्यो यद्वसु बह्वल्पमेव च ।
तदाददीत सहसा पौराणां रक्षणाय वै ॥ १२ ॥

यथा पुत्रास्तथा पौत्रा द्रष्टव्यास्ते न संशयः ।
भक्तिश्चैषा न कर्तव्या व्यवहारे प्रदर्शिते ॥ १३ ॥

श्रोतुं चैव न्यसेद्राजा प्राज्ञान् सर्वार्थदर्शिनः ।
व्यवहारेषु सततं तत्र राज्यं प्रतिष्ठितम् ॥ १४ ॥

आकरे लवणे शुल्के तरे नागबले तथा ।
न्यसेदमात्यान् नृपतिः स्वाप्तान्वा पुरुषान्हितान् ॥ १५ ॥

यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।
तदाभिसंश्रयेद्दुर्गं बुद्धिमान् पृथिवीपतिः ॥ १६ ॥

ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत् ।
धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः ॥ १७ ॥

तस्याभिहारं कुर्याच्च स्वयमेव नराधिपः ।
असंभवे प्रवेशस्य दहेद्दावाग्निना भृशम् ॥ १८ ॥

क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् ।
विनाशयेद्वा तत्सर्वं बलेनाथ स्वकेन वा ॥ १९ ॥

नदीमार्गेषु च तथा सङ्क्रमानवसादयेत् ।
जलं विस्रावयेत्सर्वमविस्राव्यं च दूषयेत् ॥ १०२० ॥

तदात्वेनायतीभिश्च निवसेद्भूम्यनन्तरम् ।
प्रतीघातं परस्याजौ मित्रकार्येऽप्युपस्थिते ॥ २१ ॥

यतः शङ्का भवेच्चापि भृत्यतोऽथापि मन्त्रितः ।
पौरेभ्यो नृपतेर्वापि स्वाधीनान् कारयीत तान् ॥ २२ ॥

कृते कर्मणि राजेन्द्र पूजयेद्धनसञ्चयैः ।
दानेन च यथार्हेण सान्त्वेन विविधेन च ॥ २३ ॥

निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन ।
ततोऽनृणो भवेद्राजा यथा शास्त्रे निदर्शितम् ॥ २४ ॥

राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे।
आत्माऽमात्याश्च कोशाश्च दण्डो मित्राणि चैव हि ॥ २५ ॥

तथा जनपदाश्चैव पुरं च कुरुनन्दन।
एतत्सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः ॥ २६ ॥

षाड्गुण्यं च त्रिवर्गं च त्रिवर्गपरमं तथा।
यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमाम् ॥ २७ ॥

षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर।
सन्धानासनमित्येव यात्रासन्धानमेव च ॥ २८ ॥

विगृह्यासनमित्येव यात्रां संपरिगृह्य च।
द्वैधीभावस्तथाऽन्येषां संश्रयोऽथ परस्य च ॥ २९ ॥

त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु।
क्षयः स्थानं च वृद्धिश्च त्रिवर्गः परमस्तथा ॥ १०३० ॥

धर्मश्चार्थश्च कामश्च सेवितव्योऽथ कालतः।
धर्मेण च महीपालश्चिरं पालयते महीम् ॥ ३१ ॥

दण्डनीतिश्च राजा च समस्तौ तावुभावपि।
कस्य किं कुर्वतः सिद्ध्येत्तन्मे ब्रूहि पितामह ॥ ३२ ॥

दण्डनीतिः स्वधर्मेभ्यश्चातुर्वर्ण्यं नियच्छति।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो नियच्छति ॥ ३३ ॥

चातुर्वर्ण्ये स्वकर्मस्थे मर्यादानामसङ्करे।
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ॥ ३४ ॥

स्वाम्ये प्रयत्नं कुर्वन्ति त्रयो वर्णा यथाविधि।
तस्मादेव मनुष्याणां सुखं विद्धि समाहितम् ॥ ३५ ॥

कालो वा कारणं राज्ञो राजा वा कालकारणम्।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ३६ ॥

दण्डनीत्यां यदा राजा सम्यक्कार्त्स्न्येन वर्तते।
तदा कृतयुगं नाम कालसृष्टं प्रवर्तते ॥ ३७ ॥

ततः कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् ।
सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥ ३८ ॥

अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा ।
त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च ॥ ३९ ॥

दण्डनीत्यां यदा राजा त्रीनशाननुवर्तते ।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥ १०४० ॥

अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्तते ।
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ॥ ४१ ॥

अर्धं त्यक्त्वा यदा राजा नीत्यर्धमनुवर्तते ।
ततस्तु द्वापरं नाम स कालः संप्रवर्तते ॥ ४२ ॥

अशुभस्य यदा त्वर्धं द्वावंशावनुवर्तते ।
कृष्टपच्यैव पृथिवी भवत्यर्धफला तथा ॥ ४३ ॥

दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिप ।
प्रजाः क्लिश्नात्ययोगेन प्रवर्तेत तदा कलिः ॥ ४४ ॥

कलावधर्मो भूयिष्ठं धर्मो भवति न क्वचित् ।
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥ ४५ ॥

शूद्रा भैक्ष्येण जीवन्ति ब्राह्मणाः परिचर्यया ।
योगक्षेमस्य नाशश्च वर्तते वर्णसङ्करः ॥ ४६ ॥

कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ ४७ ॥

प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥ ४८ ॥

दण्डनीतिं पुरस्कृत्य विजानन् क्षत्रियः सदा ।
अनवाप्तं च लिप्सेत लब्धं च परिपालयेत् ॥ ४९ ॥

लोकस्य सीमन्तकरी मर्यादा लोकभाविनी ।
सम्यङ्नीता दण्डनीतिर्यथा माता यथा पिता ॥ १०५० ॥

तस्मात् कौरव्य धर्मेण प्रजाः पालय नीतिमान् ।
एवंवृत्त. प्रजा रक्षन् स्वर्ग जेतासि दुर्जयम् ॥ ५१ ॥

(अ. ७०) केन वृत्तेन वृत्तज्ञ वर्तमानो महीपतिः ।
युधि०— सुखेनार्थान्सुखोदर्कानिह च प्रेत्य चाप्नुयात् ॥ ५२ ॥

भीष्म०— अयं गुणानां षट्त्रिंशत्षट्त्रिंशद्गुणसंयुत ।
यान् गुणांस्तु गुणोपेतः कुर्वन् गुणमवाप्नुयात् ॥ ५३ ॥

चरेद्धर्मानकटुको मुञ्चेत्स्नेहं न चास्तिक ।
अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ॥ ५४ ॥

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थन ।
दाता नापात्रवर्षी स्यात्प्रगल्भ स्यादनिष्ठुर ॥ ५५ ॥

सन्दधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः ।
नाभक्तं चारयेच्चारं कुर्यात्कार्यमपीडया ॥ ५६ ॥

अर्थं ब्रूयान्न चासत्सु गुणान् ब्रूयान्न चात्मनः ।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥ ५७ ॥

नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् ।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ ५८ ॥

अनीर्षुर्गुप्तदार. स्याच्चोक्षः स्यादघृणी नृप. ।
स्त्रिय सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥ ५९ ॥

अस्तब्धः पूजयन् मान्यान् गुरून् सेवेदमायया ।
अर्चेद्देवानदम्भेन श्रियमिच्छेदकुत्सिताम् ॥ १०६० ॥

सेवेत प्रणयं हित्वा दक्ष. स्यान्न त्वकालवित् ।
सान्त्वयेन्न च मोक्षाय अनुगृह्णन्न चाक्षिपेत् ॥ ६१ ॥

प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शोचयेत् ।
क्रोधं कुर्यान्न चाकस्मान्मृदु. स्यान्नापकारिषु ॥ ६२ ॥

एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि ।
अतोऽन्यथा नरपतिर्भयमृच्छत्यनुत्तमम् ॥ ६३ ॥

इति सर्वान् गुणानेतान् यथोक्तान् योऽनुवर्तते।
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते॥ ६४॥

(अ. ७१) कथं राजा प्रजा रक्षन्नाधिबन्धेन युज्यते।
युधि०- धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह॥ ६५॥

भीष्म०- धर्मनिष्ठान् श्रुतवतो देवव्रतसमाहितान्।
अर्चयित्वा यजेथास्त्वं गृहे गुणवतो द्विजान्॥ ६६॥

प्रत्युत्थायोपसङ्गृह्य चरणावभिवाद्य च।
अथ सर्वाणि कुर्वीथा: कार्याणि सपुरोहित॥ ६७॥

आर्जवेन च संपन्नो धृत्या बुद्ध्या च भारत।
यथार्थं प्रतिगृह्णीयात्कामक्रोधौ च वर्जयेत्॥ ६८॥

कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति।
न स धर्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः॥ ६९॥

मा स्म लुब्धांश्च मूर्खांश्च कामार्थे च प्रयूयुज:।
अलुब्धान् बुद्धिसंपन्नान् सर्वकर्मसु योजयेत्॥ १०७०॥

मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः।
प्रजाः क्लिश्नात्ययोगेन कामक्रोधसमन्वित:॥ ७१॥

बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम्।
शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम्॥ ७२॥

दापयित्वा करं धर्म्यं राष्ट्रं नीत्या यथाविधि।
तथैतं कल्पयेद्राजा योगक्षेममतन्द्रित:॥ ७३॥

गोपायितारं दातारं धर्मनित्यमतन्द्रितम्।
अकामद्वेषसंयुक्तमनुरज्यन्ति मानवा:॥ ७४॥

मा स्म लोभेनाधर्मेण लिप्सेथास्त्वं धनागमम्।
धर्मार्थावध्रुवौ तस्य यो न शास्त्रपरो भवेत्॥ ७५॥

अर्थशास्त्रपरो राजा धर्मार्थौ नाधिगच्छति।
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति॥ ७६॥

अर्थमूलोऽपि हिंसां च कुरुते स्वयमात्मनः।
करैरशास्त्रदृष्टैर्हि मोहात्संपीडयन्प्रजाः ॥ ७७ ॥

ऊधश्छिंद्यात्तु यो धेन्वा॰ क्षीरार्थी न लभेत्पयः।
एवं राष्ट्रमयोगेन पीडितं न विवर्धते ॥ ७८ ॥

यो हि दोग्ध्रीमुपास्ते च स नित्यं विन्दते पयः।
एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम् ॥ ७९ ॥

अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम्।
जनयत्यतुलां नित्यं कोशवृद्धिं युधिष्ठिर ॥ १०८० ॥

दोग्ध्री धान्यं हिरण्यं च मही राज्ञा सुरक्षिता।
नित्यं स्वेभ्य॰ परेभ्यश्च तृप्ता माता यथा पयः ॥ ८१ ॥

मालाकारोपमो राजन्भव माऽऽङ्गारिकोपमः।
तथायुक्तश्चिरं राज्य भोक्तुं शक्ष्यसि पालयन् ॥ ८२ ॥

परचक्राभियानेन यदि ते स्याद्धनक्षय॰।
अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् ॥ ८३ ॥

धर्मेण व्यवहारेण प्रजा॰ पालय पाण्डव।
युधिष्ठिर यथा युक्तो नाधिबन्धेन योक्ष्यसे ॥ ८४ ॥

(अ॰ ७२) य एव तु सतो रक्षेदसतश्च निवर्तयेत्।
स एव राज्ञा कर्तव्यो राजन् राजपुरोहितः ॥ ८५ ॥

राजा चरति यं धर्मं ब्राह्मणेन निदर्शितम्।
तस्य धर्मस्य सर्वस्य भागी राजपुरोहित॰ ॥ ८६ ॥

एवमेव प्रजा॰ सर्वा राजानमभिसंश्रिताः।
सम्यग्वृत्ता स्वधर्मस्था न कुतश्चिद्भयान्विताः ॥ ८७ ॥

राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः।
चतुर्थं तस्य धर्मस्य राजा भागं तु विन्दति ॥ ८८ ॥

छायायामप्सु वायौ च सुखमुष्णेऽधिगच्छति।
अग्नौ वाससि सूर्ये च सुखं शीतेऽधिगच्छति ॥ ८९ ॥

शब्दे स्पर्शे रसे रूपे गन्धे च रमते मनः ॥ १०९० ॥
तेषु भोगेषु सर्वेषु न भीतो लभते सुखम् ।
अभयस्य हि यो दाता तस्यैव सुमहत्फलम् ॥ ९१ ॥
(अ. ७३) राज्ञा पुरोहितः कार्यो भवेद्विद्वान् बहुश्रुतः ।
उभौ समीक्ष्य धर्मार्थावप्रमेयावनन्तरम् ॥ ९२ ॥
धर्मात्मा मन्त्रविद्येषां राज्ञां राजन् पुरोहितः ।
राजा चैवंगुणो येषां कुशलं तेषु सर्वशः ॥ ९३ ॥
उभौ प्रजा वर्धयतो देवान्सर्वान्सुतान्पितॄन् ।
भवेयातां स्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ ॥ ९४ ॥
परस्परस्य सुहृदौ विहितौ समचेतसौ ।
ब्रह्मक्षत्रस्य संमानात्प्रजा सुखमवाप्नुयात् ॥ ९५ ॥
विमाननात्तयोरेव प्रजा नश्येयुरेव हि ।
ब्रह्मक्षत्रं हि सर्वेषां वर्णानां मूलमुच्यते ॥ ९६ ॥
(अ. ७४) योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते ।
योगक्षेमो हि राज्ञो हि समायत्तः पुरोहिते ॥ ९७ ॥
ब्रह्मक्षत्रमिदं सृष्टमेकयोनि स्वयंभुवा ।
पृथग्बलविधानं तन्न लोकं परिपालयेत् ॥ ९८ ॥
तपो मन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम् ।
अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् ।
ताभ्यां संभूय कर्तव्यं प्रजानां परिपालनम् ॥ ९९ ॥
(अ. ७५) यया वृत्त्या महीपालो विवर्धयति मानवान् ।
युधि०- पुण्यांश्च लोकान् जयति तन्मे ब्रूहि पितामह ॥ ११०० ॥
भीष्म०- दानशीलो भवेद्राजा यज्ञशीलश्च भारत ।
उपवासतपःशीलः प्रजानां पालने रतः ॥ १ ॥
सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयन् ।
उत्थानेन प्रदानेन पूजयेच्चापि धार्मिकान् ॥ २ ॥

राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते।
यद्यदाचरते राजा तत्प्रजानां स्म रोचते ॥ ३ ॥
नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु।
निहन्यात्सर्वतो दस्यून्न कामात्कस्यचित्क्षमेत् ॥ ४ ॥
यद्राष्ट्रेऽकुशलं किञ्चिद्राज्ञो रक्षयत. प्रजा ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ ५ ॥
अप्याहु सर्वमेवेति भूयोऽर्धमिति निश्चयः ॥ ६ ॥
कर्मण. पृथिवीपाल नृशंसोऽनृतवागपि ।
तादृशात्किल्बिषाद्राजा शृणु येन प्रमुच्यते ॥ ७ ॥
प्रत्याहर्तुमशक्यं स्याद्धन चौरैर्हृतं यदि ।
तत्स्वकोशात्प्रदेयं स्यादशक्तेनोपजीवत ॥ ८ ॥
न हि कामात्मना राज्ञा सततं कामबुद्धिना।
नृशंसेनातिलुब्धेन शक्यं पालयितुं प्रजाः ॥ ९ ॥
युधि०- नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम्।
धर्मार्थं रोचये राज्यं धर्मश्चात्र न विद्यते ॥ १११० ॥
तदलं मम राज्येन यत्र धर्मो न विद्यते।
वनमेव गमिष्यामि तस्माद्धर्मचिकीर्षया ॥ ११ ॥
भीष्म०- वेदाहं तव या बुद्धिरानृशंस्याऽगुणैव सा।
न च शुद्धानृशंसेन शक्यं राज्यमुपासितुम् ॥ १२ ॥
अपि तु त्वां मृदुप्रज्ञमत्यार्यमतिधार्मिकम्।
क्लीबं धर्मघृणायुक्तं न लोको बहु मन्यते ॥ १३ ॥
वृत्तं तु स्वमपेक्षस्व पितृपैतामहोचितम्।
नैव राज्ञां तथा वृत्तं यथा त्वं स्थातुमिच्छसि ॥ १४ ॥
न हि वैक्लव्यसंसृष्टमानृशंस्यमिहास्थित ।
प्रजापालनसंभूतमाप्ता धर्मफलं ह्यसि ॥ १५ ॥
न ह्येतामाशिषं पाण्डुर्न च कुन्ती त्वयाचत।
तथैतत्प्रज्ञया तात यथाऽऽचरसि मेधया ॥ १६ ॥

शौर्यं बलं च सत्यं च पिता तव सदाऽब्रवीत् ।
माहात्म्यं च महौदार्यं भवतः कुन्त्ययाऽचत ॥ १७ ॥
नित्यं स्वाहा स्वधा नित्यं चोभे मानुषदैवते ।
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ॥ १८ ॥
दानमध्ययन यज्ञं प्रजानां परिपालनम् ।
धर्ममेतदधर्मं वा जन्मनैवाभ्यजायथाः ॥ १९ ॥
नैकान्तविनिपातेन विचचारेह कश्चन ।
धर्मो गृही वा राजा वा ब्रह्मचारी यथा पुनः ॥ ११२० ॥
अल्पं हि सारभूयिष्ठं यत्कर्मोदारमेव तत् ।
कृतमेवाकृताच्छ्रेयो न पापीयोऽस्त्यकर्मणः ॥ २१ ॥
दानेनान्यं बलेनान्यमन्यं सूनृतया गिरा ।
सर्वत· प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥ २२ ॥
यं हि वैद्याः कुले जाता ह्यवृत्तिभयपीडिताः ।
प्राप्य तृप्ताः प्रतिष्ठन्ति धर्मं कोऽभ्यधिकस्ततः ॥ २३ ॥
यस्मिन्भयार्दितः सम्यक् क्षेमं विन्दत्यपि क्षणम् ।
स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते ॥ २४ ॥
त्वमेव प्रीतिमांस्तस्मात्कुरूणां कुरुसत्तम ।
भव राजा जय स्वर्ग सतो रक्षाऽसतो जहि ॥ २५ ॥
अनु त्वां तात जीवन्तु सुहृद· साधुभिः सह ।
पर्जन्यमिव भूतानि स्वादुद्रुममिव द्विजाः ॥ २६ ॥
(अ, ७६) स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि ।
युधि०– तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ॥ २७ ॥
भीष्म०– विद्यालक्षणसंपन्नाः सर्वत्र समदर्शिनः ।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः ॥ २८ ॥
ऋग्यजुःसामसंपन्नाः स्वेषु कर्मस्ववस्थिता· ।
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ॥ २९ ॥

जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः।
एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ११३० ॥

अश्रोत्रियाः सर्व एव सर्वे चानाहिताग्नयः।
तान् सर्वान् धार्मिको राजा बलिं विष्टिं च कारयेत् ॥ ३१ ॥

आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः।
एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः ॥ ३२ ॥

ऋत्विक् पुरोहितो मन्त्री दूतो वार्तानुकर्षकः।
एते क्षत्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ३३ ॥

अश्वारोहा गजारोहा रथिनोऽथ पदातयः।
एते वैश्यसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ३४ ॥

एतेभ्यो बलिमादद्याद्धीनकोशो महीपतिः।
ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ॥ ३५ ॥

अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम्।
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत ॥३६ ॥

विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन।
नियम्याः संविभज्याश्च धर्मानुग्रहकारणात् ॥ ३७ ॥

यस्य स्म विषये राजन् स्तेनो भवति वै द्विजः।
राज्ञ एवापराधं तं मन्यन्ते तद्विदो जनाः ॥ ३८ ॥

अवृत्त्या यो भवेत्स्तेनो वेदवित्स्नातकस्तथा।
राजन् स राज्ञा भर्तव्य इति वेदविदो विदुः ॥ ३९ ॥

स चेन्नो परिवर्तेत कृतवृत्तिः परन्तप।
ततो निर्वासनीयः स्यात्तस्माद्देशात्सबान्धवः ॥ ११४० ॥

(अ. ७८) अथ चेत्सर्वतः क्षत्रं प्रदुष्येद्ब्राह्मणं प्रति।
युधि०— कस्तस्य ब्रह्मणस्त्राता को धर्मः किं परायणम् ॥ ४१ ॥

भीष्म०—तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च।
अमायया मायया च नियन्तव्यं तदा भवेत् ॥ ४२ ॥

क्षत्रियस्यातिवृत्तस्य ब्राह्मणेषु विशेषत ।
ब्रह्मैव सन्नियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥ ४३ ॥
ब्रह्मवीर्ये मृदुभूते क्षत्रवीर्ये च दुर्बले।
दुष्टेषु सर्ववर्णेषु ब्राह्मणान् प्रति सर्वशः ॥ ४४ ॥
ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः।
ब्राह्मणान् परिरक्षन्तो धर्ममात्मानमेव च।
मनस्विनो मन्युमन्तः पुण्यश्लोका भवन्ति ते ॥ ४५ ॥
यथाश्वमेधावभृथे स्नाताः पूता भवन्त्युत।
दुष्कृतस्य प्रणाशेन तत• शस्त्रहता रणे ॥ ४६ ॥
भवत्यधर्मो धर्मो हि धर्माधर्मावुभावपि।
कारणाद्देशकालस्य देशकाल स तादृशः ॥ ४७ ॥
मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम्।
धर्म्याः पापानि कुर्वाणा गच्छन्ति परमां गतिम् ॥ ४८ ॥
ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति।
आत्मत्राणे वर्णदोषे दुर्दम्यनियमेषु च ॥ ४९ ॥

युधि०- अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसङ्करे।
संप्रमूढेषु क्षत्रेषु यद्यन्योऽभिभवेद्बली ॥ ११५० ॥
दस्युभ्योऽथ प्रजा रक्षेद्दण्ड धर्मेण धारयन्।
कार्यं कुर्यान्न वा कुर्यात्स वार्यो वा भवेन्न वा ॥ ५१ ॥

भीष्म०- अपारे यो भवेत्पारमप्लवे य• प्लवो भवेत्।
शूद्रो वा यदि वाऽप्यन्य• सर्वथा मानमर्हति ॥ ५२ ॥
किं तैर्येऽनडुहो नोह्या• किं धेन्वा वाऽप्यदुग्धया।
वन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाऽप्यरक्षता ॥ ५३ ॥
यथा दारुमयो हस्ती यथा चर्ममयो मृग•।
यथा ह्यनर्थः षण्ढो वा पार्थ क्षेत्र यथोषरम्॥ ५४ ॥
एवं विप्रोऽनधीयानो राजा यश्च न रक्षिता।
मेघो न वर्षते यश्च सर्वथा ते निरर्थकाः ॥ ५५ ॥

नित्यं यस्तु सतो रक्षेदसतश्च निवर्तयेत् ।
स एव राजा कर्तव्यस्तेन सर्वमिदं धृतम् ॥ ५६ ॥

(अ. ८०) यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
युधि०– पुरुषेणासहायेन किमु राज्ञा पितामह ॥ ५७ ॥
किंशील: किंसमाचारो राज्ञोऽथ सचिवो भवेत् ।
कीदृशे विश्वसेद्राजा कीदृशे न च विश्वसेत् ॥ ५८ ॥

भीष्म०– चतुर्विधानि मित्राणि राज्ञां राजन् भवन्त्युत ।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥ ५९ ॥

चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथापरौ ॥ ११६० ॥

सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मन ॥ ६१ ॥

न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे ।
प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥ ६२ ॥

असाधुः साधुतामेति साधुर्भवति दारुणः ।
अरिश्च मित्रं भवति मित्रं चापि प्रदुष्यति ।
अनित्यचित्त· पुरुषस्तस्मिन् को जातु विश्वसेत् ॥ ६३ ॥

तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् ।
एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः ॥ ६४ ॥

अविश्वासश्च सर्वत्र मृत्युना च विशिष्यते ।
अकालमृत्युर्विश्वासो विश्वसन् हि विपद्यते ॥ ६५ ॥

यस्मिन् करोति विश्वासमिच्छतस्तस्य जीवति ।
तस्माद्विश्वसितव्यं च शङ्कितव्यं च केषुचित् ।
एषा नीतिगतिस्तात लक्ष्या चैव सनातनी ॥ ६६ ॥

यं मन्येत ममाभावादिममर्थागमं स्पृशेत् ।
नित्यं तस्माच्छङ्कितव्यममित्रं तद्विदुर्बुधाः ॥ ६७ ॥

यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति ।
न तत्रानिच्छतस्तस्य भिद्येरन् सर्वसेतवः ॥ ६८ ॥

तथैवात्युदकाङ्क्षीतस्तस्य भेदनमिच्छति।
यमेव लक्षणं विद्यात्तममित्रं विनिर्दिशेत् ॥ ६९ ॥

यन्मन्येत ममाभावादस्याभावो भवेदिति।
तस्मिन् कुर्वीत विश्वासं यथा पितरि वै तथा ॥ ११७० ॥

व्यसनान्नित्यभीतो यः समृद्ध्या यो न दुष्यति।
यत्स्यादेवंविधं मित्र तदात्मसममुच्यते ॥ ७१ ॥

कुलीनः शीलसंपन्नस्तितिक्षुरविकत्थनः।
शूरश्चार्यश्च विद्वांश्च प्रतिपत्तिविशारदः ॥ ७२ ॥

एते ह्यमात्याः कर्तव्याः सर्वकर्मस्ववस्थिताः।
पूजिताः संविभक्ताश्च सुसहाया स्वनुष्ठिताः ॥ ७३ ॥

कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु।
युक्ता महत्सु कार्येषु श्रेयांस्युत्थापयन्त्युत ॥ ७४ ॥

ज्ञातिभ्यश्चैव बुद्ध्येथा मृत्योरिव भयं सदा।
उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ॥ ७५ ॥

निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणम्।
नान्यो निकारं सहते ज्ञातिर्ज्ञातेः कथञ्चन ॥ ७६ ॥

आत्मानमेव जानाति निकृतं बान्धवैरपि।
तेषु सन्ति गुणाश्चैव नैर्गुण्यं चैव लक्ष्यते ॥ ७७ ॥

संमानयेत्पूजयेच्च वाचा नित्यं च कर्मणा।
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किञ्चिदाचरेत् ॥ ७८ ॥

विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा।
न हि दोषो गुणो वेति निरूप्यस्तेषु दृश्यते ॥ ७९ ॥

अस्यैवं वर्तमानस्य पुरुषस्याप्रमादिनः।
अमित्राः संप्रसीदन्ति तथा मित्रीभवन्त्यपि ॥ ११८० ॥

य एवं वर्तते नित्यं ज्ञातिसंबन्धिमण्डले।
मित्रेष्वमित्रे मध्यस्थे चिरं यशसि तिष्ठति ॥ ८१ ॥

## वासुदेवनारदसंवादः

(अ. ८१) एवमग्राह्यके तस्मिन् ज्ञातिसम्बन्धिमण्डले।
युधि०– मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥ ८२ ॥

भीष्म०– अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
संवादं वासुदेवस्य सुरर्षेर्नारदस्य च ॥ ८३ ॥

वासु०– नासुहृत्परमं मन्त्रं नारदार्हति वेदितुम्।
अपण्डितो वाऽपि सुहृत्पण्डितो वाऽप्यनात्मवान् ॥ ८४ ॥

स ते सौहृदमास्थाय किञ्चिद्वक्ष्यामि नारद।
कृत्स्नं बुद्धिबलं प्रेक्ष्य संपृच्छे त्रिदिवङ्गम ॥ ८५ ॥

दास्यमैश्वर्यवादेन ज्ञातिनां न करोम्यहम्।
अर्धं भोक्तास्मि भोगानां वाग्दुरुक्तानि च क्षमे ॥ ८६ ॥

अरणीमग्निकामो वा मथ्नाति हृदयं मम।
वाचा दुरुक्तं देवर्षे तन्मे दहति नित्यदा ॥ ८७ ॥

बलं सङ्कर्षणे नित्यं सौकुमार्यं पुनर्गदे।
रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद ॥ ८८ ॥

अन्ये हि सुमहाभागा बलवन्तो दुरुत्सहाः।
नित्योत्थानेन संपन्ना नारदान्धकवृष्णयः ॥ ८९ ॥

यस्य न स्युर्न वै स स्याद्यस्य स्युः कृत्स्नमेव तत्।
द्वाभ्यां निवारितो नित्यं वृणोम्येकतरं न च ॥ ११९० ॥

स्यातां यस्याहुकाक्रूरौ किं नु दुःखतरं ततः।
यस्य चापि न तौ स्यातां किं नु दुःखतरं ततः ॥ ९१ ॥

सोऽहं कितवमातेव द्वयोरपि महामते।
एकस्य जयमाशंसे द्वितीयस्यापराजयम् ॥ ९२ ॥

ममैवं क्लिश्यमानस्य नारदोभयतः सदा।
वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा ॥ ९३ ॥

नारद०–आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च ह।
प्रादुर्भवन्ति वार्ष्णेय स्वकृता यदि वाऽन्यतः ॥ ९४ ॥
सेयमाभ्यन्तरा तुभ्यमापत्कृच्छ्रा स्वकर्मजा।
अक्रूरभोजप्रभवा सर्वे ह्येते तदन्वयाः ॥ ९५ ॥
अर्थहेतोर्हि कामाद्वा वाचा बीभत्सयाऽपि वा।
आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् ॥ ९६ ॥
कृतमूलमिदानीं तज्ज्ञातिशब्दं सहायवत्।
न शक्यं पुनरादातुं वान्तमन्नमिव त्वया ॥ ९७ ॥
बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथञ्चन।
ज्ञातिभेदभयात्कृष्ण त्वया चापि विशेषतः ॥ ९८ ॥
तच्च सिद्ध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम्।
महाक्षयं व्ययो वा स्याद्विनाशो वा पुनर्भवेत् ॥ ९९ ॥
अनायासेन शस्त्रेण मृदुना हृदयच्छिदा।
जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च ॥ १२०० ॥
शक्त्याऽन्नदानं सतत तितिक्षार्जवमार्दवम्।
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥ १ ॥
ज्ञातीनां वक्तुकामानां कटुकानि लघूनि च।
गिरा त्वं हृदयं वाचं शमयस्व मनांसि च ॥ २ ॥
नामहापुरुषः कश्चिन्नानात्मा नासहायवान्।
महतीं धुरमाधत्ते तामुद्यम्योरसा वह ॥ ३ ॥
सर्व एव गुरुं भारमनड्वान् वहते समे।
दुर्गे प्रतीकः सुगवो भारं वहति दुर्वहम् ॥ ४ ॥
भेदाद्विनाशः सङ्घानां सङ्घमुख्योऽसि केशव।
यथा त्वां प्राप्य नोत्सीदेदयं सङ्घस्तथा कुरु ॥ ५ ॥
नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात्।
नान्यत्र धनसन्त्यागाद्गणः प्राज्ञेऽवतिष्ठते ॥ ६ ॥

धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं सदा।
ज्ञातीनामविनाशः स्याद्यथा कृष्ण तथा कुरु ॥ ७ ॥

(अ. ८२) एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत।
भीष्म०– य. कश्चिज्जनयेदर्थं राज्ञा रक्ष्य. सदा नरः ॥ ८ ॥

ह्रियमाणममात्येन भृत्यो वा यदि वा भृतः।
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥ ९ ॥

श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत्।
अमात्या ह्यपहर्तारो भूयिष्ठं घ्नन्ति भारत ॥ १२१० ॥

राजकोशस्य गोप्तारं राजकोशविलोपकाः।
समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षित ॥ ११ ॥

## सभ्यादिलक्षणकथनम्

(अ. ८३) सभासद. सहायाश्च सुहृदश्च विशां पते।
युधि०– परिच्छदास्तथाऽमात्या कीदृशा स्युः पितामह ॥ १२ ॥

भीष्म०– ह्रीनिषेवास्तथा दान्ता. सत्यार्जवसमन्विताः।
शक्ताः कथयितुं सम्यक्ते तव स्युः सभासदः ॥ १३ ॥

अमात्यांश्चातिशूरांश्च ब्राह्मणांश्च परिश्रुतान्।
सुसन्तुष्टांश्च कौन्तेय महोत्साहांश्च कर्मसु।
एतान् सहायॉल्लिप्सेथाः सर्वास्वापत्सु भारत ॥ १४ ॥

कुलीन पूजितो नित्यं न हि शक्तिं निगूहति ॥ १५ ॥
प्रसन्नमप्रसन्नं वा पीडितं हृतमेव वा।
आवर्तयति भूयिष्ठं तदेव ह्यनुपालितम् ॥ १६ ॥

कुलीना देशजाः प्राज्ञा रूपवन्तो बहुश्रुताः।
प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः ॥ १७ ॥

दौष्कुलेयाश्च लुब्धाश्च नृशंसा निरपत्रपाः।
ते त्वां तात निषेवेयुर्यावदार्द्रकपाणयः ॥ १८ ॥

कुलीनान् शीलसंपन्नानिङ्गितज्ञाननिष्ठुरान् ।
देशकालविधानज्ञान् भर्तृकार्यहितैषिणः ।
नित्यमर्थेषु सर्वेषु राजा कुर्वीत मन्त्रिणः ॥ १९ ॥
अनार्या ये न जानन्ति समयं मन्दचेतसः ।
तेभ्यः परिजुगुप्सेथा ये चापि समयच्युताः ॥ १२२० ॥
नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः ।
यस्त्वेको बहुभिः श्रेयान् कामं तेन गणं त्यजेत् ॥ २१ ॥
श्रेयसो लक्षणं चैतद्विक्रमो यस्य दृश्यते ।
कीर्तिप्रधानो यश्च स्यात्समये यश्च तिष्ठति ॥ २२ ॥
कुलीनः कुलसंपन्नस्तितिक्षुर्दक्ष आत्मवान् ।
शूरः कृतज्ञः सत्यश्च श्रेयसः पार्थ लक्षणम् ॥ २३ ॥
अत ऊर्ध्वममात्यानां परीक्षेत गुणागुणम् ।
संयतात्मा कृतप्रज्ञो भूतिकामश्च भूमिपः ॥ २४ ॥
यौनाः श्रौतास्तथा मौलास्तथैवाप्यनहङ्कृताः ।
कर्तव्या भूतिकामेन पुरुषेण बुभूषता ॥ २५ ॥
एषां वैनयिकी बुद्धिः प्रकृतिश्चैव शोभना ।
तेजो धैर्यं क्षमा शौचमनुरागः स्थितिर्धृतिः ॥ २६ ॥
परीक्ष्य च गुणान्नित्यं प्रौढभावान्धुरन्धरान् ।
पञ्चोपधाव्यतीतांश्च कुर्याद्राजाऽर्थकारिणः ॥ २७ ॥
पर्याप्तवचनान्वीरान्प्रतिपत्तिविशारदान् ।
कुलीनान् सत्त्वसंपन्नानिङ्गितज्ञाननिष्ठुरान् ॥ २८ ॥
देशकालविधानज्ञान्भर्तृकार्यहितैषिणः ।
नित्यमर्थेषु सर्वेषु राजन्कुर्वीत मन्त्रिणः ॥ २९ ॥
हीनतेजोभिसंसृष्टो नैव जातु व्यवस्यति ।
अवश्यं जनयत्येव सर्वकर्मसु संशयम् ॥ १२३० ॥
एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत ।
धर्मार्थकामसंयुक्तो नालं मन्त्रं परीक्षितुम् ॥ ३१ ॥

तथैवानभिजातोऽपि काममस्तु बहुश्रुत.।
अनायक इवाचक्षुर्मुह्यत्यणुषु कर्मसु ॥ ३२ ॥

अनृजुस्त्वनुरक्तोऽपि संपन्नश्चेतरैर्गुणैः।
राज्ञः प्रज्ञानयुक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥ ३३ ॥

यो मित्रैः सह सम्बद्धो न पौरान्बहु मन्यते।
असुहृत्तादृशो ज्ञेयो न मन्त्रं श्रोतुमर्हति ॥ ३४ ॥

कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः।
सर्वकर्मसु य. शुद्धः स मन्त्रं श्रोतुमर्हति ॥ ३५ ॥

ज्ञानविज्ञानसंपन्नः प्रकृतिज्ञः परात्मनोः।
सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति ॥ ३६ ॥

सत्यवाक् शीलसंपन्नो गम्भीरः सत्रपो मृदु.।
पितृपैतामहो यः स्यात्स मन्त्रं श्रोतुमर्हति ॥ ३७ ॥

पौरजानपदा यस्मिन्विश्वासं धर्मतो गताः।
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ॥ ३८ ॥

तस्मात्सर्वैर्गुणैरेतैरुपपन्नाः सुपूजिताः।
मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवरा महदीप्सवः ॥ ३९ ॥

स्वासु प्रकृतिषु च्छिद्रं लक्षयेरन्परस्य च।
मन्त्रिणां मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्धते ॥ १२४० ॥

तेषां त्रयाणां विविधं विमर्शं
विबुध्य चित्तं विनिवेश्य तत्र।
स्वनिश्चयं तत्प्रतिनिश्चयञ्चं
निवेदयेदुत्तरमन्त्रकाले ॥ ४१ ॥

धर्मार्थकामज्ञमुपेत्य पृच्छे-
द्युक्तो गुरुं ब्राह्मणमुत्तरार्थम्।
निष्ठा कृता तेन यदा सहः स्या-
त्तं मन्त्रमार्गं प्रणयेदसक्तः ॥ ४२ ॥

(अ. ८५) व्यवहारेण शुद्धेन प्रजापालनतत्परः।
प्राप्य धर्मं च कीर्तिं च लोकावाप्नोत्युभौ शुचिः ॥ ४३ ॥

युधि०— कीदृशैर्व्यवहारैस्तु कैश्च व्यवहरेन्नृप:।
एतत्पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥ ४४ ॥
ये चैव पूर्वं कथिता गुणास्ते पुरुषं प्रति।
नैकस्मिन् पुरुषे ह्येते विद्यन्त इति मे मतिः ॥ ४५ ॥

भीष्म०— एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमन्।
दुर्लभः पुरुषः कश्चिदेभिर्युक्तो गुणैः शुभैः ॥ ४६ ॥
किं तु सङ्क्षेपतः शीलं प्रयत्नेनेह दुर्लभम्।
वक्ष्यामि तु यथामात्यान् यादृशांश्च करिष्यसि ॥ ४७ ॥
चतुरो ब्राह्मणान् वैद्यान् प्रगल्भान् स्नातकान् शुचीन्।
क्षत्रियांश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः ॥ ४८ ॥
वैश्यान्वित्तेन संपन्नानेकविंशतिसङ्ख्यया।
त्रींश्च शूद्रान्विनीतांश्च शुचीन् कर्मणि पूर्वके ॥ ४९ ॥
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥ १२५० ॥
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम्।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम्।
वर्जितं चैव व्यसनैः सुघोरैः सप्तभिर्भृशम् ॥ ५१ ॥
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत्।
ततः संप्रेषयेद्राष्ट्रे राष्ट्रीयाय च दर्शयेत् ॥ ५२ ॥
अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा ॥ ५३ ॥
न चापि गूढं द्रव्यं ते ग्राह्यं कार्योपघातकम्।
कार्ये खलु विपन्ने त्वां सोऽधर्मस्तांश्च पीडयेत् ॥ ५४ ॥
विद्रवेच्चैव राष्ट्रं ते श्येनात्पक्षिगणा इव।
परिस्रवेच्च सततं नौर्विशीर्णेव सागरे ॥ ५५ ॥

बलात्कृतानां बलिभिः कृपणं बहु जल्पताम्।
नाथो वै भूमिपो नित्यमनाथानां नृणां भवेत् ॥ ५६ ॥

ततः साक्षिबलं साधु द्वैधवादकृतं भवेत्।
असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः ॥ ५७ ॥

अपराधानुरूपं च दण्डं पापेषु धारयेत्।
वियोजयेद्धनैर्ऋद्धानधनानथ बन्धनैः ॥ ५८ ॥

विनयेच्चापि दुर्वृत्तान् प्रहारैरपि पार्थिवः।
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥ ५९ ॥

राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत्।
आदीपकस्य स्तेनस्य वर्णसङ्करिकस्य च ॥ १२६० ॥

सम्यक् प्रणयतो दण्डं भूमिपस्य विशाम्पते।
युक्तस्य वा नास्त्यधर्मो धर्म एव हि शाश्वत ॥ ६१ ॥

न परस्य प्रवादेन परेषां दण्डमर्पयेत्।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयीत वा ॥ ६२ ॥

न तु हन्यान्नृपो जातु दूतं कस्याञ्चिदापदि ॥ ६३ ॥

कुलीनः कुलसंपन्नो वाग्मी दक्षः प्रियंवद्ः।
यथोक्तवादी स्मृतिमान् दूतः स्यात्सप्तभिर्गुणैः ॥ ६४ ॥

एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता।
शिरोरक्षश्च भवति गुणैरेतैः समन्वितः ॥ ६५ ॥

धर्मशास्त्रार्थतत्त्वज्ञः संधिविग्रहिको भवेत्।
मतिमान् धृतिमान् ह्रीमान् रहस्यविनिगूहिता।
कुलीनः सत्त्वसंपन्नः शुक्लोऽमात्यः प्रशस्यते ॥ ६६ ॥

एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत्।
व्यूहयन्त्रायुधानां च तत्त्वज्ञो विक्रमान्वितः।
वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ॥ ६७ ॥

(अ. ८६) कथंविधं पुरं राजा स्वयमावस्तुमर्हति ।
युधि०- कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह ॥ ६८ ॥
भीष्म०- षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत् ।
सर्वसंपत्प्रधानं यद्बाहुल्यं चापि संभवेत् ॥ ६९ ॥
धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गं मृद्दुर्गं वनदुर्गं च तानि षट् ॥ १२७० ॥
यत्पुरं दुर्गसंपन्नं धान्यायुधसमन्वितम् ।
दृढप्राकारपरिखं हस्त्यश्वरथसङ्कुलम् ॥ ७१ ॥
विद्वांसः शिल्पिनो यत्र निचयाश्च सुसञ्चिताः ।
धार्मिकश्च जनो यत्र दाक्ष्य उत्तममास्थित ॥ ७२ ॥
समाजोत्सवसंपन्नं सदा पूजितदैवतम् ।
वश्यामात्यबलो राजा तत्पुरं स्वयमाविशेत् ॥ ७३ ॥
तत्र कोशं बलं मित्रं व्यवहारं च वर्धयेत् ।
पुरे जनपदे चैव सर्वदोषान्निवर्तयेत् ॥ ७४ ॥
उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् ।
पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ॥ ७५ ॥
कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत् ॥ ७६ ॥
आश्रमेषु यथाकालं चैलभाजनभोजनम् ।
सदैवोपहरेद्राजा सत्कृत्याभ्यर्च्य मान्य च ॥ ७७ ॥
तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः ।
तेषु सत्कारमानाभ्यां संविभागांश्च कारयेत् ॥ ७८ ॥
ते कस्यांचिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्यथाकामं तापसाः संशितव्रताः ॥ ७९ ॥
(अ. ८७) राष्ट्रगुप्तिं च मे राजन् राष्ट्रस्यैव तु सङ्ग्रहम् ।
युधि०- सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १२८० ॥

भीष्म०— ग्रामस्याधिपतिः कार्यो दशग्राम्यास्तथा परः।
द्विगुणाया शतस्यैवं सहस्रस्य च कारयेत् ॥ ८१ ॥

ग्रामे यान् ग्रामदोषांश्च ग्रामिकः प्रतिभावयेत्।
तान् ब्रूयाद्दशपायासौ स तु विंशतिपाय वै ॥ ८२ ॥

सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने।
ग्रामाणां शतपालाय सर्वमेव निवेदयेत् ॥ ८३ ॥

यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्रियात्।
दशपस्तेन भर्तव्यस्तेनापि द्विगुणाधिपः ॥ ८४ ॥

ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृत।
महान्तं भरतश्रेष्ठ सुस्फीतं जनसङ्कुलम् ॥ ८५ ॥

तत्र ह्यनेकपायत्तं राज्ञो भवति भारत ॥ ८६ ॥

शाखानगरमर्हस्तु सहस्रपतिरुत्तमः।
धान्यहैरण्यभोगेन भोक्तुं राष्ट्रीयसङ्गतः ॥ ८७ ॥

तेषां सङ्ग्रामकृत्यं स्याद्ग्रामकृत्यं च तेषु यत्।
धर्मज्ञः सचिवः कश्चित्तत्तत्पश्येदतन्द्रितः ॥ ८८ ॥

नगरे नगरे वा स्यादेकः सर्वार्थचिन्तक।
उच्चैःस्थाने घोररूपो नक्षत्राणामिव ग्रहः ॥ ८९ ॥

भवेत्स तान्परिक्रामेत्सर्वानेव सभासदः।
तेषां वृत्तिं परिणयेत्कश्चिद्राष्ट्रेषु तच्चर ॥ १२९० ॥

जिघांसवः पापकामाः परस्वादायिनः शठाः।
रक्षाभ्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥ ९१ ॥

विक्रयं क्रयमध्वानं भक्तं च सपरिच्छदम्।
योगक्षेमं च संप्रेक्ष्य वणिजां कारयेत्करान् ॥ ९२ ॥

उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत्।
शिल्पं प्रति करानेव शिल्पिनः प्रति कारयेत् ॥ ९३ ॥

यथा राजा च कर्ता च स्याता कर्मणि भागिनौ।
संवेक्ष्य तु तथा राज्ञा प्रणेया. सततं करा. ॥ ९४ ॥
नोच्छिन्द्यादात्मनो मूल परेषां चापि तृष्णया।
आपदर्थं च निर्यातं धनं त्विह विवर्धयेत् ॥ ९५ ॥
राष्ट्रं च कोशभूतं स्यात्कोशो वेश्मगतस्तथा ॥ ९६ ॥
बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम्।
एवं नास्य प्रकुप्यन्ति जना सुखितदु:खिताः ॥ ९७ ॥
प्रागेव तु धनादानमनुभाष्य तत. पुन।
सन्निपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् ॥ ९८ ॥
इयमापत्समुत्पन्ना परचक्रभयं महत्।
अपि चान्ताय कल्पन्ते वेणोरिव फलागमाः ॥ ९९ ॥
अस्यामापदि घोरायां सम्प्राप्ते दारुणे भये।
परित्राणाय भवत. प्रार्थयिष्ये धनानि व. ॥ १३०० ॥
प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये।
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः ॥ १ ॥
इति वाचा मधुरया श्लक्ष्णया सोपचारया।
स्वरश्मीनभ्यवसृजेद्योगमाधाय कालवित् ॥ २ ॥
(अ ८८) यथादेशं यथाकालं यथाबुद्धि यथाबलम्।
अनुशिष्यात्प्रजा राजा धर्मार्थी तद्धिते रतः ॥ ३ ॥
यथा तासां च मन्येत श्रेय आत्मन एव च।
तथा कर्माणि सर्वाणि राजा राष्ट्रेषु वर्तयेत् ॥ ४ ॥
मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपम्।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥ ५ ॥
जलौकावत्पिबेद्राष्ट्रं मृदुनैव नराधिपः।
व्याघ्रीव च हरेत्पुत्रान् सन्दशेन्न च पीडयेत् ॥ ६ ॥
यथा शल्यकवानाखुः पदं धूनयते सदा।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥ ७ ॥

अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत्।
ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत् ॥ ८ ॥

दमयन्निव दम्यानि शश्वद्भारं विवर्धयेत्।
मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् ॥ ९ ॥

सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः।
उचितेनैव भोक्तव्यास्ते भविष्यन्ति यत्नतः ॥ १३१० ॥

तस्मात्सर्वसमारंभो दुर्लभः पुरुषं प्रति।
यथामुख्यान्सान्त्वयित्वा भोक्तव्य इतरो जनः ॥ ११ ॥

ततस्तान् भेदयित्वा तु परस्परविवक्षितान्।
भुञ्जीत सान्त्वयंश्चैव यथासुखमयत्नत ॥ १२ ॥

न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत्।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ॥ १३ ॥

(अ. ८९) आत्मानं सर्वतो रक्षन् राजन् रक्षस्व मेदिनीम्।
आत्ममूलमिदं सर्वमाहुर्वै विदुषो जनाः ॥ १४ ॥

किं छिद्रं को नु सङ्गो मे किं वाऽस्त्यविनिपातितम्।
कुतो मामाश्रयेद्दोष इति नित्यं विचिन्तयेत् ॥ १५ ॥

अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुन ।
गुप्तैश्चारैरनुमतैः पृथिवीमनुसारयेत् ॥ १६ ॥

ये च त्वाऽभिप्रशंसेयुर्निन्देयुरथवा पुनः।
सर्वान्सुपरिणीतांस्तान् कारयेथा युधिष्ठिर ॥ १७ ॥

एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम्।
मित्रामित्रमथो मध्यं सर्वभूतेषु भारत ॥ १८ ॥

(अ. ९०) धर्माय राजा भवति न कामकरणाय तु।
स चेदधर्मं चरति नरकायैव गच्छति ॥ १९ ॥

यस्मिन् धर्मो विराजेत तं राजानं प्रचक्षते।
यस्मिन्विलीयते धर्मस्तं देवा वृषलं विदुः ॥ १३२० ॥

वृषो हि भगवान्धर्मो यस्तस्य कुरुते ह्यलम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं विवर्धयेत् ॥ २१ ॥

दर्पो नाम श्रियः पुत्रो जज्ञेऽधर्मादिति श्रुतिः ।
तेन देवासुरा राजन् नीताः सुबहवो व्ययम् ॥ २२ ॥

राजर्षयश्च बहवस्तथा बुध्यस्व पार्थिव ।
राजा भवति तं जित्वा दासस्तेन पराजितः ॥ २३ ॥

(अ. ९१) कालवर्षी च पर्जन्यो धर्मचारी च पार्थिवः ।
संपद्यदेषा भवति सा बिभर्ति सुखं प्रजाः ॥ २४ ॥

यो न जानाति हर्तुं वा वस्त्राणां रजको मलम् ।
रक्तानां वा शोधयितुं यथा नास्ति तथैव सः ॥ २५ ॥

कर्म शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि ।
ब्रह्मचर्यं तपो मन्त्राः सत्यं चापि द्विजातिषु ॥ २६ ॥

तेषां यः क्षत्रियो वेद वस्त्राणामिव शोधनम् ।
शीलदोषान्विनिर्हर्तुं स पिता स प्रजापतिः ॥ २७ ॥

दुर्बलस्य च यच्चक्षुर्मुनेराशीविषस्य च ।
अविषह्यतमं मन्ये मा स्म दुर्बलमासदः ॥ २८ ॥

मा स्म तात रणे स्थित्वा भुञ्जीथा दुर्बलं जनम् ।
मा त्वां दुर्बलचक्षूंषि दहन्त्वग्निरिवाशयम् ॥ २९ ॥

यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदताम् ।
तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसनात् ॥१३३०॥

यदि नात्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु ।
न हि पापं कृतं कर्म सद्यः फलति गौरिव ॥ ३१ ॥

संविभज्य यथा भुङ्क्ते नामात्यानवमन्यते ।
निहन्ति बलिनं दृप्तं स राज्ञो धर्म उच्यते ॥ ३२ ॥

त्रायते हि यदा सर्वं वाचा कायेन कर्मणा ।
पुत्रस्यापि न मृष्येच्च स राज्ञो धर्म उच्यते ॥ ३३ ॥

कृपणानाथवृद्धानां यदाश्रु परिमार्जति।
हर्षं सञ्जनयन्नृणां स राज्ञो धर्म उच्यते ॥ ३४ ॥

न जात्वदक्षो नृपतिः प्रजाः शक्नोति रक्षितुम्।
भारो हि सुमहांस्तात राज्यं नाम सुदुष्करम् ॥ ३५ ॥

तद्दण्डविन्नृपः प्राज्ञः शूरः शक्नोति रक्षितुम्।
न हि शक्यमदण्डेन क्लीबेनाबुद्धिनाऽपि वा ॥ ३६ ॥

(अ. ९२) अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः।
वृद्ध्यां च कुरुते बुद्धिं स धर्मेण विराजते ॥ ३७ ॥

अर्थानामननुष्ठाता कामचारी विकत्थनः।
अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ॥ ३८ ॥

अथाददानः कल्याणमनसूयुर्जितेन्द्रियः।
वर्धते मतिमान् राजा स्रोतोभिरिव सागरः ॥ ३९ ॥

न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः।
बुद्धितो मित्रतश्चापि सततं वसुधाधिप ॥ १३४० ॥

(अ. ९३) अप्रियं यस्य कुर्वीत भूयस्तस्य प्रियं चरेत्।
नचिरेण प्रियः स स्याद्योऽप्रियः प्रियमाचरेत् ॥ ४१ ॥

अपकृत्य बलस्थस्य दूरस्थोऽस्मीति नाश्वसेत्।
श्येनाभिपतनैरेते निपतन्ति प्रमाद्यतः ॥ ४२ ॥

दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः।
अबलानभियुञ्जीत न तु ये बलवत्तराः ॥ ४३ ॥

(अ. ९४) अयुद्धेनैव विजयं वर्धयेद्वसुधाधिपः।
जघन्यमाहुर्विजयं युद्धेन च नराधिप ॥ ४४ ॥

न चाप्यलब्धं लिप्सेत मूले नातिदृढे सति।
न हि दुर्बलमूलस्य राज्ञो लाभो विधीयते ॥ ४५ ॥

यस्य स्फीतो जनपदः संपन्नप्रियराजकः।
सन्तुष्टपुष्टसचिवो दृढमूलः स पार्थिवः ॥ ४६ ॥

यस्य योधाः सुसन्तुष्टाः सान्त्विताः सूपधास्थिताः।
अल्पेनापि स दण्डेन महीं जयति पार्थिवः ॥ ४७ ॥

प्रतापकालमधिकं यदा मन्येत चात्मनः।
तदा लिप्सेत मेधावी परभूमिधनान्युत ॥ ४८ ॥

यदार्यजनविद्विष्टं कर्म तन्नाचरेद्बुध.।
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ॥ ४९ ॥

(अ ९५) धर्मेण निधनं श्रेयो न जय. पापकर्मणा ॥ १३५० ॥

नाधर्मश्चरितो राजन् सद्यः फलति गौरिव।
मूलानि च प्रशाखाश्च दहन् समधिगच्छति ॥ ५१ ॥

पापेन कर्मणा वित्तं लब्ध्वा पाप प्रहृष्यति।
स वर्धमानः स्तेयेन पाप पापे प्रसज्जति ॥ ५२ ॥

न धर्मोऽस्तीति मन्वानः शुचीनवहसन्निव।
अश्रद्दधानश्च भवेद्विनाशमुपगच्छति ॥ ५३ ॥

संबद्धो वारुणैः पाशैरमर्त्य इव मन्यते।
महादृतिरिवाध्मातः सुकृते नैव वर्तते।
ततः समूलो ह्रियते नदीकूलादिव द्रुमः ॥ ५४ ॥

अथैनमभिनिन्दन्ति भिन्नं कुम्भमिवाश्मनि।
तस्माद्धर्मेण विजयं कोशं लिप्सेत भूमिपः ॥ ५५ ॥

(अ.१००) उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत।
जानन् वक्रां न सेवेत प्रतिबाधेत चागताम् ॥ ५६ ॥

अमित्रा एव राजानं भेदेनोपचरन्त्युत।
तां राजा निकृतिं जानन्यथाऽमित्रान् प्रबाधते ॥ ५७ ॥

चैत्र्यां वा मार्गशीर्ष्यां वा सेनायोगः प्रशस्यते।
पक्कसस्या हि पृथिवी भवत्यम्बुमती तदा ॥ ५८ ॥

नैवातिशीतो नात्युष्णः कालो भवति भारत।
जलवांस्तृणवान्मार्गः समो गम्यः प्रशस्यते ॥ ५९ ॥

चारैः सुविदिताभ्यासः कुशलैर्वनगोचरैः।
न ह्यरण्येन शक्येत गन्तु मृगगणैरिव।
तस्मात्सेनासु तानेव योजयन्ति जयार्थिन॰॥ १३६०॥

अग्रतः पुरुषानीकं शक्तं चापि कुलोद्भवम्।
आवासस्तोयवान्दुर्गः पर्याकाश॰ प्रशस्यते॥ ६१॥

अकर्दमामनुदकाममर्यादामलोष्टकाम्।
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः॥ ६२॥

अपङ्का गर्तरहिता रथभूमिः प्रशस्यते।
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम्॥ ६३॥

बहुदुर्गा महाकक्षा वेणुवेत्रसमाकुला।
पदातीनां क्षमा भूमिः पर्वतोपवनानि च॥ ६४॥

पदातिबहुला सेना दृढा भवति भारत।
रथाश्वबहुला सेना सुदिनेषु प्रशस्यते॥ ६५॥

पदातिनागबहुला प्रावृट्काले प्रशस्यते।
गुणानेतान् प्रसङ्ख्याय देशकालौ प्रयोजयेत्॥ ६६॥

एवं सञ्चिन्त्य यो याति तिथिनक्षत्रपूजित॰।
विजयं लभते नित्य सेनां सम्यक् प्रयोजयन्॥ ६७॥

(अ॰१०१)अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर॥ ६८॥

इन्द्र॰— अहितेषु कथं ब्रह्मन्प्रवर्तेयमतन्द्रितः।
असमुच्छिद्य चैवैतान्नियच्छेयमुपायतः॥ ६९॥

बृह॰— न जातु कलहेनेच्छेन्नियन्तुमपकारिणः।
बालैरासेवितं ह्येतद्यदमर्षो यदक्षमा॥ १३७०॥

न शत्रुर्विवृत॰ कार्यो वधमस्याभिकाङ्क्षता।
क्रोधं भयं च हर्षं च नियम्य स्वयमात्मनि।
अमित्रमुपसेवेत विश्वस्तवदविश्वसन्॥ ७१॥

प्रियमेव वदेन्नित्यं नाप्रियं किंचिदाचरेत्।
विरमेच्छुष्कवैरेभ्य कण्ठायासांश्च वर्जयेत् ॥ ७२ ॥
यथा वैतंसिको युक्तो द्विजानां सदृशस्वनः।
तान् द्विजान् कुरुते वश्यांस्तथा युक्तो महीपतिः।
वशं चोपनयेच्छत्रून्निहन्याच्च पुरन्दर ॥ ७३ ॥
यदा स्यान्महती सेना हयनागरथाकुला।
पदातियन्त्रबहुला अनुरक्ता षडङ्गिनी ॥ ७४ ॥
यदा बहुविधां वृद्धिं मन्येत प्रतिलोमतः।
तदा विवृत्य प्रहरेद्दस्यूनामविचारयन् ॥ ७५ ॥

## गणवृत्तकथनम्

(अ.१०७)गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर।
युधि०- यथा गणाः प्रवर्धन्ते न भिद्यन्ते च भारत ॥ ७६ ॥
भीष्म०-गणानां च कुलानां च राज्ञां भरतसत्तम।
वैरसंदीपनावेतौ लोभामर्षौ नराधिप ॥ ७७ ॥
भेदे गणा विनश्युर्हि भिन्नास्तु सुजयाः परैः।
तस्मात्सङ्घातयोगेन प्रयतेरन् गणाः सदा ॥ ७८ ॥
प्राज्ञान् शूरान् महोत्साहान् कर्मसु स्थिरपौरुषान्।
मानयन्तः सदा युक्ता विवर्धन्ते गणा नृप ॥ ७९ ॥
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत।
गणमुख्यैस्तु संभूय कार्यं गणहितं मिथः ॥ १३८० ॥
जात्या च सदृशाः सर्वे कुलेन सदृशास्तथा।
न चोद्योगेन बुद्ध्या वा रूपद्रव्येण वा पुनः ॥ ८१ ॥
भेदाच्चैव प्रदानाच्च भिद्यन्ते रिपुभिर्गणाः।
तस्मात्सङ्घातमेवाहुर्गणानां शरणं महत् ॥ ८२ ॥
(अ.१०८)किं कार्यं सर्वधर्माणां गरीयो भवतो मतम्।
युधि०- यथाहं परमं धर्ममिह च प्रेत्य चाप्नुयाम् ॥ ८३ ॥

भीष्म०– मातापित्रोर्गुरूणां च पूजा बहुमता मम।
इह युक्तो नरो लोकान्यशश्च महदश्नुते ॥ ८४ ॥

सर्वे तस्यादृता लोका यस्यैते त्रय आदृताः।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ ८५ ॥

दशैव तु सदाचार्यः श्रोत्रियानतिरिच्यते।
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश ॥ ८६ ॥

पितृन्दश तु मातैका सर्वां वा पृथिवीमपि।
गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ॥ ८७ ॥

गुरुर्गरीयान्पितृतो मातृतश्चेति मे मतिः।
उभौ हि मातापितरौ जन्मन्येवोपयुज्यतः ॥ ८८ ॥

शरीरमेव सृजतः पिता माता च भारत।
आचार्यशिष्टा या जातिः सा दिव्या साऽजरामरा ॥ ८९ ॥

अवध्या हि सदा माता पिता चाप्यपकारिणौ।
न सन्दुष्यति तत्कृत्वा न च ते दूषयन्ति तम् ॥ १३९० ॥

येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः।
प्रीणाति मातरं येन पृथिवी तेन पूजिता ॥ ९१ ॥

येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम्।
मातृतः पितृतश्चैव तस्मात्पूज्यतमो गुरुः ॥ ९२ ॥

उपाध्यायं पितरं मातरं च
येऽभिद्रुह्यन्ते मनसा कर्मणा वा।
तेषां पापं भ्रूणहत्याविशिष्टं।
तस्मान्नान्यः पापकृदस्ति लोके ॥ ९३ ॥

मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य गुरुघातिनः।
चतुर्णां वयमेतेषां निष्कृतिं नानुशुश्रुम ॥ ९४ ॥

(अ.१०९)कथं धर्मे स्थातुमिच्छन्नरो वर्तेत भारत।
युधि०– विद्वन् जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ ९५ ॥

भीष्म०- यस्मिन् यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः।
मायाचारो मायया बाधितव्यः
साध्वाचार साधुना प्रत्युपेयः॥ ९६॥

(अ.१११)असौम्या सौम्यरूपेण सौम्याश्चासौम्यदर्शना.।
युधि०- ईदृशान् पुरुषांस्तात कथं विद्यामहे वयम्॥ ९७॥

भीष्म०-नोच्छ्रितं सहते कश्चित्प्रक्रिया वैरकारिका।
शुचेरपि हि युक्तस्य दोष एव निपात्यते॥ ९८॥

मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः॥ ९९॥

लुब्धानां शुचयो द्वेष्या कातराणा तरस्विनः।
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः।
अधार्मिकाणां धार्मिष्ठा विरूपाणां सुरूपिण.॥ १४००॥

बहव. पण्डिता मूर्खा लुब्धा मायोपजीविनः।
कुर्युर्दोषमदोषस्य बृहस्पतिमतेरपि॥ १॥

असभ्याः सभ्यसङ्काशा. सभ्याश्चासभ्यदर्शनाः।
दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम्॥ २॥

तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव।
न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः॥ ३॥

तस्मात्प्रत्यक्षदृष्टोऽपि युक्तो ह्यर्थं परीक्षितुम्।
परीक्ष्य ज्ञापयन्नर्थान्न पश्चात्परितप्यते॥ ४॥

कश्चिदेव हिते भर्तुर्दृश्यते न परात्मनोः।
कार्यापेक्षा हि वर्तन्ते भावस्निग्धाः सुदुर्लभाः॥ ५॥

सुदुखंः पुरुषज्ञानं चित्तं ह्येषां चलाचलम्।
समर्थो वाप्यशङ्को वा शतेष्वेकोऽधिगम्यते॥ ६॥

अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणम्।
शुभाशुभे महत्त्वं च प्रकर्तुं बुद्धिलाघवम्॥ ७॥

(अ.११२) किं पार्थिवेन कर्तव्यं किं च कृत्वा सुखी भवेत्।
युधि०- एतदाचक्ष्व तत्त्वेन सर्वधर्मभृतां वर॥ ८ ॥
भीष्म- हन्त तेऽहं प्रवक्ष्यामि शृणु कार्यैकनिश्चयम्।
यथा राज्ञेह कर्तव्यं यच्च कृत्वा सुखी भवेत्॥ ९॥
न चैवं वर्तितव्यं स्म यथेदमनुशुश्रुम।
उष्ट्रस्य तु महद्वृत्तं तन्निबोध युधिष्ठिर॥ १४१०॥
जातिस्मरो महानुष्ट्रः प्राजापत्ये युगेऽभवत्।
तपः सुमहदातिष्ठदरण्ये संशितव्रतः॥ ११॥
तपसस्तस्य चान्तेऽथ प्रीतिमानभवद्विभुः।
वरेण च्छन्दयामास ततश्चैनं पितामहः॥ १२॥
उष्ट्र०- भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम्।
योजनानां शतं साग्रं गच्छामि चरितुं विभो॥ १३॥
एवमस्त्विति चोक्तः स वरदेन महात्मना।
प्रतिलभ्य वरं श्रेष्ठं ययावुष्ट्रः स्वकं वनम्॥ १४॥
स चचार तदाऽऽलस्यं वरदानात्सुदुर्मतिः।
न चैच्छच्चरितुं गन्तुं दुरात्मा कालमोहितः॥ १५॥
स कदाचित्प्रसार्यैव तां ग्रीवां शतयोजनाम्।
चचार श्रान्तहृदयो वातश्चागात्ततो महान्॥ १६॥
स गुहाया शिरो ग्रीवां निधाय पशुरात्मनः।
आस्ते तु वर्षमभ्यागात्सुमहत्प्लावयज्जगत्॥ १७॥
अथ शीतपरीताङ्गो जंबुकः क्षुच्छ्रमान्वित।
सदारस्तां गुहामाशु प्रविवेश जलार्दितः॥ १८॥
स दृष्ट्वा मांसजीवी तु सुभृशं क्षुच्छ्रमान्वितः।
अभक्षयत्ततो ग्रीवामुष्ट्रस्य भरतर्षभ॥ १९॥
यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशुः।
तदा सङ्कोचने यत्नमकरोद्भृशदुःखितः॥ १४२०॥

यावदूर्ध्वमधश्चैव ग्रीवां सङ्क्षिपते पशुः।
तावत्तेन सदारेण जम्बुकेन स भक्षितः ॥ २१ ॥
स हत्वा भक्षयित्वा च तमुष्ट्रं जम्बुकस्तदा ।
विगते वातवर्षे तु निश्चक्राम गुहामुखात् ॥ २२ ॥
एवं दुर्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा।
आलस्यस्य क्रमात्पश्य महान्तं दोषमागतम् ॥ २३ ॥
त्वमप्येवंविधं हित्वा योगेन नियतेन्द्रियः।
वर्तस्व बुद्धिमूलं तु विजयं मनुरब्रवीत् ॥ २४ ॥
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ २५ ॥
राज्यं तिष्ठति दक्षस्य सङ्गृहीतेन्द्रियस्य च।
गुह्यं मन्त्रं श्रुतवतः सुसहायस्य चानघ ॥ २६ ॥
(अ.११३)राजा राज्यमनुप्राप्य दुर्लभं भरतर्षभ।
युधि०— अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः ॥ २७ ॥
भीष्म०— वेतसो वेगमायातं दृष्ट्वा नमति नापरे
सरिद्वेगेऽभ्यतिक्रान्ते स्थानमासाद्य तिष्ठति ॥ २८ ॥
मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च।
ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ॥ २९ ॥
जानन्विचरति प्राज्ञो न स याति पराभवम् ॥ १४३० ॥
एवमेव यदा विद्वान् मन्यतेऽतिबलं रिपुम्।
संश्रयेद्वैतसीं वृत्तिमेतत्प्रज्ञानलक्षणम् ॥ ३१ ॥

## टिट्टिभकम्, श्वर्षिसंवादः

(अ ११४)विद्वान् मूर्खप्रगल्भेन मृदु तीक्ष्णेन भारत।
युधि०— आक्रुश्यमानः सदसि कथं कुर्यादरिन्दम ॥ ३२ ॥
भीष्म०— श्रूयतां पृथिवीपाल यथैषोऽर्थोऽनुगीयते।
सदा सुचेताः सहते नरस्येहाल्पमेधसः ॥ ३३ ॥

अरुष्यन् क्रुश्यमानस्य सुकृतं नाम विन्दति।
दुष्कृतं चात्मनो मर्षी रुष्यत्येवापमार्ष्टि वै ॥ ३४ ॥
टिट्टिभं तमुपेक्षेत वाशमानमिवातुरम्।
यद्यद्ब्रूयादल्पमतिस्तत्तदस्य सहेद्बुधः ॥ ३५ ॥
प्राकृतो हि प्रशंसन्वा निन्दन्वा किं करिष्यति।
वने काक इवाबुद्धिर्वाशमानो निरर्थकम् ॥ ३६ ॥
यदि वाग्भिः प्रयोगः स्यात्प्रयोगे पापकर्मणः।
वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ॥ ३७ ॥
निषेकं विपरीतं स आचष्टे वृत्तचेष्टया।
मयूर इव कौपीनं नृत्यं संदर्शयन्निव ॥ ३८ ॥
यस्यावाच्यं न लोकेऽस्ति नाकार्यं चापि किञ्चन।
वाचं तेन न सन्दध्याच्छुचिः सङ्क्लिष्टकर्मणा ॥ ३९ ॥
तस्मात्प्राज्ञो नरः सद्यस्तादृशं पापचेतसम्।
वर्जयेत्साधुभिर्वर्ज्यं सारमेयामिषं यथा ॥ १४४० ॥
तं स्वकर्माणि कुर्वाणं प्रतिकर्तुं य इच्छति।
भस्मकूट इवाबुद्धिः खरो रजसि सज्जति ॥ ४१ ॥

मनुष्यशालावृकमप्रशान्तं
जनापवादे सततं निविष्टम्।
मातङ्गमुन्मत्तमिवोन्नदन्तं
त्यजेत तं श्वानमिवातिरौद्रम् ॥ ४२ ॥

(अ.११५)कीदृशाः सन्निकर्षस्था भृत्या· सर्वगुणान्विताः।
युधि०- कीदृशै· किं कुलीनैर्वा सह यात्रा विधीयते ॥ ४३ ॥
न ह्येको भृत्यरहितो राजा भवति रक्षिता।
राज्यं चेदं जनः सर्वस्तत्कुलीनोऽभिकाङ्क्षति ॥ ४४ ॥
भीष्म०-न च प्रशास्तुं राज्यं हि शक्यमेकेन भारत।
असहायवता तात नैवार्थाः केचिदप्युत।
लब्धुं लब्ध्वा ह्यपि सदा रक्षितुं भरतर्षभ ॥ ४५ ॥

यस्य भृत्यजनः सर्वो ज्ञानविज्ञानकोविदः।
हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते ॥ ४६ ॥

मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः।
नृपतेर्मतिदाः सन्तः सम्बन्धज्ञानकोविदाः ॥ ४७ ॥

अनागतविधातारः कालज्ञानविशारदाः।
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते ॥ ४८ ॥

समदुःखसुखा यस्य सहायाः प्रियकारिणः।
अर्थचिन्तापराः सत्याः स राज्यफलमश्नुते ॥ ४९ ॥

(अ.११६)अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
निदर्शनं परं लोके सज्जनाचरिते सदा ॥ १४५० ॥

वने महति कस्मिंश्चिदमनुष्यनिषेविते।
ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः ॥ ५१ ॥

दीक्षादमपरः शान्तः स्वाध्यायपरमः शुचिः।
उपवासविशुद्धात्मा सततं सत्त्वमास्थितः ॥ ५२ ॥

तस्य सन्दृश्य सद्भावमुपविष्टस्य धीमतः।
सर्वे सत्त्वाः समीपस्था भवन्ति वनचारिणः ॥ ५३ ॥

दत्वा च ते सुखप्रश्नं सर्वे यान्ति यथागतम्।
ग्राम्यस्त्वेकः पशुस्तत्र नाजहात्स महामुनिम् ॥ ५४ ॥

ततोऽभ्ययान्महावीर्यो द्वीपी क्षतजभोजनः ॥ ५५ ॥

दृष्ट्वा तं क्रूरमायान्तं जीवितार्थी नराधिप।
प्रोवाच श्वा मुनिं तत्र द्वीपी मां हन्तुमिच्छति ॥ ५६ ॥

मुनि०– न भयं द्वीपिनः कार्यं मृत्युतस्ते कथञ्चन।
एष श्वरूपरहितो द्वीपी भवसि पुत्रक ॥ ५७ ॥

ततः श्वा द्वीपितां नीतो वने वसति निर्भयः।
ततोऽभ्ययान्महारौद्रो व्याघ्रो रुधिरलालसः ॥ ५८ ॥

व्याघ्रं दृष्ट्वा क्षुधा भुग्नं दंष्ट्रिणं वनगोचरम्।
द्वीपी जीवितरक्षार्थमृषिं शरणमेयिवान् ॥ ५९ ॥

संवासजं परं स्नेहमृषिणा कुर्वता तदा।
स द्वीपी व्याघ्रतां नीतो रिपूणां बलवत्तरः ॥ १४६० ॥

(अ. ११७) व्याघ्रश्चोटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः।
नागश्चागात्तमुद्देशं मत्तो मेघ इवोद्धतः ॥ ६१ ॥

तं दृष्ट्वा कुञ्जरं मत्तमायान्तं बलगर्वितम्।
व्याघ्रो हस्तिभयात्त्रस्तस्तमृषिं शरणं ययौ ॥ ६२ ॥

ततोऽनयत्कुञ्जरत्वं व्याघ्रं तमृषिसत्तमः।
अथाजगाम तं देशं केसरी केसरारुणः ॥ ६३ ॥

तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयार्दितः।
ऋषिं शरणमापेदे वेपमानो भयातुरः ॥ ६४ ॥

ततः स सिंहतां नीतो नागेन्द्रो मुनिना तदा ॥ ६५ ॥

कदाचित्कालयोगेन सर्वप्राणिविहिंसकः।
अष्टपादूर्ध्वनयनः शरभो वनगोचरः।
तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम् ॥ ६६ ॥

तं मुनिः शरभं चक्रे बलोत्कटमरिन्दम ॥ ६७ ॥

स एवं शरभस्थाने संन्यस्तो मुनिना तदा।
इयेष तं मुनिं हन्तुमकृतज्ञः श्वयोनिजः ॥ ६८ ॥

विज्ञाय स महाप्राज्ञो मुनिः श्वानं तमुक्तवान्।
यस्मादेवमपापं मां पाप हिंसितुमिच्छसि।
तस्मात्स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि ॥ ६९ ॥

(अ. ११८) स श्वा प्रकृतिमापन्नः परं दैन्यमुपागतः।
ऋषिणा हुङ्कृतः पापस्तपोवनबहिष्कृतः ॥ १४७० ॥

एवं राज्ञा मतिमता विदित्वा सत्यशौचताम्।
आर्जवं, प्रकृतिं, सत्यं, श्रुतं, वृत्तं, कुलं, दमम् ॥ ७१ ॥

अनुक्रोशं, बलं, वीर्यं प्रभावं, प्रश्रयं, क्षमाम्।
भृत्या ये यत्र योग्याः स्युस्तत्र स्थाप्या. सुरक्षिताः ॥ ७२ ॥

नापरीक्ष्य महीपाल. सचिवं कर्तुमर्हति।
अकुलीननराकीर्णो न राजा सुखमेधते ॥ ७३ ॥

कुलजः प्राकृतो राज्ञा स्वकुलीनतया सदा।
न पापे कुरुते बुद्धिं भिद्यमानोऽप्यनागसि ॥ ७४ ॥

अकुलीनस्तु पुरुष. प्राकृत साधुसंश्रयात्।
दुर्लभैश्वर्यतां प्राप्तो निन्दित. शत्रुतां व्रजेत् ॥ ७५ ॥

(अ.११९) एवं शुना समान्भृत्यान् स्वे स्वे स्थाने नराधिपः।
नियोजयति कृत्येषु स राज्यफलमश्नुते ॥ ७६ ॥

न श्वा स्वं स्थानमुत्क्रम्य प्रमाणमभिसत्कृत.।
आरोप्यः श्वा स्वकात्स्थानादुत्क्रम्यान्यत्प्रमाद्यति ॥ ७७ ॥

अनुरूपाणि कर्माणि भृत्येभ्यो य प्रयच्छति।
स भृत्यगुणसंपन्नो राजा फलमुपाश्नुते ॥ ७८ ॥

शरभः शरभस्थाने सिंहः सिंह इवोर्जित ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥ ७९ ॥

कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि।
प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥ १४८० ॥

यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः।
भृत्यान् स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ॥ ८१ ॥

न बालिशा न च क्षुद्रा नाप्राज्ञा नाजितेन्द्रियाः।
नाकुलीना नरा. सर्वे स्थाप्या गुणगणैषिणा ॥ ८२ ॥

साधवः कुलजा शूरा ज्ञानवन्तोऽनसूयकाः।
अक्षुद्राः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ॥ ८३ ॥

सिंहस्य सततं पार्श्वे सिंह एवानुगो भवेत्।
असिंहः सिंहसहित सिंहवल्लभते फलम् ॥ ८४ ॥

यस्तु सिंहः श्वभिः कीर्णः सिंहकर्मफले रतः ।
न स सिंहफलं भोक्तुं शक्त श्वभिरुपासितः ॥ ८५ ॥

एवमेतन्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः ।
कुलीनै सह शक्येत कृत्स्ना जेतुं वसुन्धरा ॥ ८६ ॥

नाविद्यो नानृजुः पार्श्वे नाप्राज्ञो नामहाधनः ।
सङ्ग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर ॥ ८७ ॥

## शीलवर्णनम्

(अ.१२४)इमे जना नरश्रेष्ठ प्रशंसन्ति सदा भुवि ।
युधि०- धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥ ८८ ॥

कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
किंलक्षणं च तत्प्रोक्तं ब्रूहि मे वदतां वर ॥ ८९ ॥

भीष्म०- शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किञ्चिदसाध्यं वै लोके शीलवतां भवेत् ॥ १४९० ॥

प्रह्लादेन हृतं राज्यं महेन्द्रस्य महात्मनः ।
शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशे कृतम् ॥ ९१ ॥

स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
गत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ ९२ ॥

ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिनः ।
तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ॥ ९३ ॥

ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यदस्य मनसेप्सितम् ॥ ९४ ॥

शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ।
वरं वृणीष्व भद्रं ते प्रदातास्मि न संशयः ॥ ९५ ॥

ब्राह्मण०-यदि राजन् प्रसन्नस्त्वं मम चेदिच्छसि प्रियम् ।
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ९६ ॥

एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥ ९७ ॥
दत्ते वरे गते विप्रे चिन्ताऽऽसीन्महती तदा ।
प्रह्लादस्य महाराज निश्चयं न च जग्मिवान् ॥ ९८ ॥
तस्य चिन्तयतस्तावच्छायाभूतं महाद्युति ।
तेजो विग्रहवत्तात शरीरमजहात्तदा ॥ ९९ ॥
तमपृच्छन्महाकायं प्रह्लादः को भवानिति ।
प्रत्याह तं तु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥१५००॥
इत्युक्त्वान्तर्हितं तद्वै शक्रं चान्वाविशत्प्रभो ॥ १ ॥
तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः ।
शरीरान्निःसृतस्तस्य को भवानिति चाब्रवीत् ।
धर्मं प्रह्लाद मां विद्धि यतः शीलं ततो ह्यहम् ॥ २ ॥
ततोऽपरो महाराज प्रज्वलन्निव तेजसा ।
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मन• ॥ ३ ॥
को भवानिति पृष्टश्च तमाह स महाद्युति• ।
सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्ममन्वहम् ॥ ४ ॥
तस्मिन्ननुगते सत्ये महान् वै पुरुषोऽपरः ।
निश्चक्राम ततस्तस्मात्पृष्टश्चाह महाबल ॥ ५ ॥
वृत्तं प्रह्लाद मां विद्धि यत• सत्यं ततो ह्यहम् ।
तस्मिन् गते महाशब्दः शरीरात्तस्य निर्ययौ ॥ ६ ॥
पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ।
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ॥ ७ ॥
तामपृच्छत्स दैत्येन्द्र• सा श्रीरित्येनमब्रवीत् ॥ ८ ॥
उषिताऽस्मि स्वयं वीर त्वयि सत्यपराक्रम ।
त्वया त्यक्ता गमिष्यामि बलं ह्यनुगता ह्यहम् ॥ ९ ॥
ततो भयं प्रादुरासीत्प्रह्लादस्य महात्मनः ।
अपृच्छत्स ततो भूयः क यासि कमलालये ॥ १५१० ॥

श्रीः०- स शक्रो ब्रह्मचारी यस्त्वत्तश्चैवोपशिक्षितः।
त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ॥ ११ ॥

शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ निर्जिताः।
तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो ॥ १२ ॥

धर्मः सत्यं तथा वृत्तं बलं चैव तथाप्यहम्।
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ॥ १३ ॥

भीष्म०- अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥ १४ ॥

यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम्।
अपत्रपेत वा येन न तत्कुर्यात्कथञ्चन ॥ १५ ॥

तत्तु कर्म तथा कुर्याद्येन श्लाघ्येत संसदि।
शीलं समासेनैतत्ते कथितं कुरुसत्तम ॥ १६ ॥

यद्यप्यशीला नृपते प्राप्नुवन्ति श्रियं क्वचित्।
न भुञ्जते चिरं तात समूलाश्च न सन्ति ते ॥ १७ ॥

(अ.१३०)धर्मो ह्यणीयान् वचनाद्बुद्धिश्च भरतर्षभ।
श्रुत्वोपास्य सदाचारैः साधुर्भवति स क्वचित् ॥ १८ ॥

यथा यथा हि पुरुषो नित्यं शास्त्रमवेक्षते।
तथा तथा विजानाति विज्ञानमथ रोचते ॥ १९ ॥

अविज्ञानाद्‌योगो हि पुरुषस्योपजायते।
विज्ञानादपि योगश्च योगो भूतिकर पर ॥ १५२० ॥

राज्ञः कोशक्षयादेव जायते बलसङ्क्षयः।
कोशं च जनयेद्राजा निर्जलेभ्यो यथा जलम् ॥ २१ ॥

कालं प्राप्यानुगृह्णीयादेष धर्मः सनातनः।
अन्यो धर्मः समर्थानामापत्स्वन्यश्च भारत ॥ २२ ॥

तस्मादापत्स्वधर्मोऽपि श्रूयते धर्मलक्षणः।
आपद्गतेन धर्माणामन्यायेनोपजीवनम् ॥ २३ ॥

अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये।
क्षत्रिये संशय· कस्मादित्येवं निश्चितं सदा ॥ २४ ॥

न शङ्खलिखितां वृत्ति शक्यमास्थाय जीवितुम्।
विशेषत· कुरुश्रेष्ठ प्रजापालनमीप्सया ॥ २५ ॥

परस्परं हि संरक्षा राज्ञा राष्ट्रेण चापदि।
नित्यमेव हि कर्तव्या एष धर्म सनातन· ॥ २६ ॥

राजा राष्ट्रं यथाऽऽपत्सु द्रव्यौघैरपि रक्षति।
राष्ट्रेण राजा व्यसने रक्षितव्यस्तथा भवेत् ॥ २७ ॥

बीजं भक्तेन संपाद्यमिति धर्मविदो विदुः ॥ २८ ॥

राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलम्।
तन्मूलं सर्वधर्माणां धर्ममूलाः पुन प्रजाः ॥ २९ ॥

नान्यानपीडयित्वेह कोशः शक्यः कुतो बलम्।
तदर्थं पीडयित्वा च दोषं प्राप्तुं न सोऽर्हति ॥ १५३० ॥

अकार्यमपि यज्ञार्थं क्रियते यज्ञकर्मसु।
एतस्मात्कारणाद्राजा न दोषं प्राप्तुमर्हति ॥ ३१ ॥

अर्थार्थमन्यद्भवति विपरीतमथापरम्।
अनर्थार्थमथाप्यन्यत्तत्सर्वं ह्यर्थकारणम्।
एवं बुद्ध्या संप्रपश्येन्मेधावी कार्यनिश्चयम् ॥ ३२ ॥

एवं कोशस्य महतो ये नराः परिपन्थिनः।
तानहत्वा न पश्यामि सिद्धिमत्र परन्तप ॥ ३३ ॥

अधनं दुर्बलं प्राहुर्धनेन बलवान् भवेत्।
सर्वं धनवता प्राप्यं सर्वं तरति कोशवान् ॥ ३४ ॥

## आपद्धर्मकथनम्, शाकुलोपाख्यानम्

(अ,१३१) परचक्राभिजातस्य दुर्बलस्य बलीयसा ।
युधि०- आपन्नश्चेतसो ब्रूहि किं कार्यमवशिष्यते ॥ ३५ ॥

भीष्म०- बाह्यश्चेद्विजिगीषु स्याद्धर्मार्थकुशलः शुचिः ।
जवेन सन्धिं कुर्वीत पूर्वभुक्तान्विमोचयेत् ॥ ३६ ॥

योऽधर्मविजिगीषुः स्याद्बलवान् पापनिश्चयः ।
आत्मनः सन्निरोधेन सन्धिं तेनापि रोचयेत् ॥ ३७ ॥

अपास्य राजधानीं वा तरेद्द्रव्येण चापदम् ।
तद्भावयुक्तो द्रव्याणि जीवन् पुनरुपार्जयेत् ॥ ३८ ॥

यास्तु कोशबलत्यागाच्छक्यास्तरितुमापदः ।
कस्तत्राधिकमात्मानं सन्त्यजेदर्थधर्मवित् ॥ ३९ ॥

अवरोधान् जुगुप्सेत का सपत्नधने दया ।
न त्वेवात्मा प्रदातव्यः शक्ये सति कथञ्चन ॥ १५४० ॥

युधि०- आभ्यन्तरे प्रकुपिते बाह्ये चोपनिपीडिते ।
क्षीणे कोशे श्रुते मन्त्रे किं कार्यमवशिष्यते ॥ ४१ ॥

भीष्म०- क्षिप्रं वा सन्धिकामः स्यात् क्षिप्रं वा तीक्ष्णविक्रमः ।
तदापनयनं क्षिप्रमेतावत्साम्परायिकम् ॥ ४२ ॥

अनुरक्तेन चेष्टेन हृष्टेन जगतीपतिः ।
अल्पेनापि हि सैन्येन महीं जयति भूमिपः ॥ ४३ ॥

हतो वा दिवमारोहेद्धत्वा वा क्षितिमावसेत् ।
युद्धे हि सन्त्यजन्प्राणान् शक्रस्यैति सलोकताम् ॥ ४४ ॥

(अ.१३७)अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेव सुखमेधेते दीर्घसूत्री विनश्यति ॥ ४५ ॥

अत्रैव चेदमव्यग्रं शृणुष्वाख्यानमुत्तमम् ।
दीर्घ सूत्रमुपाश्रित्य कार्याकार्यविनिश्चये ॥ ४६ ॥

नातिगाधे जलाधारे सुहृदः कुशलास्त्रयः।
प्रभूतमत्स्ये कौन्तेय बभूवु सहचारिण.॥ ४७॥
तत्रैको दीर्घकालज्ञ उत्पन्नप्रतिभोऽपरः।
दीर्घसूत्रश्च तत्रैकस्त्रयाणा सहचारिणाम्॥ ४८॥
कदाचित्तं जलस्थायं मत्स्यबन्धाः समन्ततः।
निःस्रावयामासुरथो निम्नेषु विविधैर्मुखैः॥ ४९॥
प्रक्षीयमाणं तं दृष्ट्वा जलस्थायं भयागमे।
अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा॥ १५५०॥
इयमापत्समुत्पन्ना सर्वेषा सलिलौकसाम्।
शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति॥ ५१॥
अनागतमनर्थं हि सुनयैर्यः प्रबाधयेत्।
स न संशयमाप्नोति रोचतां भो व्रजामहे॥ ५२॥
दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत्सम्यगुच्यते।
न तु कार्या त्वरा तावदिति मे निश्चिता मतिः॥ ५३॥
अथ संप्रतिपत्तिज्ञ. प्राब्रवीद्दीर्घदर्शिनम्।
प्राप्ते काले न मे किञ्चिन्न्यायतः परिहास्यते॥ ५४॥
एवं श्रुत्वा निराक्रम्य दीर्घदर्शी महामतिः।
जगाम स्रोतसा तेन गम्भीरं सलिलाशयम्॥ ५५॥
ततः प्रस्रुततोयं तं प्रसमीक्ष्य जलाशयम्।
बबन्धुर्विविधैर्योगैर्मत्स्यान् मत्स्योपजीविनः॥ ५६॥
विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये।
अगच्छद्बन्धनं तत्र दीर्घसूत्रः सहापरै.॥ ५७॥
उद्दाने क्रियमाणे तु मत्स्यानां तत्र रज्जुभि.।
प्रविश्यान्तरमेतेषां स्थितः संप्रतिपत्तिमान्॥ ५८॥
गृह्यमेव तदुद्दानं गृहीत्वा तं तथैव सः।
सर्वानेव च तांस्तत्र ते विदुर्ग्रथितानिति॥ ५९॥

ततः प्रक्षाल्यमानेषु मत्स्येषु विपुले जले।
मुक्त्वा रज्जुं प्रमुक्तोऽसौ शीघ्रं संप्रतिपत्तिमान् ॥ १५६० ॥
दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः।
मरणं प्राप्तवान् मूढो यथैवोपहतेन्द्रियः ॥ ६१ ॥

एवं प्राप्ततमं कालं यो मोहान्नावबुद्ध्यते।
स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः ॥ ६२ ॥

आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान्।
स संशयमवाप्नोति यथा संप्रतिपत्तिमान् ॥ ६३ ॥

परीक्ष्यकारी युक्तश्च स सम्यगुपपादयेत्।
देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात् ॥ ६४ ॥

## मार्जारमूषिकसंवादः

(अ १३८)सर्वत्र प्रार्थ्यमानेन दुर्बलेन महाबलैः।
युधि०- एकेनैवासहायेन शक्यं स्थातुं भवेत्कथम् ॥ ६५ ॥

विग्रहं केन वा कुर्यात्सन्धिं वा केन योजयेत्।
कथं वा शत्रुमध्यस्थो वर्तेत बलवानपि ॥ ६६ ॥

भीष्म०-त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर सुखोदयः।
शृणु मे पुत्र कार्त्स्न्येन गुह्यमापत्सु भारत ॥ ६७ ॥

अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति।
सामर्थ्ययोगात्कार्याणामनित्या वै सदा गतिः ॥ ६८ ॥

तस्माद्विश्वसितव्यं च विग्रहं च समाचरेत्।
देशं कालं च विज्ञाय कार्याकार्यविनिश्चये ॥ ६९ ॥

सन्धातव्यं बुधैर्नित्यं व्यवस्य च हितार्थिभिः
अमित्रैरपि सन्धेयं प्राणा रक्ष्या हि भारत ॥ १५७० ॥

यो ह्यमित्रैर्नरो नित्यं न सन्दध्यादपण्डितः।
न सोऽर्थं प्राप्नुयात् किञ्चित्फलान्यपि च भारत ॥ ७१ ॥

यस्त्वमित्रेण सन्दध्यान्मित्रेण च विरुद्ध्यते।
अर्थयुक्तिं समालोक्य सुमहद्विन्दते फलम्॥ ७२॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
मार्जारस्य च संवादं न्यग्रोधे मूषिकस्य च॥ ७३॥
वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत्॥ ७४॥

तस्य मूलं समाश्रित्य कृत्वा शतमुखं बिलम्।
वसति स्म महाप्राज्ञः पलितो नाम मूषिकः॥ ७५॥

शाखां तस्य समाश्रित्य वसति स्म सुखं पुरा।
लोमशो नाम मार्जारः पक्षिसङ्घातखादकः॥ ७६॥

तत्र चागत्य चाण्डालो ह्यरण्ये कृतकेतनः।
प्रयोजयति चोन्माथं नित्यमस्तङ्गते रवौ॥ ७७॥

तत्र स्नायुमयान् पाशान् यथावत्संविधाय सः।
गृहं गत्वा सुखं शेते प्रभातामेति शर्वरीम्॥ ७८॥

तत्र स्म नित्यं बध्यन्ते नक्तं बहुविधा मृगाः।
कदाचिदत्र मार्जारस्त्वप्रमत्तो व्यबध्यत॥ ७९॥

तस्मिन् बद्धे महाप्राणे शत्रौ नित्याततायिनि।
तं कालं पलितो ज्ञात्वा प्रचचार सुनिर्भयः॥ १५८०॥

स तमुन्माथमारुह्य तदामिषमभक्षयत्।
तस्योपरि सपत्नस्य बद्धस्य मनसा हसन्॥ ८१॥

आमिषे तु प्रसक्त स कदाचिदवलोकयन्।
अपश्यदपरं घोरमात्मनः शत्रुमागतम्।
नकुलं हरिणं नाम चपलं ताम्रलोचनम्॥ ८२॥

शाखागतमरिं चान्यमपश्यत्कोटरालयम्।
उलूकं चन्द्रकं नाम तीक्ष्णतुण्डं क्षपाचरम्॥ ८३॥

गतस्य विषयं तत्र नकुलोलूकयोस्तथा।
अथाऽस्याऽसीदियं चिन्ता तत्प्राप्य सुमहद्भयम्॥ ८४॥

गतं मां सहसा भूमिं नकुलो भक्षयिष्यति।
उलूकश्चेह तिष्ठन्तं मार्जारः पाशसङ्क्षयात् ॥ ८५ ॥
न त्वेवाऽस्मद्विधः प्राज्ञः सम्मोहं गन्तुमर्हति।
न त्वन्यामिह मार्जाराद्गतिं पश्यामि साम्प्रतम् ॥ ८६ ॥
विषमस्थो ह्ययं शत्रुः कृत्यं चाऽस्य महन्मया।
जीवितार्थी कथं त्वद्य शत्रुभिः प्रार्थितस्त्रिभिः।
तस्मादेनमहं शत्रुं मार्जारं संश्रयामि वै ॥ ८७ ॥
बलिना सन्निकृष्टस्य शत्रोरपि परिग्रहः।
कार्य इत्याहुराचार्या विषमे जीवितार्थिना ॥ ८८ ॥
श्रेष्ठोहि पण्डितः शत्रुर्न च मित्रमपण्डितः ॥ ८९ ॥
मम त्वमित्रे मार्जारे जीवितं सम्प्रतिष्ठितम्।
हन्ताऽस्मै सम्प्रवक्ष्यामि हेतुमात्माभिरक्षणे ॥ १५९० ॥
ततोऽर्थगतितत्त्वज्ञः सन्धिविग्रहकालवित्।
सान्त्वपूर्वमिदं वाक्यं मार्जारं मूषिकोऽब्रवीत् ॥ ९१ ॥
सौहृदेनाऽभिभाषे त्वा कच्चिन्मार्जार जीवसि।
जीवितं हि तवेच्छामि श्रेयः साधारणं हि नौ ॥ ९२ ॥
सतां साप्तपदं मैत्रं स सखा मेऽसि पण्डितः।
सांवास्यकं करिष्यामि नास्ति ते भयमद्य वै ॥ ९३ ॥
न हि शक्तोऽसि मार्जार पाशं छेत्तुं मया विना।
अहं छेत्स्यामि पाशांस्ते यदि मां त्वं न हिंससि ॥ ९४ ॥
कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम्।
स तारयति तत्काष्ठं स च काष्ठेन तार्यते ॥ ९५ ॥
ईदृशो नौ समायोगो भविष्यति सुविस्तरः।
अहं त्वां तारयिष्यामि मां च त्वं तारयिष्यसि ॥ ९६ ॥
अथ सुव्याहृतं श्रुत्वा तस्य शत्रोर्विचक्षणः।
मूषिकं मन्दमुद्वीक्ष्य मार्जारो लोमशोऽब्रवीत् ॥ ९७ ॥

नन्दामि सौम्य भद्रं ते यो मां जीवितुमिच्छसि।
श्रेयश्च यदि जानीषे क्रियतां मा विचारय ॥ ९८ ॥

अहं हि भृशमापन्नस्त्वमापन्नतरो मम।
द्वयोरापन्नयोः सन्धिः क्रियतां मा चिराय च ॥ ९९ ॥

इत्येवमुक्तः पलितो मार्जारं वशमागतम्।
वाक्यं हितमुवाचेदमभिनीतार्थमर्थवित् ॥ १६०० ॥

अहं त्वाऽनुप्रवेक्ष्यामि नकुलान्मे महद्भयम्।
त्रायस्व भो मा वधीस्त्वं शक्तोऽस्मि तव रक्षणे ॥ १ ॥

उलूकाच्चैव मां रक्ष क्षुद्रः प्रार्थयते हि माम्।
अहं छेत्स्यामि ते पाशान् सखे सत्येन ते शपे ॥ २ ॥

तं सम्पूज्याऽथ पलितं मार्जारः सौहृदे स्थितः।
स विचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव च ॥ ३ ॥

शीघ्रमागच्छ भद्रं ते त्वं मे प्राणसमः सखा।
तव प्राज्ञ प्रसादाद्धि प्राय॰ प्राप्स्यामि जीवितम् ॥ ४ ॥

प्रत्युपकुर्वन् बह्वपि
न भाति पूर्वोपकारिणा तुल्यः।
एकः करोति हि कृते
निष्कारणमेव कुरुतेऽन्यः ॥ ५ ॥

एवमाश्वासितो विद्वान् मार्जारेण स मूषिकः।
मार्जारोरसि विश्रब्धः सुष्वाप पितृमातृवत् ॥ ६ ॥

लीनं तु तस्य गात्रेषु मार्जारस्य च मूषिकम्।
दृष्ट्वा तौ नकुलोलूकौ निराशौ प्रत्यपद्यताम् ॥ ७ ॥

कार्यार्थे कृतसन्धी तौ दृष्ट्वा मार्जारमूषिकौ।
उलूकनकुलौ तूर्णं जग्मतुस्तौ स्वमालयम् ॥ ८ ॥

लीनः स तस्य गात्रेषु पलितो देशकालवित्।
चिच्छेद पाशान्नृपते कालापेक्षी शनैः शनैः ॥ ९ ॥

अथ बन्धपरिक्लिष्टो मार्जारो वीक्ष्य मूषिकम्।
छिन्दन्तं वै तदा पाशानत्वरन्तं त्वरान्वितः॥ १६१० ॥
तमत्वरन्तं पलितं पाशानां छेदने तथा।
सञ्चोदयितुमारेभे मार्जारो मूषिकं तदा ॥ ११ ॥
किं सौम्य नातित्वरसे किं कृतार्थोऽवमन्यसे।
छिन्धि पाशानमित्रघ्न पुरा श्वपच एति च ॥ १२ ॥
इत्युक्तस्त्वरता तेन मतिमान् पलितोऽब्रवीत्।
मार्जारमकृतप्रज्ञं पथ्यमात्महितं वचः ॥ १३ ॥
तूष्णीं भव न ते सौम्य त्वरा कार्या न सम्भ्रमः।
वयमेवाऽत्र कालज्ञा न कालः परिहास्यते ॥ १४ ॥
अकाले कृत्यमारब्धं कर्तुर्नार्थाय कल्पते।
तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥ १५ ॥
अकाले विप्रमुक्तान्मे त्वत्त एव भयं भवेत्।
तस्मात्कालं प्रतीक्षस्व किमिति त्वरसे सखे ॥ १६ ॥
यदा पश्यामि चाण्डालमायान्त शस्त्रपाणिनम्।
ततश्छेत्स्यामि ते पाशान् प्राप्ते साधारणे भये ॥ १७ ॥
ततो भवत्यपक्रान्ते त्रस्ते भीते च लोमश।
अहं बिलं प्रवेक्ष्यामि भवान् शाखा भजिष्यति ॥ १८ ॥
अथाऽत्मकृत्ये त्वरित. सम्यक्प्रश्रितमाचरन्।
उवाच लोमशो वाक्यं मूषिकं चिरकारिणम् ॥ १९ ॥
यथा त्वं मोक्षितः कृच्छ्रात्त्वरमाणेन वै मया।
तथा हि त्वरमाणेन त्वया कार्यं हितं मम ॥ १६२० ॥
यदि किञ्चिन्मयाऽज्ञानात्पुरस्ताद्दुष्कृतं कृतम्।
न तन्मनसि कर्तव्यं क्षामये त्वां प्रसीद मे ॥ २१ ॥
तमेवंवादिनं प्राज्ञः शास्त्रबुद्धिसमन्वितः।
उवाचेदं वचः श्रेष्ठं मार्जारं मूषिकस्तदा ॥ २२ ॥

यन्मित्रं भीतवत्साध्यं यन्मित्रं भयसंहितम् ।
सुरक्षितव्य तत्कार्यं पाणिः सर्पमुखादिव ॥ २३ ॥
कृत्वा बलवता सन्धिमात्मानं यो न रक्षति ।
अपथ्यमिव तद्भुक्तं तस्य नार्थाय कल्पते ॥ २४ ॥
न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपु ।
अर्थतस्तु निवद्धयन्ते मित्राणि रिपवस्तथा ॥ २५ ॥
अर्थैरर्था निबद्धयन्ते गजैर्वनगजा इव ॥ २६ ॥
न च कश्चित्कृते कार्ये कर्तारं समवेक्षते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ २७ ॥
तस्मिन्कालेऽपि च भवान् दिवाकीर्तिभयार्दितः ।
मम न ग्रहणे शक्त· पलायनपरायण ॥ २८ ॥
छिन्नं तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषित ।
छेत्स्याम्यहं तमप्याशु निर्वृतो भव लोमश ॥ २९ ॥
तयोः संवदतोरेवं तथैवापन्नयोर्द्वयो· ।
परिघो नाम चाण्डालः शस्त्रपाणिरदृश्यत ॥ १६३० ॥
ततश्चिच्छेद तं पाशं मार्जारस्य च मूषिकः ।
बिलं विवेश पलितः शाखां लेभे स लोमशः ॥ ३१ ॥
उन्माथमप्यथादाय चाण्डालो वीक्ष्य सर्वशः ।
विहताशः क्षणेनास्ते तस्माद्देशादपाक्रमत् ॥ ३२ ॥
जगाम स स्वभवनं चाण्डालो भरतर्षभ ॥ ३३ ॥
ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितम् ।
बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत् ॥ ३४ ॥
गत्वा च मम विश्वासं दत्वा च मम जीवितम् ।
मित्रोपभोगसमये किं मां त्वं नोपसर्पसि ॥ ३५ ॥
कृत्वा हि पूर्वं मित्राणि यः पश्चान्नानुतिष्ठति ।
न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्मतिः ॥ ३६ ॥

अमात्यो मे भव प्राज्ञ पितेवेह प्रशाधि माम्।
न तेऽस्ति भयमस्मत्तो जीवितेनात्मनः शपे ॥ ३७ ॥

एवमुक्तः परां शान्तिं मार्जारेण स मूषिकः।
उवाच परमन्त्रज्ञः श्लक्ष्णमात्महितं वचः ॥ ३८ ॥

यद्भवानाह तत्सर्वं मया ते लोमश श्रुतम्।
ममापि तावद्ब्रुवतः शृणु यत्प्रतिभाति मे ॥ ३९ ॥

वेदितव्यानि मित्राणि विज्ञेयाश्चापि शत्रवः।
एतत्सुसूक्ष्मं लोकेऽस्मिन् दृश्यते प्राज्ञसम्मतम् ॥ १६४० ॥

शत्रुरूपा हि सुहृदो मित्ररूपाश्च शत्रवः।
सन्धितास्ते न बुद्ध्यन्ते कामक्रोधवशं गताः ॥ ४१ ॥

नास्ति जातु रिपुर्नाम मित्रं नाम न विद्यते।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ ४२ ॥

यो यस्मिन् जीवति स्वार्थं पश्येत्पीडां न जीवति।
स तस्य मित्रं तावत्स्याद्यावन्न स्याद्विपर्ययः ॥ ४३ ॥

नास्ति मैत्री स्थिरा नाम न च ध्रुवमसौहृदम्।
अर्थयुक्त्याऽनुजायन्ते मित्राणि रिपवस्तथा ॥ ४४ ॥

मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये।
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः ॥ ४५ ॥

यो विश्वसिति मित्रेषु न विश्वसिति शत्रुषु।
अर्थयुक्तिमविज्ञाय यः प्रीतौ कुरुते मनः।
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः ॥ ४६ ॥

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्।
विश्वासाद्भयमुत्पन्नमपि मूलानि कृन्तति ॥ ४७ ॥

अर्थयुक्त्या हि जायन्ते पिता माता सुतस्तथा।
मातुला भागिनेयाश्च तथा सम्बन्धिबान्धवाः ॥ ४८ ॥

पुत्र हि मातापितरौ त्यजतः पतितं प्रियम् ।
लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् ॥ ४९ ॥
कारणात् प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः ॥ १६५० ॥
प्रियो भवति दानेन प्रियवादेन चापर. ।
मन्त्रहोमजपैरन्यः कार्यार्थं प्रीयते जनः ॥ ५१ ॥
उत्पन्ना कारणे प्रीतिरासीन्नौ कारणान्तरे ।
प्रध्वस्ते कारणस्थाने सा प्रीतिर्विनिवर्तते ॥ ५२ ॥
किं तु तत्कारणं मन्ये येनाहं भवतः प्रियः ।
अन्यत्राऽभ्यवहारार्थं तत्राऽपि च बुधा वयम् ॥ ५३ ॥
कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते ।
स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्तते ॥ ५४ ॥
न त्वीदृशं त्वया वाच्यं विदुषि स्वार्थपण्डिते ।
अकाले हि समर्थस्य स्नेहहेतुरयं तव ॥ ५५ ॥
तस्मान्नाहं चले स्वार्थात्सुस्थिरः सन्धिविग्रहे ।
अभ्राणामिव रूपाणि विकुर्वन्ति क्षणे क्षणे ॥ ५६ ॥
अद्यैव हि रिपुर्भूत्वा पुनरद्यैव मे सुहृत् ।
पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलम् ॥ ५७ ॥
आसीन्मैत्री तु तावन्नौ यावद्धेतुरभूत्पुरा ।
सा गता सह तेनैव कालयुक्तेन हेतुना ॥ ५८ ॥
त्व हि मे जातित. शत्रु. सामर्थ्यान्मित्रतां गतः ।
तत्कृत्यमभिनिर्वर्त्य प्रकृति. शत्रुतां गता ॥ ५९ ॥
सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः ।
प्रविशेयं कथं पाशं त्वत्कृते तद्वदस्व मे ॥ १६६० ॥
त्वद्वीर्येण प्रमुक्तोऽहं मद्वीर्येण तथा भवान् ।
अन्योन्यानुग्रहे वृत्ते नास्ति भूयः समागमः ॥ ६१ ॥

त्वं हि सौम्य कृतार्थोऽद्य निवृत्तार्थास्तथा वयम् ।
न तेऽस्त्यद्य मया कृत्यं किञ्चिदन्यत्र भक्षणात् ॥ ६२ ॥

अहमन्नं भवान् भोक्ता दुर्बलोऽहं भवान् बली ।
नावयोर्विद्यते सन्धिर्वियुक्ते विषमे बले ॥ ६३ ॥

जानामि क्षुधितं तु त्वामाहारसमयश्च ते ।
स त्वं मामभिसन्धाय भक्ष्यं मृगयसे पुनः ॥ ६४ ॥

शत्रोरनार्यभूतस्य क्लिष्टस्य क्षुधितस्य च ।
भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् ॥ ६५ ॥

बलवत्सन्निकर्षो हि न कदाचित्प्रशस्यते ।
नाहं त्वया समेष्यामि निवृत्तो भव लोमश ।
कामं सर्वं प्रदास्यामि न त्वाऽऽत्मानं कदाचन ॥ ६६ ॥

आत्मार्थे सन्ततिस्त्याज्या राज्यं रत्नं धनानि च ।
अपि सर्वं स्वमुत्सृज्य रक्षेदात्मानमात्मना ॥ ६७ ॥

ऐश्वर्यधनरत्नानां प्रत्यमित्रे निवर्तताम् ।
दृष्टा हि पुनरावृत्तिर्जीवतामिति नः श्रुतम् ॥ ६८ ॥

न त्वात्मनः सम्प्रदानं धनरत्नवदिष्यते ।
आत्मा हि सर्वदा रक्ष्यो दारैरपि धनैरपि ॥ ६९ ॥

आत्मरक्षणतन्त्राणां सुपरीक्षितकारिणाम् ।
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः ॥ १६७० ॥

शत्रुं सम्यग्विजानन्ति दुर्बला ये बलीयसम् ।
न तेषां चाल्यते बुद्धिः शास्त्रार्थकृतनिश्चया ॥ ७१ ॥

संस्तवैर्वा धनौघैर्वा नाहं शक्यः पुनस्त्वया ।
न ह्यमित्रे वशं यान्ति प्राज्ञा निष्कारणं सखे ॥ ७२ ॥

अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते ॥ ७३ ॥

शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समाहितश्चरेद्युक्त्या कृतार्थश्च न विश्वसेत् ॥ ७४ ॥

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
नित्यं विश्वासयेदन्यान् परेषां तु न विश्वसेत् ॥ ७५ ॥

तस्मात्सर्वास्ववस्थासु रक्षेज्जीवितमात्मन' ।
द्रव्याणि सन्ततिश्चैव सर्वं भवति जीवतः ॥ ७६ ॥

सङ्क्षेपो नीतिशास्त्राणामविश्वास॰ परो मतः ।
नृषु तस्मादविश्वासः पुष्कलं हितमात्मन॰ ॥ ७७ ॥

वध्यन्ते नह्यविश्वस्ताः शत्रुभिर्दुर्बला अपि ।
विश्वस्तास्तेषु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ७८ ॥

त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्जार सर्वदा ।
रक्ष त्वमपि चात्मानं चाण्डालाज्जातिकिल्बिषात् ॥ ७९ ॥

स तस्य ब्रुवतस्त्वेवं सन्त्रासाज्जातसाध्वसः ।
शाखां हित्वा जवेनाशु मार्जार प्रययौ ततः ॥ १६८० ॥

तत॰ शास्त्रार्थतत्त्वज्ञो बुद्धिसामर्थ्यमात्मनः ।
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह ॥ ८१ ॥

एवं प्रज्ञावता बुद्ध्या दुर्बलेन महाबला॰ ।
एकेन बहवोऽमित्राः पलितेनाभिसन्धिताः ॥ ८२ ॥

अरिणाऽपि समर्थेन सन्धिं कुर्वीत पण्डित ।
मूषिकश्च बिडालश्च मुक्तावन्योन्यसंश्रयात् ॥ ८३ ॥

तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
न ह्यप्रमत्तश्चलति चलितो वा विनश्यति ॥ ८४ ॥

कालेन रिपुणा सन्धिः काले मित्रेण विग्रह॰ ।
कार्य इत्येव सन्धिज्ञाः प्राहुर्नित्यं नराधिप ॥ ८५ ॥

न भयं विद्यते राजन् भीतस्यानागते भये ।
अभीतस्य च विश्रम्भात् सुमहज्जायते भयम् ॥ ८६ ॥

शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समागमे चरेद्युक्त्या कृतार्थो न च विश्वसेत् ॥ ८७ ॥

## ब्रह्मदत्तपूजनीसंवादः, कणिकोपदेशः

(अ.१३९)उक्तो मन्त्रो महाबाहो विश्वासो नास्ति शत्रुषु।
युधि०- कथं हि राजा वर्तेत यदि सर्वत्र नाश्वसेत् ॥ ८८ ॥

भीष्म०- कांपिल्ये ब्रह्मदत्तस्य त्वन्तःपुरनिवासिनी।
पूजनी नाम शकुनिर्दीर्घकालं सहोषिता ॥ ८९ ॥

अभिप्रजाता सा तत्र पुत्रमेक सुवर्चसम्।
समकालं च राज्ञोऽपि देव्यां पुत्रो व्यजायत ॥ १६९० ॥

तयोरर्थे कृतज्ञा सा खेचरी पूजनी सदा।
समुद्रतीरं सा गत्वा आजहार फलद्वयम् ॥ ९१ ॥

पुष्टयर्थं च स्वपुत्रस्य राजपुत्रस्य चैव ह।
फलमेकं सुतायादाद्राजपुत्राय चापरम् ॥ ९२ ॥

ततोऽगच्छत्परां वृद्धि राजपुत्र॰ फलाशनात्।
तत॰ स धात्र्या कक्षेण उह्यमानो नृपात्मजः।
ददर्श तं पक्षिसुतं बाल्यादागत्य बालक॰ ॥ ९३ ॥

ततो बाल्याच्च यत्नेन तेनाक्रीडत पक्षिणा।
शून्ये च तमुपादाय पक्षिण समजातकम्।
हत्वा तत॰ स राजेन्द्र धात्र्या हस्तमुपागतः ॥ ९४ ॥

अथ सा पूजनी राजन्नागमत्फलहारिणी।
अपश्यन्निहतं पुत्रं तेन बालेन भूतले ॥ ९५ ॥

बाष्पपूर्णमुखी दीना दृष्ट्वा तं रुदती सुतम्।
पूजनी दुःखसन्तप्ता रुदती वाक्यमब्रवीत् ॥ ९६ ॥

क्षत्रिये सङ्गतं नास्ति न प्रीतिर्न च सौहृदम्।
कारणात्सान्त्वयन्त्येते कृतार्था॰ सन्त्यजन्ति च ॥ ९७ ॥

अहमस्य करोम्यद्य सदृशीं वैरयातनाम्।
कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः ॥ ९८ ॥

इत्युक्त्वा चरणाभ्या तु नेत्रे नृपसुतस्य सा।
भित्त्वा खस्था तत इदं पूजनी वाक्यमब्रवीत् ॥ ९९ ॥

इच्छयेह कृत पापं सद्यस्तं चोपसर्पति।
कृतं प्रतिकृतं येषां न नश्यति शुभाशुभम् ॥ १७०० ॥

ब्रह्म०— अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया।
उभयं तत्समीभूतं वस पूजनि मा गम· ॥ १ ॥

पूजनी०—सकृत्कृतापराधस्य तत्रैव परिलम्बतः।
न तद्बुधा· प्रशंसन्ति श्रेयस्तत्रापसर्पणम् ॥ २ ॥

पूर्वं सम्मानना यत्र पश्चाच्चैव विमानना।
जह्यात्तत्सत्त्ववान्स्थानं शत्रोः संमानितोऽपि सन् ॥ ३ ॥

वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः।
स्त्रीकृतं वास्तुजं वाग्जं ससापत्नापराधजम् ॥ ४ ॥

कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि।
छन्नं सन्तिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ ५ ॥

न हि वैराग्निरुद्भूत कर्म चाप्यपराधजम्।
शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ॥ ६ ॥

न हि वैराणि शाम्यन्ति कुले दु·खगतानि च।
आख्यातारश्च विद्यन्ते कुले वै म्रियते पुमान् ॥ ७ ॥

उपगृह्य तु वैराणि सान्त्वयन्ति नराधिप।
अथैनं प्रतिपिंषन्ति पूर्ण घटमिवाश्मनि ॥ ८ ॥

तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे।
कृतमेतदनार्यं मे तव पुत्रे च पार्थिव ॥ ९ ॥

सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृति ।
तन्मित्रं यत्र विश्वास· स देशो यत्र जीव्यते ॥ १७१० ॥

सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिपम्।
राजानं समनुज्ञाप्य जगामाभीप्सितं दिशम् ॥ ११ ॥

(अ.१४०) युगक्षयात्परिक्षीणे धर्मे लोके च भारत।
युधि०– दस्युभिः पीड्यमाने च कथं स्थेय पितामह ॥ १२ ॥

भीष्म०– अत्र ते वर्तयिष्यामि नीतिमापत्सु भारत।
उत्सृज्याऽपि घृणां काले यथा वर्तेत भूमिपः ॥ १३ ॥

नित्यमुद्यतदण्डस्य भृशमुद्विजते नरः।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ १४ ॥

छिन्नमूले त्वधिष्ठाने सर्वेषां जीवनं हतम्।
कथं हि शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ ॥ १५ ॥

मूलमेवादितश्छिन्द्यात्परपक्षस्य पण्डितः।
ततः सहायान् पक्षं च मूलमेवानुसाधयेत् ॥ १६ ॥

सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम्।
आपदास्पदकाले तु कुर्वीत न विचारयेत् ॥ १७ ॥

शत्रुं च मित्ररूपेण सान्त्वेनैवाभिसान्त्वयेत्।
नित्यशश्चोद्विजेत्तस्माद्गृहात्सर्पयुतादिव ॥ १८ ॥

अर्थी तु शक्यते भोक्तुं कृतकार्योऽवमन्यते।
तस्मात् सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ १९ ॥

नालसाः प्राप्नुवन्त्यर्थान्न क्लीबा नाभिमानिनः।
न च लोकरवाद्भीता न वै शश्वत्प्रतीक्षिणः ॥ १७२० ॥

बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत्।
वृकवच्चावलुम्पेत शरवच्च विनिष्पतेत् ॥ २१ ॥

पानमक्षास्तथा नार्यो मृगया गीतवादितम्।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥ २२ ॥

कुर्यात्तृणमयं चापं शयीत मृगशायिकाम्।
अन्धः स्यादन्धवेलायां बाधिर्यमपि संश्रयेत् ॥ २३ ॥

देशकालौ समासाद्य विक्रमेत विचक्षणः।
देशकालव्यतीतो हि विक्रमो निष्फलो भवेत् ॥ २४ ॥

अनागतं विजानीयाद्यच्छेद्भयमुपस्थितम् ।
पुनर्वृद्धिभयात्किञ्चिदनिवृत्तं निशामयेत् ॥ २५ ॥
प्रत्युपस्थितकालस्य सुखस्य परिवर्जनम् ।
अनागतसुखाशा च नैव बुद्धिमता नयः ॥ २६ ॥
पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृत् ।
अर्थस्य विघ्न कुर्वाणा हन्तव्या भूतिमिच्छता ॥ २७ ॥
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥ २८ ॥
नास्ति जात्या रिपुर्नाम मित्रं वाऽपि न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ २९ ॥
त्रिवर्गस्त्रिविधा पीडा अनुबन्धास्तथैव च ।
अनुबन्धं तथा ज्ञात्वा पीडां च परिवर्जयेत् ॥ १७३० ॥
ऋणशेषमग्निशेषं शत्रुशेषं तथैव च ।
पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न धारयेत् ॥ ३१ ॥
वधेन च मनुष्याणां मार्गाणां दूषणेन च ।
अगाराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥ ३२ ॥
गृध्रदृष्टिर्बकालीन॰ श्वचेष्टः सिंहविक्रमः ।
अनुद्विग्न॰ काकशङ्की भुजङ्गचरितं चरेत् ॥ ३३ ॥
काले मृदुर्यो भवति काले भवति दारुण ।
प्रसाधयति कृत्यानि शत्रुं चाप्यधितिष्ठति ॥ ३४ ॥

न तत्तरेद्यस्य न पारमुत्तरे-
न्न तद्धरेद्यत्पुनराहरेत्पर ।
न तत्खनेद्यस्य न मूलमुद्धरे-
न्न तं हन्याद्यस्य शिरो न पातयेत् ॥ ३५ ॥
इतीदमुक्तं वृजिनाभिसंहितम्
न चैतदेवं पुरुषः समाचरेत् ।
परप्रयुक्ते न कथं विभावये-
दतो मयोक्तं भवतो हितार्थिना ॥ ३६ ॥

## विश्वामित्रश्वपचसंवादः

(अ.१४१) केनस्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते।
युधि०- कथमापत्सु वर्तेत तन्मे ब्रूहि पितामह ॥ ३७॥

भीष्म०- अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
विश्वामित्रस्य संवादं चाण्डालस्य च पक्कणे ॥ ३८॥

त्रेताद्वापरयोः सन्धौ तदा दैवविधिक्रमात्।
अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ॥ ३९॥

नावश्यायोऽपि तत्राभूत्कुत एवाभ्रजातयः॥ १७४०॥

सरांसि सरितश्चैव कूपाः प्रस्रवणानि च।
हतत्विषो न लक्ष्यन्ते निसर्गाद्दैवकारितात् ॥ ४१॥

उच्छिन्नकृषिगोरक्षा निवृत्तविपणापणा।
निवृत्तयूपसंभारा विप्रनष्टमहोत्सवा ॥ ४२॥

गोजाविमहिषीहीना परस्परपराहता।
सर्वभूततरुप्राया बभूव वसुधा तदा ॥ ४३॥

तस्मिन्प्रतिभये काले क्षते धर्मे युधिष्ठिर।
बभूवुः क्षुधिता मर्त्याः खादमानाः परस्परम् ॥ ४४॥

ऋषयो नियमांस्त्यक्त्वा परित्यज्याग्निदेवताः।
आश्रमान्संपरित्यज्य पर्यधावन्नितस्ततः ॥ ४५॥

विश्वामित्रोऽथ भगवान् महर्षिरनिकेतनः।
क्षुधापरिगतो धीमान् समन्तात्पर्यधावत ॥ ४६॥

स कदाचित्परिपतन् श्वपचानां निवेशनम्।
हिंस्राणां प्राणिघातानामाससाद वने क्वचित् ॥ ४७॥

तत्प्रविश्य क्षुधाविष्टो विश्वामित्रो महानृषिः।
आहारान्वेषणे युक्तः परं यत्नं समास्थितः ॥ ४८॥

स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः।
चाण्डालस्य गृहे राजन् सद्यः शस्त्रहतस्य वै ॥ ४९॥

स चिन्तयामास तदा स्तैन्यं कार्यमितो मया।
न हीदानीमुपायो मे विद्यते प्राणधारणे ॥ १७५० ॥

सोऽहमन्त्यावसायाना हराम्येनां प्रतिग्रहात्।
न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीम् ॥ ५१ ॥

एतां बुद्धिं समास्थाय विश्वामित्रो महामुनि ।
तस्मिन्देशे स सुष्वाप श्वपचो यत्र भारत ॥ ५२ ॥

स विगाढां निशा दृष्ट्वा सुते चाण्डालपक्कणे।
शनैरुत्थाय भगवान् प्रविवेश कुटीमत· ॥ ५३ ॥

स सुप्त इव चाण्डालः श्लेष्मापिहितलोचनः।
परिभिन्नस्वरो रूक्ष· प्रोवाचाप्रियदर्शनः ॥ ५४ ॥

कः कुतन्त्रीं घट्टयति सुते चाण्डालपक्कणे।
जागर्मि नात्र सुतोऽस्मि हतोऽसीति च दारुण ॥ ५५ ॥

विश्वामित्रस्ततो भीतः सहसा तमुवाच ह ॥ ५६ ॥

विश्वामित्रोऽहमायुष्मन्नागतोऽहं बुभुक्षितः।
मा वधीर्मम सद्बुद्धे यदि सम्यक् प्रपश्यसि ॥ ५७ ॥

चाण्डालस्तद्वच· श्रुत्वा महर्षेर्भावितात्मनः।
उवाच कौशिकं रात्रौ ब्रह्मन् किं ते चिकीर्षितम् ॥ ५८ ॥

विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन्।
क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् ॥ ५९ ॥

क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः।
क्षुच्च मां दूषयत्यत्र हरिष्यामि श्वजाघनीम् ॥ १७६० ॥

अवसीदन्ति मे प्राणा· श्रुतिर्मे नश्यति क्षुधा।
सोऽधर्मं बुद्ध्यमानोऽपि हरिष्यामि श्वजाघनीम् ॥ ६१ ॥

तमुवाच स चाण्डालो महर्षे शृणु मे वचः।
श्रुत्वा तत्त्वं तथाऽऽतिष्ठ यथा धर्मो न हीयते ॥ ६२ ॥

शृगालादधमं श्वानं प्रवदन्ति मनीषिणः।
तस्याप्यधम उद्देशः शरीरस्य श्वजाघनी ॥ ६३ ॥

नेदं सम्यग्व्यवसितं महर्षे धर्मगर्हितम्।
चाण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः ॥ ६४ ॥

विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ।
क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः ॥ ६५ ॥

येन येन विशेषेण कर्मणा येन केनचित्।
अभ्युज्जीवेत्साद्यमानः समर्थो धर्ममाचरेत् ॥ ६६ ॥

यथा यथैव जीवेद्धि तत्कर्तव्यमहेलया।
जीवितं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात् ॥ ६७ ॥

सोऽहं जीवितमाकाङ्क्षन्नभक्ष्यस्यापि भक्षणम्।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥ ६८ ॥

**श्वपच०**— नैतत्खादन्प्राप्नुते दीर्घमायु-
नैव प्राणान्नामृतस्येव तृप्तिः।
भिक्षामन्यां भिक्ष मा ते मनोऽस्तु
श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम् ॥ ६९ ॥

**विश्वा०**— न दुर्भिक्षे सुलभं मांसमन्य-
च्छ्वपाक मन्ये न च मेऽस्ति वित्तम्।
क्षुधार्तश्चाहमगतिर्निराशः
श्वमांसे चास्मिन् षड्रसान् साधु मन्ये ॥ १७७० ॥

**श्वपच०**—पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै विशः।
यथा शास्त्रं प्रमाणं ते माऽभक्ष्ये मानस कृथाः ॥ ७१ ॥

**विश्वा०**—अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै।
अहमापद्गतः क्षुत्तो भक्षयिष्ये श्वजाघनीम् ॥ ७२ ॥

**श्वपच०**— यद्ब्राह्मणार्थे कृतमर्थितेन
तेनर्षिणा तदवस्थाधिकारे।

स वै धर्मो यत्र न पापमस्ति
सर्वैरुपायैर्गुरवो हि रक्ष्याः ॥ ७३ ॥

विश्वा०- मित्रं च मे ब्राह्मणस्यायमात्मा
प्रियश्च मे पूज्यतमश्च लोके।
तं धर्तुकामोऽहमिमां जिहीर्षे
नृशंसानामीदृशानां न बिभ्ये ॥ ७४ ॥

श्वपच०- कामं नरा जीवितं सन्त्यजन्ति
न चाभक्ष्ये क्वचित्कुर्वन्ति बुद्धिम्।
सर्वान्कामान्प्राप्नुवन्तीह विद्वन्
प्रियस्व कामं सहितः क्षुधैव ॥ ७५ ॥

विश्वा०-पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि।
न तेऽधिकारो धर्मेऽस्ति मा भूरात्मप्रशंसकः ॥ ७६ ॥

श्वपच०-सुहृद्भूत्वाऽनुशासे त्वां कृपा हि त्वयि मे द्विज।
यदिदं श्रेय आधत्स्व मा लोभात्पातकं कृथाः ॥ ७७ ॥

विश्वा०-सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर।
जानेऽहं धर्मतोऽऽत्मानं शौनीमुत्सृज जाघनीम् ॥ ७८ ॥

श्वपच०- यद्येष हेतुस्तव खादने स्या-
न्न ते वेदः कारणं नार्यधर्मः।
तस्माद्भक्ष्येऽभक्षणे वा द्विजेन्द्र
दोषं न पश्यामि यथेदमत्र ॥ ७९ ॥

भीष्म०-एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा।
विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम् ॥ १७८० ॥

अथास्य बुद्धिरभवद्विधिनाऽहं श्वजाघनीम्।
भक्षयामि यथाकामं पूर्वं सन्तर्प्य देवताः ॥ ८१ ॥

ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः।
ऐन्द्राग्नेयेन विधिना चरुं श्रपयत स्वयम् ॥ ८२ ॥

ततः समारभत्कर्म दैवं पित्र्यं च भारत।
आहूय देवानिन्द्रादीन् भागं भागं विधिक्रमात् ॥ ८३ ॥

एतस्मिन्नेव काले तु प्रववर्ष स वासवः।
सञ्जीवयन् प्रजाः सर्वा जनयामास चौषधीः ॥ ८४ ॥

स संहृत्य च तत्कर्म अनास्वाद्य च तद्धविः।
तोषयामास देवांश्च पितॄंश्च द्विजसत्तमः ॥ ८५ ॥

एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥ ८६ ॥

एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत्।
जीवन् पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ॥ ८७ ॥

तस्मात्कौन्तेय विदुषा धर्माधर्मविनिश्चये।
बुद्धिमास्थाय लोकेऽस्मिन् वर्तितव्यं कृतात्मना ॥ ८८ ॥

## कपोताख्यानम्

(अ.१४३)पितामह महाप्राज्ञ सर्वशास्त्रविशारद।
युधि०— शरणं पाल्यमानस्य यो धर्मस्तं ब्रवीहि मे ॥ ८९ ॥

भीष्म०— धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम्।
शृणुष्वावहितो राजन् गदतो मे महाभुज ॥ १७९० ॥

कश्चित्क्षुद्रसमाचारः पृथिव्यां कालसंमितः।
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥ ९१ ॥

स वै क्षारकमादाय द्विजान् हत्वा वने सदा।
चकार विक्रयं तेषां पतङ्गानां जनाधिप ॥ ९२ ॥

ततः कदाचित्तस्याथ वनस्थस्य समन्ततः।
पातयन्निव वृक्षांस्तान्सुमहान्वातसंभ्रमः ॥ ९३ ॥

मेघसङ्कुलमाकाशं विद्युन्मण्डलमण्डितम्।
संछन्नस्तु मुहूर्तेन नौसार्थैरिव सागरः ॥ ९४ ॥

वारिधारासमूहेन संप्रविष्टः शतक्रतुः।
क्षणेन पूरयामास सलिलेन वसुन्धराम् ॥ ९५ ॥
ततो धाराकुले काले संभ्रमभ्रष्टचेतनः।
शीतार्तस्तद्वनं सर्वमाकुलेनान्तरात्मना ॥ ९६ ॥
नैव निम्नं स्थलं वापि सोऽविन्दत विहङ्गहा।
पूरितो हि जलौघेन तस्य मार्गो वनस्य तु ॥ ९७ ॥
स तु शीतहतैर्गात्रैर्न जगाम न तस्थिवान्।
ददर्श पतिता भूमौ कपोतीं शीतविह्वलाम् ॥ ९८ ॥
दृष्ट्वाऽऽर्तोपि हि पापात्मा स ता पञ्जरकेऽक्षिपत् ॥ ९९ ॥
स्वयं दुःखाभिभूतोऽपि दु खमेवाकरोत्परे।
पापात्मा पापकारित्वात्पापमेव चकार सः ॥ १८०० ॥
सोऽपश्यत्तरुषण्डेषु मेघनीलवनस्पतिम्।
सेव्यमानं विहङ्गौघैश्छायावासफलार्थिभिः।
धात्रा परोपकाराय स साधुरिव निर्मित ॥ १ ॥
अथाभवत्क्षणेनैव वियद्विमलतारकम्।
महत्सर इवोत्फुल्लं कुमुदच्छुरितोदकम् ॥ २ ॥
ताराढ्यं कुमुदाकारमाकाशं निर्मलं बहु।
घनैर्मुक्तं नभो दृष्ट्वा लुब्धक॰ शीतविह्वलः।
कृतबुद्धिर्द्रुमे तस्मिन् वस्तुं तां रजनी गतः ॥ ३ ॥
स शिलायां शिर॰ कृत्वा पर्णान्यास्तीर्य भूतले।
दुःखेन महताऽऽविष्टस्तत॰ सुष्वाप पक्षिहा ॥ ४ ॥
(अ. १४४) अथ वृक्षस्य शाखाया विहङ्ग ससुहृज्जनः।
दीर्घकालोषितो राजंस्तत्र चित्रतनूरुह॰ ॥ ५ ॥
तस्य कल्यगता भार्या चरितुं नाभ्यवर्तत।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥ ६ ॥
वातवर्षं महच्चासीन्न चागच्छति मे प्रिया।
किं नु तत्कारणं येन साऽद्यापि न निवर्तते ॥ ७ ॥

अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने।
तया विरहितं हीदं शून्यमद्य गृहं मम ॥ ८ ॥

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥ ९ ॥

यदि सारक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा।
अद्य नायाति मे कान्ता न कार्यं जीवितेन मे ॥ १८१० ॥

पतिव्रता पतिगति पतिप्रियहिते रता।
यस्य स्यात्तादृशी भार्या धन्यः स पुरुषो भुवि ॥ ११ ॥

वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहम्।
प्रासादोऽपि तया हीनः कान्तार इति निश्चितम् ॥ १२ ॥

धर्मार्थकामकालेषु भार्या पुंसः सहायिनी।
विदेशगमने चास्य सैव विश्वासकारिका ॥ १३ ॥

तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च।
नास्ति भार्यासमं किंचिन्नरस्यार्तस्य भेषजम् ॥ १४ ॥

नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः।
नास्ति भार्यासमो लोके सहायो धर्मसङ्ग्रहे ॥ १५ ॥

यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी।
अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ॥ १६ ॥

(अ.१४५) एवं विलपतस्तस्य श्रुत्वा तु करुणं वचः।
गृहीता शकुनिघ्नेन कपोती वाक्यमब्रवीत् ॥ १७ ॥

अहोऽतीव सुभाग्याऽहं यस्या मे दयितः पतिः।
असतो वा सतो वापि गुणानेवं प्रभाषते ॥ १८ ॥

न सा स्त्री ह्यभिमन्तव्या यस्यां भर्ता न तुष्यति।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ १९ ॥

इति संचिन्त्य दुःखार्ता भर्तारं दुःखितं तदा।
कपोती लुब्धकेनापि गृहीता वाक्यमब्रवीत् ॥ १८२० ॥

एष शाकुनिकः शेते तव वासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥ २१ ॥

यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ।
स प्रेत्य लभते लोकानक्षयानिति शुश्रुम ॥ २२ ॥

स त्वं सन्तानवानद्य पुत्रवानसि च द्विज ।
तत्स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य च ।
पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा ॥ २३ ॥

शरीरे मा च सन्तापं कुर्वीथास्त्व विहङ्गम ।
शरीरयात्राकृत्यर्थमन्यान् दारानुपैष्यसि ॥ २४ ॥

(अ.१४६) स पत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा ।
उवाच स्वागतं तेऽद्य ब्रूहि किं करवाणि ते ॥ २५ ॥

सन्तापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ।
तद्ब्रवीतु भवान् क्षिप्रं किं करोमि किमिच्छसि ॥ २६ ॥

प्रणयेन ब्रवीमि त्वां त्वं हि न शरणागतः ॥ २७ ॥

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥ २८ ॥

तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत् ।
बाधते खलु मे शीतं सन्त्राणं हि विधीयताम् ॥ २९ ॥

एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य भूतले ।
यथाशक्त्या हि पर्णेन ज्वलनार्थं द्रुतं ययौ ॥ १८३० ॥

स गत्वाऽङ्गारकर्मान्तं गृहीत्वाग्निमथागमत् ।
ततः शुष्केषु पर्णेषु पावकं सोऽप्यदीपयत् ॥ ३१ ॥

स सन्दीप्तं महत्कृत्वा तमाह शरणागतम् ।
प्रतापय सुविस्रब्धः स्वगात्राण्यकुतोभयः ॥ ३२ ॥

स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत्।
अग्निं प्रत्यागतप्राणस्ततः प्राह विहङ्गमम् ॥ ३३ ॥

दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम्।
स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः ॥ ३४ ॥

न मेऽस्ति विभवो येन नाशयेयं क्षुधां तव।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥ ३५ ॥

सञ्चयो नास्ति चास्माकं मुनीनामिव भोजने।
इत्युक्त्वा तं तदा तत्र विवर्णवदनोऽभवत् ॥ ३६ ॥

कथं नु खलु कर्तव्यमिति चिन्तापरस्तदा।
बभूव भरतश्रेष्ठ गर्हयन् वृत्तिमात्मन ॥ ३७ ॥

मुहूर्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातिनम्।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ ३८ ॥

इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनम्।
तमग्निं त्रिःपरिक्रम्य प्रविवेश महामतिः ॥ ३९ ॥

अग्निमध्ये प्रविष्टं तु लुब्धो दृष्ट्वा तु पक्षिणम्।
चिन्तयामास मनसा किमिदं वै मया कृतम् ॥ १८४० ॥

(अ.१४७) नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः।
दत्तः स्वमांसं दहता कपोतेन महात्मना ॥ ४१ ॥

सोऽहं त्यक्ष्ये प्रियान्प्राणान्पुत्रान्दारांस्तथैव च।
उपदिष्टो हि मे धर्मः कपोतेन महात्मना॥ ४२ ॥

अद्यप्रभृति देहं स्वं सर्वभोगैर्विवर्जितम्।
यथा स्वल्पं सरो ग्रीष्मे शोषयिष्याम्यहं तथा ॥ ४३ ॥

अहो देहप्रदानेन दर्शिताऽतिथिपूजना।
तस्माद्धर्मं चरिष्यामि धर्मो हि परमा गतिः ॥ ४४ ॥

एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः।
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः ॥ ४५ ॥

ततो यष्टिं शलाकां च क्षारकं पञ्जरं तथा।
तां च बद्धां कपोतीं स प्रमुच्य विससर्ज ह ॥ ४६ ॥

(अ.१४८) ततो गते शाकुनिके कपोती प्राह दुःखिता।
संस्मृत्य सा च भर्तारं रुदती शोककर्षिता ॥ ४७ ॥

सर्वाऽपि विधवा नारी बहुपुत्राऽपि शोचते।
शोच्या भवति बन्धूनां पतिहीना तपस्विनी ॥ ४८ ॥

लालिताऽहं त्वया नित्यं बहुमानाच्च पूजिता।
वचनैर्मधुरैः स्निग्धैरसंक्लिष्टमनोहरैः ॥ ४९ ॥

द्रुमाग्रेषु च रम्येषु रमिताऽहं त्वया सह।
आकाशगमने चैव विहृताऽहं त्वया सुखम् ॥ १८५० ॥

रमामि स्म पुरा कान्त तन्मे नास्त्यद्य किञ्चन ॥ ५१ ॥

मितं ददाति हि पिता मितं भ्राता मितं सुतः।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ ५२ ॥

न कार्यमिह मे नाथ जीवितेन त्वया विना।
पतिहीना तु का नारी सती जीवितुमुत्सहेत् ॥ ५३ ॥

एवं विलप्य बहुधा करुणं सा सुदुःखिता।
पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ॥ ५४ ॥

ततश्चित्राङ्गदधरं भर्तारं साऽन्वपश्यत।
विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः ॥ ५५ ॥

ततः स्वर्गं गतः पक्षी विमानवरमास्थितः।
कर्मणा पूजितस्तत्र रेमे स सह भार्यया ॥ ५६ ॥

(अ.१४९) महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवक ।
निश्चेष्टो मरुदाधारो निर्ममः स्वर्गकाङ्क्षया।
बभ्राम तस्मिन्विजने नानामृगसमाकुले ॥ ५७ ॥

ततो द्रुमाणां महता पवनेन वने तदा।
उदतिष्ठत सङ्घर्षात्सुमहान् हव्यवाहनः ॥ ५८ ॥

ततः स देहमोक्षार्थं संप्रहृष्टेन चेतसा।
अभ्यधावत वर्धन्तं पावकं लुब्धकस्तदा॥ ५९॥

ततस्तेनाग्निना दग्धो लुब्धको नष्टकल्मष.।
जगाम परमां सिद्धिं ततो भरतसत्तम॥ १८६०॥

एवं खलु कपोतश्च कपोती च पतिव्रता।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्मणा॥ ६१॥

गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्मणः।
न निष्कृतिर्भवेत्तस्य यो हन्याच्छरणागतम्॥ ६२॥

## पवनशाल्मलिसंवादः

(अ १५४)बलिन. प्रत्यमित्रस्य नित्यमासन्नवर्तिनः।
युधि०— वाग्भिरप्रतिरूपाभिरभिद्रुह्य पितामह।
आत्मनो बलमास्थाय कथं वर्तेत मानवः॥ ६३॥

भीष्म०— अत्राप्युदाहरन्तीममितिहास पुरातनम्।
संवादं भरतश्रेष्ठ शाल्मलेः पवनस्य च॥ ६४॥

हिमवन्तं समासाद्य महानासीद्वनस्पतिः।
वर्षपूगाभिसंवृद्ध शाखी स्कन्धी पलाशवान्॥ ६५॥

तस्य ता विपुलाः शाखा दृष्ट्वा स्कन्धं च सर्वश.।
अभिगम्याब्रवीदेनं नारदो भरतर्षभ॥ ६६॥

अहो नु रमणीयस्त्वमहो चासि मनोहरः।
प्रीयामहे त्वया नित्य तरुप्रवर शाल्मले॥ ६७॥

तव शाखा महाशाख स्कन्धांश्च विपुलांस्तथा।
न वै प्रभग्नान्पश्यामि मारुतेन कथञ्चन॥ ६८॥

किं नु ते पवनस्तात प्रीतिमानथवा सुहृत्।
त्वां रक्षति सदा येन वनेऽत्र पवनो ध्रुवम्॥ ६९॥

(अ १५५)न्यग्भावं परमं वायोः शाल्मले त्वमुपागतः।
तवाहमस्मीति सदा येन रक्षति मारुतः॥ १८७०॥

शाल्म०– न मे वायु· सखा ब्रह्मन्न बन्धुर्न च मे सुहृत्।
परमेष्ठी तथा नैव येन रक्षति वाऽनिलः ॥ ७१ ॥

मम तेजोबल भीमं वायोरपि हि नारद।
कलामष्टादशीं प्राणैर्न मे प्राप्नोति मारुतः ॥ ७२ ॥

स मया बहुशो भग्न· प्रभञ्जन् वै प्रभञ्जन ।
तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात् ॥ ७३ ॥

नारद०–शाल्मले विपरीतं ते दर्शनं नात्र संशयः।
न हि वायोर्बलेनास्ति भूतं तुल्यबलं क्वचित् ॥ ७४ ॥

यच्च किंचिदिह प्राणी चेष्टते शाल्मले भुवि।
सर्वत्र भगवान् वायुश्चेष्टाप्राणकरः प्रभुः ॥ ७५ ॥

स त्वमेवंविधं वायुं सर्वसत्त्वभृतां वरम्।
न पूजयसि पूज्यं तं किमन्यद्बुद्धिलाघवात् ॥ ७६ ॥

असारश्चापि दुर्मेधाः केवलं बहु भाषसे।
क्रोधादिभिरवच्छन्नो मिथ्या वदसि शाल्मले ॥ ७७ ॥

मम रोष· समुत्पन्नस्त्वय्येव संप्रभाषति।
ब्रवीम्येष स्वयं वायोस्तव दुर्भाषितं बहु ॥ ७८ ॥

(अ.१५६)एवमुक्त्वा तु राजेन्द्र शाल्मलिं ब्रह्मवित्तमः।
नारदः पवने सर्वं शाल्मलेर्वाक्यमब्रवीत् ॥ ७९ ॥

हिमवत्पृष्ठजः कश्चिच्छाल्मलिः परिवारवान्।
बृहन्मूलो बृहच्छाय· स त्वां वायोऽवमन्यते ॥ १८८० ॥

बहुव्याक्षेपयुक्तानि त्वामाह वचनानि स ।
न युक्तानि मया वायो तानि वक्तुं तवाग्रत· ॥ ८१ ॥

एतत्तु वचनं श्रुत्वा नारदस्य समीरणः।
शाल्मलिं तमुपागम्य क्रुद्धो वचनमब्रवीत् ॥ ८२ ॥

शाल्मले नारदो गच्छंस्त्वयोक्तो मद्विगर्हणम्।
अहं वायुः प्रभावं ते दर्शयाम्यात्मनो बलम् ॥ ८३ ॥

अहं त्वामभिजानामि विदितश्चासि मे द्रुम।
पितामहः प्रजासर्गे त्वयि विश्रान्तवान्प्रभुः ॥ ८४ ॥
तस्य विश्रमणादेष प्रसादो मत्कृतस्तव।
रक्ष्यसे तेन दुर्बुद्धे नात्मवीर्याद्द्रुमाधम ॥ ८५ ॥
यन्मां त्वमवजानीषे यथाऽन्यं प्राकृतं तथा।
दर्शयाम्येष चात्मानं यथा मां नावमन्यसे ॥ ८६ ॥
एवमुक्तस्ततः प्राह शाल्मलिः प्रहसन्निव।
पवन त्वं च मे क्रुद्धो दर्शयात्मानमात्मना ॥ ८७ ॥
मयि वै त्यजतां क्रोधः किं मे क्रुद्धः करिष्यसि।
न ते बिभेमि पवन यद्यपि त्वं स्वयं प्रभुः ॥ ८८ ॥
बलाधिकोऽहं त्वत्तश्च न भीः कार्या मया तव ॥ ८९ ॥
ये तु बुद्धया हि बलिनस्ते भवन्ति बलीयसः।
प्राणमात्रबला ये वै नैव ते बलिनो मताः ॥ १८९० ॥
इत्येवमुक्तः पवनः श्व इत्येवाब्रवीद्वचः।
दर्शयिष्यामि ते तेजस्ततो रात्रिरुपागमत् ॥ ९१ ॥
अथ निश्चित्य मनसा शाल्मलिर्वातकारितम्।
पश्यमानस्तदात्मानमसमं मातरिश्वना ॥ ९२ ॥
नारदे यन्मया प्रोक्तं वचनं प्रति तन्मृषा।
असमर्थो ह्यहं वायोर्बलेन बलवान् हि सः ॥ ९३ ॥
मारुतो बलवान्नित्यं यथा वै नारदोऽब्रवीत्।
अहं तु दुर्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः ॥ ९४ ॥
किन्तु बुद्धया समो नास्ति मया कश्चिद्वनस्पतिः।
तदहं बुद्धिमास्थाय भयं मोक्ष्ये समीरणात् ॥ ९५ ॥
यदि तां बुद्धिमास्थाय तिष्ठेयुः पर्णिनो वने।
अरिष्टाः स्युः सदा क्रुद्धात्पवनान्नात्र संशयः ॥ ९६ ॥
(अ.१५७) ततो निश्चित्य मनसा शाल्मलिः क्षुभितस्तदा।
शाखास्कन्धान्प्रशाखाश्च स्वयमेव व्यशातयत् ॥ ९७ ॥

स परित्यज्य शाखाश्च पत्राणि कुसुमानि च।
प्रभाते वायुमायान्तं प्रत्यैक्षत वनस्पतिः॥ ९८ ॥

ततः क्रुद्धः श्वसन्वायुः पातयन् वै महाद्रुमान्।
आजगामाथ तं देशमास्ते यत्र स शाल्मलि ॥ ९९ ॥

तं हीनपर्णं पतिताग्रशाखं
निशीर्णपुष्पं प्रसमीक्ष्य वायुः।
उवाच वाक्यं स्मयमान एव
मुदा युतः शाल्मलिमुग्रशाखम्॥ १९०० ॥

अहमप्येवमेव त्वां कुर्वाणः शाल्मले रुषा।
आत्मना यत्कृतं कृच्छ्रं शाखानामपकर्षणम्॥ १ ॥

हीनपुष्पाग्रशाखस्त्वं शीर्णाङ्कुरपलाशकः।
आत्मदुर्मन्त्रितेनेह मद्वीर्यवशगः कृतः॥ २ ॥

एतच्छ्रुत्वा वचो वायोः शाल्मलिर्व्रीडितस्तदा।
अतप्यत वचः स्मृत्वा नारदो यत्तदाऽब्रवीत्॥ ३ ॥

एवं हि राजशार्दूल दुर्बलः सन् बलीयसा।
वैरमारभते बालस्तप्यते शाल्मलिर्यथा॥ ४ ॥
न हि वैरं महात्मानो विवृण्वन्त्यपकारिषु।
शनैः शनैर्महाराज दर्शयन्ति स्म ते बलम्॥ ५ ॥

(अ.१५८) पापस्य यदधिष्ठानं यतः पापं प्रवर्तते।
युधि०- एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ॥ ६ ॥

भीष्म०-पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप।
एको लोभो महाग्राहो लोभात्पापं प्रवर्तते॥ ७ ॥

लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते।
लोभान्मोहश्च माया च मानः स्तम्भः परासुता॥ ८ ॥

दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा।
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम्॥ ९ ॥

अन्त क्रूरा वाङ्मधुरा कूपाश्छन्नास्तृणैरिव।
धर्मवैतंसिका क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ॥ १९१० ॥
कुर्वते च बहून्मार्गास्तान् हेतुबलमाश्रिताः।
सतां मार्गान्विलुम्पन्ति लोभज्ञानेष्वव स्थिताः ॥ ११ ॥
धर्मस्य ह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः।
या या विक्रियते संस्था ततः सापि प्रपद्यते ॥ १२ ॥
दर्प क्रोधो मद स्वप्नो हर्ष शोकोऽतिमानिता।
एत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु।
एतानशिष्टान् बुध्यस्व नित्यं लोभसमन्वितान् ॥ १३ ॥
(अ १६०) स्वाध्याये कृतयत्नस्य नरस्य च पितामह।
युधि०– धर्मकामस्य धर्मात्मन् किं नु श्रेय इहोच्यते ॥ १४ ॥
भीष्म०–धर्मस्य विधयो नैके ये वै प्रोक्ता महर्षिभिः।
स्वं स्व विज्ञानमाश्रित्य दमस्तेषां परायणम् ॥ १५ ॥
दमस्तेजो वर्धयति पवित्रं च दम परम्।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ॥ १६ ॥
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते।
सुखं पर्येति लोकांश्च मनश्चास्य प्रसीदति ॥ १७ ॥
क्षमा धृतिरहिंसा च समता सत्यमार्जवम्।
इन्द्रियाभिजयो दाक्ष्यं मार्दवं ह्रीरचापलम् ॥ १८ ॥
अकार्पण्यमसंरम्भः सन्तोष प्रियवादिता।
अविहिंसाऽनसूया चाप्येषां समुदयो दमः ॥ १९ ॥
एक एव दमे दोषो द्वितीयो नोपपद्यते।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ १९२० ॥
एकोऽस्य सुमहाप्राज्ञ दोष स्यात् सुमहान् गुणः।
क्षमया विपुला लोकाः सुलभा हि सहिष्णुता ॥ २१ ॥
दान्तस्य किमरण्येन तथाऽदान्तस्य भारत।
यत्रैव निवसेद्दान्तस्तदरण्यं स चाश्रमः ॥ २२ ॥

(अ.१६१) सर्वमेतत्तपोमूलं कवयः परिचक्षते।
न ह्यतप्ततपा मूढः क्रियाफलमवाप्नुते ॥ २३ ॥
प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः।
तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ २४ ॥
औषधान्यगदादीनि क्रियाश्च विविधास्तथा।
तपसैव हि सिद्ध्यन्ति तपोमूलं हि साधनम् ॥ २५ ॥
यद्दुरापं भवेत्किञ्चित्तत्सर्वं तपसो भवेत्।
ऐश्वर्यमृषयः प्राप्तास्तपसैव न संशयः ॥ २६ ॥
तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्तत।
निवृत्त्या वर्तमानस्य तपो नानशनात्परम् ॥ २७ ॥
अहिंसा सत्यवचनं दानमिन्द्रियनिग्रह।
एतेभ्यो हि महाराज तपो नानशनात्परम् ॥ २८ ॥
(अ १६२) सत्यं धर्मं प्रशंसन्ति विप्रर्षिपितृदेवताः।
युधि०- सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह ॥ २९ ॥
भीष्म०-सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः।
सत्यमेव नमस्येत सत्यं हि परमा गति. ॥ १९३० ॥
सत्यं त्रयोदशविधं सर्वलोकेषु भारत ॥ ३१ ॥
सत्यं च समता चैव दमश्चैव न संशय।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ॥ ३२ ॥
त्यागो ध्यानमथार्यत्वं धृतिश्च सततं दया।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ ३३ ॥
एते त्रयोदशाकारा. पृथक् सत्यैकलक्षणाः।
भजन्ते सत्यमेवेह बृंहयन्ते च भारत ॥ ३४ ॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्।
श्रुतिर्हि सत्य धर्मस्य तस्मात्सत्यं न लोपयेत् ॥ ३५ ॥
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ३६ ॥

## मोक्षधर्माः, ब्राह्मणसेनजित्संवादः

(अ.१७४) धर्माः पितामहेनोक्ता राजधर्माश्रिता शुभा ।
युधि०- धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव ॥ ३७ ॥

भीष्म०-सर्वत्र विहितो धर्मः सत्यप्रेत्य तपःफलम् ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ ३८ ॥
यस्मिन्यस्मिंस्तु विषये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥ ३९ ॥
यथा यथा च पर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ॥ १९४० ॥
एव व्यवसिते लोके बहुदोषे युधिष्ठिर ।
आत्ममोक्षनिमित्त वै यतेत मतिमान्नर ॥ ४१ ॥
युधि०- नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
यया बुद्ध्या नुदेच्छोकं तन्मे ब्रूहि पितामह ॥ ४२ ॥

भीष्म०-अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा सेनजितं विप्रः कश्चिदेत्याब्रवीत्सुहृत् ॥ ४३ ॥
पुत्रशोकाभिसन्तप्तं राजानं शोकविह्वलम् ।
विषण्णमनसं दृष्ट्वा विप्रो वचनमब्रवीत् ॥ ४४ ॥
पश्य भूतानि दुःखेन व्यतिषिक्तानि सर्वशः ।
उत्तमाधममध्यानि तेषु तेष्विह कर्मसु ॥ ४५ ॥
आत्मापि चायं न मम सर्वा वा पृथिवी मम ।
यथा मम तथाऽन्येषामिति चिन्त्य न मे व्यथा ॥ ४६ ॥
एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यथे ॥ ४७ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ४८ ॥
एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा ।
तेषां स्नेहो न कर्तव्यो विप्रयोगो ध्रुवो हि तैः ॥ ४९ ॥

अदर्शनादापतित पुनश्चादर्शनं गतः।
न त्वाऽसौ वेद न त्वं तं क· सन् किमनुशोचसि ॥१९५०॥

तृष्णार्तिप्रभवं दुःखं दु खार्तिप्रभवं सुखम्।
सुखात्सञ्जायते दुःखं दु·खमेवं पुन· पुनः॥ ५१॥

सुखस्यानन्तरं दु खं दुःखस्यानन्तरं सुखम्।
सुखदुःखे मनुष्याणा चक्रवत्परिवर्तत·॥ ५२॥

सुखात्त्वं दुःखमापन्नः पुनरापत्स्यसे सुखम्।
न नित्यं लभते दु·ख न नित्यं लभते सुखम्॥ ५३॥

स्नेहपाशैर्बहुविधैराविष्टविषया जना·।
अकृतार्थाश्च सीदन्ते जलै· सैकतसेतवः॥ ५४॥

सञ्चिनोत्यशुभं कर्म कलत्रापेक्षया नर·।
एक· क्लेशानवाप्नोति परत्रेह च मानव ॥ ५५॥

पुत्रदारकुटुम्बेषु प्रसक्ता· सर्वमानवा ।
शोकपङ्कार्णवे मग्ना जीर्णा वनगजा इव॥ ५६॥

नालं सुखाय सुहृदो नालं दुःखाय शत्रवः।
न च प्रज्ञाऽलमर्थानां न सुखानामलं धनम्॥ ५७॥

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः॥ ५८॥

बुद्धिमन्तं च शूरं च मूढ भीरु जड कविम्।
दुर्बलं बलवन्तं च भागिनं भजते सुखम्॥ ५९॥

धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च।
पय· पिबति यस्तस्या धेनुस्तस्येति निश्चयः॥ १९६०॥

ये च मूढतमा लोके ये च बुद्धे परं गताः।
ते नरा· सुखमेधन्ते क्लिश्यत्यन्तरितो जन·॥ ६१॥

शोकस्थानसहस्राणि भयस्थानशतानि च।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्॥ ६२॥

बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनसूयकम् ।
दान्तं जितेन्द्रियं चापि शोको न स्पृशते नरम् ॥ ६३ ॥

एता बुद्धिं समास्थाय गुप्तचित्तश्चरेद्बुधः ।
उदयास्तमयज्ञं हि न शोकः स्प्रष्टुमर्हति ॥ ६४ ॥

किञ्चिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापार्थं सर्वं संपद्यते तथा ॥ ६५ ॥

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ६६ ॥

यदा संहरते कामान् कूर्मोऽङ्गानीव सर्वशः ।
तदाऽऽत्मज्योतिरात्मायमात्मन्येव प्रपश्यति ॥ ६७ ॥

न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ६८ ॥

उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये ।
प्रियाप्रिये परित्यज्य प्रशान्तात्मा भविष्यति ॥ ६९ ॥

यदा न कुरुते धीरः सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ १९७० ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ७१ ॥

एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः प्रभाषितैः ।
पर्यवस्थापितो राजा सेनजिन्मुमुदे सुखी ॥ ७२ ॥

## मङ्किगीता, बोध्यगीता

(अ.१७७)ईहमानः समारंभान् यदि नासादयेद्धनम् ।
युधि०- धनतृष्णाभिभूतश्च किं कुर्वन्सुखमाप्नुयात् ॥ ७३ ॥

भीष्म०- सर्वसाम्यमनायासं सत्यवाक्यं च भारत ।
निर्वेदश्चाविधित्सा च यस्य स्यात्स सुखी नरः ॥ ७४ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निर्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर ॥ ७५ ॥

ईहमानो धनं मङ्किर्भग्नेहश्च पुनः पुनः ।
केनचिद्धनशेषेण क्रीतवान् दम्यगोयुगम् ॥ ७६ ॥

सुसंबद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ ।
आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावताम् ॥ ७७ ॥

तयोः संप्राप्तयोरुष्ट्रः स्कन्धदेशममर्षणः ।
उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ॥ ७८ ॥

ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना ।
म्रियमाणौ च सम्प्रेक्ष्य मङ्किस्तत्राब्रवीदिदम् ॥ ७९ ॥

न चैवाविहितं शक्य दक्षेणापीहितुं धनम् ।
युक्तेन श्रद्धया सम्यगीहां समनुतिष्ठता ॥ १९८० ॥

कृतस्य पूर्वं चानर्थैर्युक्तस्याप्यनुतिष्ठतः ।
इमं पश्यत सङ्गत्या मम दैवमुपप्लवम् ॥ ८१ ॥

मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
शुद्धं हि दैवमेवेदं हठे नैवास्ति पौरुषम् ॥ ८२ ॥

यदि वाप्युपपद्येत पौरुषं नाम कर्हिचित् ।
अन्विष्यमाणं तदपि दैवमेवावतिष्ठते ॥ ८३ ॥

तस्मान्निर्वेद एवेह गन्तव्यः सुखमिच्छता ।
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥ ८४ ॥

यः कामानाप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ ८५ ॥

नान्तं सर्वविधित्साना गतपूर्वोऽस्ति कश्चन ।
शरीरे जीविते चैव तृष्णा मन्दस्य वर्धते ॥ ८६ ॥

निर्वेदमहमासाद्य द्रव्यनाशाद्यदृच्छया ।
निर्वृत्तिं परमां प्राप्य नाद्य कामान्विचिन्तये ॥ ८७ ॥

एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागत.।
अच्छिनत्काममूलं स तेन प्राप महत्सुखम् ॥ ८८ ॥

(अ.१७८) अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
गीतं विदेहराजेन जनकेन प्रशाम्यता ॥ ८९ ॥

अनन्तमिव मे वित्तं यस्य मे नास्ति किञ्चन।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥ १९९० ॥

अत्रैवोदाहरन्तीमं बोध्यस्य पदसञ्चयम्।
निर्वेदं प्रति विन्यस्तं तं निबोध युधिष्ठिर ॥ ९१ ॥

बोध्यं शान्तमृषिं राजा नाहुष. पर्यपृच्छत।
कां बुद्धिं समनुध्याय शान्तश्चरसि निर्वृतः ॥ ९२ ॥

बोध्य०– उपदेशेन वर्तामि नानुशास्मीह कचन।
लक्षणं तस्य वक्ष्येऽहं तत्स्वयं परिमृश्यताम् ॥ ९३ ॥

पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने।
इषुकार. कुमारी च षडेते गुरवो मम ॥ ९४ ॥

आशा बलवती राजन्नैराश्यं परमं सुखम्।
आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला ॥ ९५ ॥

सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः।
आमिषस्य परित्यागात्कुरर. सुखमेधते ॥ ९६ ॥

गृहारम्भो हि दुःखाय न सुखाय कदाचन।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ ९७ ॥

सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः।
अद्रोहेणैव भूतानां सारङ्गा इव पक्षिणः ॥ ९८ ॥

इषुकारो नरः कश्चिदिषावासक्तमानसः।
समीपेनापि गच्छन्तं राजानं नावबुद्धवान् ॥ ९९ ॥

बहूनां कलहो नित्यं द्वयोः संकथनं ध्रुवम्।
एकाकी विचरिष्यामि कुमारीशङ्खको यथा ॥ २००० ॥

## शृगालकाश्यपसंवादः

(अ १८०)बान्धवाः कर्म वित्तं वा प्रज्ञा वेह पितामह।
युधि०– नरस्य का प्रतिष्ठा स्यादेतत्पृष्टो वदस्व मे ॥ १ ॥

भीष्म०– प्रज्ञा प्रतिष्ठा भूताना प्रज्ञा लाभः परो मतः।
प्रज्ञा निःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सताम् ॥ २ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
इन्द्रकाश्यपसंवादं तन्निबोध युधिष्ठिर ॥ ३ ॥

वैश्यः कश्चिदृषिसुतं काश्यपं संशितव्रतम्।
रथेन पातयामास श्रीमान् दृप्तस्तपस्विनम् ॥ ४ ॥

आर्तः स पतित कृद्धस्त्यक्त्वाऽऽत्मानमथाब्रवीत्।
मरिष्याम्यधनस्येह जीवितार्थो न विद्यते ॥ ५ ॥

तथा मुमूर्षुमासीनमकूजन्तमचेतसम्।
इन्द्रः सृगालरूपेण बभाषे लुब्धमानसम् ॥ ६ ॥

मनुष्ययोनिमिच्छन्ति सर्वभूतानि सर्वशः।
मनुष्यत्वे च विप्रत्वं सर्व एवाभिनन्दति ॥ ७ ॥

मनुष्यो ब्राह्मणश्चासि श्रोत्रियश्चासि काश्यप।
सुदुर्लभमवाप्यैतन्न दोषान्मर्तुमर्हसि ॥ ८ ॥

दिष्ट्या त्वं न शृगालो वै न कृमिर्न च मूषकः।
न सर्पो न च मण्डूको न चान्यः पापयोनिजः ॥ ९ ॥

एतावताऽपि लाभेन तोष्टुमर्हसि काश्यप।
किं पुनर्योऽसि सत्त्वानां सर्वेषां ब्राह्मणोत्तमः ॥ २०१० ॥

इमे मां कृमयोऽदन्ति येषामुद्धरणाय वै।
नास्ति शक्तिरपाणित्वात्पश्यावस्थामिमां मम ॥ ११ ॥

अकार्यमिति चैवेमं नात्मानं सन्त्यजाम्यहम्।
नातः पापीयसीं योनिं पतेयमपरामिति ॥ १२ ॥

जात्यैवैके सुखितराः सन्त्यन्ये भृशदुःखिताः।
नैकान्तं सुखमेवेह क्वचित्पश्यामि कस्यचित् ॥ १३ ॥

मनुष्या ह्याढ्यतां प्राप्य राज्यमिच्छन्त्यनन्तरम्।
राज्याद्देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि ॥ १४ ॥

भवेस्त्वं यद्यपि त्वाढ्यो न राजा न च दैवतम्।
देवत्वं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति ॥ १५ ॥

दृष्ट्वा कुणीन् पक्षहतान् मनुष्यानामयाविनः।
सुसंपूर्णः स्वया योन्या लब्धलाभोऽसि काश्यप ॥ १६ ॥

यदि ब्राह्मण देहस्ते निरातङ्को निरामयः।
अङ्गानि च समग्राणि न च लोकेषु धिक्कृतः ॥ १७ ॥

न केनचित्प्रवादेन सत्येनैवापहारिणा।
धर्मायोत्तिष्ठ विप्रर्षे नात्मानं त्यक्तुमर्हसि ॥ १८ ॥

यदि ब्रह्मन् शृणोष्येतच्छ्रद्दधासि च मे वचः।
वेदोक्तस्यैव धर्मस्य फलं मुख्यमवाप्स्यसि ॥ १९ ॥

स्वाध्यायमग्निसंस्कारमप्रमत्तोऽनुपालय ।
सत्यं दमं च दानं च स्पर्धिष्ठा मा च केनचित् ॥ २०२० ॥

अहमासं पण्डितको हैतुको वेदनिन्दकः।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥ २१ ॥

हेतुवादान्प्रवदिता वक्ता संसत्सु हेतुमत्।
आक्रोष्टा चाभिवक्ता च ब्रह्मवाक्येषु च द्विजान् ॥ २२ ॥

नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः।
तस्येयं फलनिर्वृत्तिः सृगालत्वं मम द्विज ॥ २३ ॥

यदहं मानुषीं योनिं सृगालः प्राप्नुयां पुनः।
ज्ञेयज्ञाता भवेयं वै वर्ज्यवर्जयिता तथा ॥ २४ ॥

ततः स मुनिरुत्थाय काश्यपस्तमुवाच ह ।
अहो बतासि कुशलो बुद्धिमांश्चेति विस्मितः ॥ २५ ॥

समवैक्षत तं विप्रो ज्ञानदीर्घेण चक्षुषा।
ददर्श चैनं देवानां देवमिन्द्रं शचीपतिम् ॥ २६ ॥
तत. संपूजयामास काश्यपो हरिवाहनम्।
अनुज्ञातस्तु तेनाथ प्रविवेश स्वमालयम् ॥ २७ ॥

## अध्यात्मकथनम्

(अ.१९४)अध्यात्मं नाम यदिदं पुरुषस्येह चिन्त्यते।
युधि०- यदध्यात्मं यथा चैतत्तन्मे ब्रूहि पितामह ॥ २८ ॥
भीष्म०- अध्यात्ममिति मा पार्थ यदेतदनुपृच्छसि।
तद्व्याख्यास्यामि ते तात श्रेयस्करतमं सुखम्।
सृष्टिप्रलयसंयुक्तमाचार्यैः परिदर्शितम् ॥ २९ ॥
यज्ज्ञात्वा पुरुषो लोके प्रीतिं सौख्यं च विन्दति।
फललाभश्च तस्य स्यात् सर्वभूतहितं च तत् ॥ २०३० ॥
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ ३१ ॥
यतः सृष्टानि तत्रैव तानि यान्ति पुन पुनः।
महाभूतानि भूतेभ्य. सागरस्योर्मयो यथा ॥ ३२ ॥
प्रसार्य च यथाङ्गानि कूर्मः संहरते पुन ।
तद्वद्भूतानि भूतात्मा सृष्टानि हरते पुनः ॥ ३३ ॥
महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत्।
अकरोत्तेषु वैषम्यं तत्तु जीवो न पश्यति ॥ ३४ ॥
शब्दः श्रोत्रं तथा खानि त्रयमाकाशयोनिजम्।
वायो स्पर्शस्तथा चेष्टा त्वक्चैव त्रितयं स्मृतम् ॥ ३५ ॥
रूपं चक्षुस्तथा पाकस्त्रिविधं तेज उच्यते।
रस. क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृता ॥ ३६ ॥
घ्रेयं घ्राण शरीरं च एते भूमिगुणास्त्रयः।
महाभूतानि पञ्चैव षष्ठं च मन उच्यते ॥ ३७ ॥

इन्द्रियाणि मनश्चैव विज्ञानान्यस्य भारत।
सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः ॥ ३८ ॥

चक्षुरालोचनायैव संशयं कुरुते मनः।
बुद्धिरध्यवसानाय क्षेत्रज्ञः साक्षिवत् स्थितः ॥ ३९ ॥

ऊर्ध्वं पादतलाभ्यां यदर्वाक्चोर्ध्वं च पश्यति।
एतेन सर्वमेवेदं विद्ध्यभिव्याप्तमन्तरम् ॥ २०४० ॥

पुरुषैरिन्द्रियाणीह वेदितव्यानि कृत्स्नशः।
तमो रजश्च सत्त्वं च तेऽपि भावास्तदाश्रिताः ॥ ४१ ॥

एतां बुद्ध्वा नरा बुद्ध्या भूतानामागतिं गतिम्।
समवेक्ष्य शनैश्चैव लभते शममुत्तमम् ॥ ४२ ॥

गुणैर्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि।
मनःषष्ठानि भूतानि तदभावे कुतो गुणाः ॥ ४३ ॥

इति तन्मयमेवैतत्सर्वं स्थावरजङ्गमम्।
प्रलीयते चोद्भवति तस्मान्निर्दिश्यते तथा ॥ ४४ ॥

येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते।
जिघ्रति घ्राणमित्याहू रसं जानाति जिह्वया ॥ ४५ ॥

त्वचा स्पर्शयते स्पर्शं बुद्धिर्विक्रियते सकृत्।
येन प्रार्थयते किञ्चित्तदा भवति तन्मनः ॥ ४६ ॥

अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा।
इन्द्रियाणीति यान्याहुस्तान्यदृश्योऽधितिष्ठति ॥ ४७ ॥

पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्तते।
कदाचिल्लभते प्रीतिं कदाचिदनुशोचति ॥ ४८ ॥

न सुखेन न दुःखेन कदाचिदपि वर्तते।
एवं नराणां मनसि त्रिषु भावेष्ववस्थिता ॥ ४९ ॥

सेयं भावात्मिका भावांस्त्रीनेतानतिवर्तते।
सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥ २०५० ॥

अतिभावगता बुद्धिर्भावे मनसि वर्तते।
प्रवर्तमानं तु रजस्तद्भावमनुवर्तते ॥ ५१ ॥
इन्द्रियाणि हि सर्वाणि प्रवर्तयति सा तदा।
ततः सत्त्वं तमोभावः प्रीतियोगात्प्रवर्तते ॥ ५२ ॥
प्रीतिः सत्त्वं रजः शोकस्तमो मोहस्तु ते त्रयः।
ये ये च भावा लोकेऽस्मिन् सर्वेष्वेतेषु वै त्रिषु ॥ ५३ ॥
इति बुद्धिगतिः सर्वा व्याख्याता तव भारत ॥ ५४ ॥
इन्द्रियाणि च सर्वाणि विजेतव्यानि धीमता।
सत्त्वं रजस्तमश्चैव प्राणिना संश्रिताः सदा ॥ ५५ ॥
त्रिविधा वेदना चैव सर्वसत्त्वेषु दृश्यते।
सात्त्विकी राजसी चैव तामसी चेति भारत ॥ ५६ ॥
सुखस्पर्शः सत्त्वगुणो दुःखस्पर्शो रजोगुणः।
तमोगुणेन संयुक्तौ भवतो व्यावहारिकौ ॥ ५७ ॥
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत्।
वर्तते सात्त्विको भाव इत्याचक्षीत तत्तथा ॥ ५८ ॥
अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः।
प्रवृत्तं रज इत्येव तन्न संरभ्य चिन्तयेत् ॥ ५९ ॥
अथ यन्मोहसंयुक्तमव्यक्तविषयं भवेत्।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २०६० ॥
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता।
कथञ्चिदभिवर्तन्त इत्येते सात्त्विका गुणाः ॥ ६१ ॥
अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ॥ ६२ ॥
अवमानस्तथा मोहः प्रमादः स्वप्नतन्द्रिता।
कथञ्चिदभिवर्तन्ते विविधास्तामसा गुणाः ॥ ६३ ॥
दूरगं बहुधागामि प्रार्थनासंशयात्मकम्।
मनः सुनियतं यस्य स सुखी प्रेत्य चेह च ॥ ६४ ॥

सत्त्वक्षेत्रज्ञयोरेतदन्तरं पश्य सूक्ष्मयोः ।
सृजते तु गुणानेक एको न सृजते गुणान् ॥ ६५ ॥

मशकोदुम्बरौ वापि संप्रयुक्तौ यथा सदा ।
अन्योन्यमेतौ स्यातां च संप्रयोगस्तथा तयोः ॥ ६६ ॥

पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा ।
यथा मत्स्यौ जले चैव संप्रयुक्तौ तथैव तौ ॥ ६७ ॥

न गुणा विदुरात्मानं स गुणान् वेत्ति सर्वशः ।
परिद्रष्टा गुणानां तु संसृष्टान्मन्यते तथा ॥ ६८ ॥

इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसप्तमैः ।
निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ॥ ६९ ॥

सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः परिपश्यति ।
संप्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः ॥ २०७० ॥

आश्रयो नास्ति सत्त्वस्य क्षेत्रज्ञस्य च कश्चन ।
सत्त्वं मनः संसृजते न गुणान्वै कदाचन ॥ ७१ ॥

रश्मींस्तेषां स मनसा यदा सम्यङ्नियच्छति ।
तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव ॥ ७२ ॥

त्यक्त्वा यः प्राकृतं कर्म नित्यमात्मरतिर्मुनिः ।
सर्वभूतात्मभूस्तस्मात् स गच्छेदुत्तमां गतिम् ॥ ७३ ॥

यथा वारिचरः पक्षी सलिलेन न लिप्यते ।
एवमेव कृतप्रज्ञो भूतेषु परिवर्तते ॥ ७४ ॥

एवंस्वभावमेवैतत्स्वबुद्ध्या विहरेन्नरः ।
अशोचन्नप्रहृष्यंश्च समो विगतमत्सरः ॥ ७५ ॥

स्वभावयुक्त्या युक्तस्तु स नित्यं सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः ॥ ७६ ॥

प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते ।
प्रत्यक्षेण परोक्षं तदनुमानेन सिध्यति ॥ ७७ ॥

एवमेकेऽध्यवस्यन्ति निवृत्तिरिति चापरे।
उभयं संप्रधार्यैतद्व्यवस्येत यथामति ॥ ७८ ॥
इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढम्।
विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ॥ ७९ ॥
मलिनाः प्राप्नुयुः सिद्धिं यथा पूर्णां नदीं नराः।
अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा ॥ २०८० ॥
महानद्या हि पारज्ञस्तप्यते न तदन्यथा।
न तु तप्यति तत्त्वज्ञः फले ज्ञाते तरत्युत ॥ ८१ ॥
एवं ये विदुरध्यात्मं केवलं ज्ञानमुत्तमम्।
एता वुद्ध्वा नरः सर्वां भूतानामागतिं गतिम्।
अवेक्ष्य च शनैर्बुद्ध्या लभते शमनं ततः ॥ ८२ ॥
त्रिवर्गो यस्य विदितः प्रेक्ष्य यश्च विमुञ्चति।
अन्विष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः ॥ ८३ ॥
न चात्मा शक्यते द्रष्टुमिन्द्रियैश्च विभागशः।
तत्र तत्र विसृष्टैश्च दुर्वार्यैश्चाकृतात्मभिः ॥ ८४ ॥
एतद्वुद्ध्वा भवेद्वुद्धः किमन्यद्वुद्धलक्षणम्।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥ ८५ ॥
न भवति विदुषां ततो भयं
यदविदुषां सुमहद्भयं भवेत्।
न हि गतिरधिकास्ति कस्यचित्
सति हि गुणे प्रवदन्त्यतुल्यताम् ॥ ८६ ॥

## बलिवासवसंवादः

(अ.२२३)यया वुद्ध्या महीपालो भ्रष्टश्रीर्विचरेन्महीम्।
युधि०— कालदण्डविनिष्पिष्टस्तन्मे ब्रूहि पितामह ॥ ८७ ॥
भीष्म०—अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
वासवस्य च संवादं वलेर्वैरोचनस्य च ॥ ८८ ॥

पितामहमुपागम्य प्रणिपत्य कृताञ्जलिः।
सर्वानेवासुरान् जित्वा बलिं पप्रच्छ वासवः॥ ८९॥

यस्य स्म ददतो वित्तं न कदाचन हीयते।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम्॥ २०९०॥

ब्रह्मा०- उष्ट्रेषु यदि वा गोषु खरेष्वश्वेषु वा पुनः।
वरिष्ठो भविता जन्तुः शून्यागारे शचीपते॥ ९१॥

शक्र०- यदि स्म बलिना ब्रह्मन् शून्यागारे समेयिवान्।
हन्यामेनं न वा हन्यां तद्ब्रह्मन्ननुशाधि माम्॥ ९२॥

ब्रह्मा०- मा स्म शक्र बलिं हिंसीर्न बलिर्वधमर्हति।
न्यायस्तु शक्र प्रष्टव्यस्त्वया वासव काम्यया॥ ९३॥

एवमुक्तो भगवता महेन्द्रः पृथिवीं तदा।
चचारैरावतस्कन्धमधिरुह्य श्रिया वृतः॥ ९४॥

ततो ददर्श स बलिं खरवेषेण संवृतम्।
यथाऽऽख्यातं भगवता शून्यागारकृतालयम्॥ ९५॥

शक्र०- खरयोनिमनुप्राप्तस्तुषभक्षोऽसि दानव।
इयं ते योनिरधमा शोचस्याहो न शोचसि॥ ९६॥

न ते पश्यामि भृङ्गारं न छत्रं व्यजने न च।
ब्रह्मदत्तां च ते मालां न पश्याम्यसुराधिप॥ ९७॥

बलि०- न त्वं पश्यसि भृङ्गारं न छत्रं व्यजने न च।
ब्रह्मदत्तां च मे मालां न त्वं द्रक्ष्यसि वासव॥ ९८॥

गुहायां निहितानि त्वं मम रत्नानि पृच्छसि।
यदा मे भविता कालस्तदा त्वं तानि द्रक्ष्यसि॥ ९९॥

न त्वेतदनुरूपं ते यशसो वा कुलस्य च।
समृद्धार्थोऽसमृद्धार्थं यन्मां कत्थितुमिच्छसि॥ २१००॥

न हि दुःखेषु शोचन्ते न प्रहृष्यन्ति चर्धिषु।
कृतप्रज्ञा ज्ञानतृप्ताः क्षान्ताः सन्तो मनीषिणः॥ १॥

त्वं तु प्राकृतया बुद्ध्या पुरन्दर विकत्थसे।
यदाऽहमिव भावी स्यास्तदा नैवं वदिष्यसि ॥ २ ॥

(अ.२२४)यत्तद्यानसहस्रेण ज्ञातिभि॰ परिवारितः।
शक्र०- लोकान्प्रतापयन्सर्वान् स्यस्मानवितर्कयन् ॥ ३ ॥

दृष्ट्वा सुकृपणां चेमामवस्थामात्मनो बले।
ज्ञातिमित्रपरित्यक्त शोचस्याहो न शोचसि ॥ ४ ॥

बलि०- अनित्यमुपलक्ष्येह कालपर्यायधर्मतः।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ ५ ॥

भूतानां निधनं निष्ठा स्रोतसामिव सागरः।
नैतत्सम्यग्विजानन्तो नरा मुह्यन्ति वज्रधृक् ॥ ६ ॥

ये त्वेवं नाभिजानन्ति रजोमोहपरायणा॰।
ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्येषां प्रणश्यति ॥ ७ ॥

महाविद्योऽल्पविद्यश्च बलवान् दुर्बलश्च य॰।
दर्शनीयो विरूपश्च सुभगो दुर्भगश्च य॰ ॥ ८ ॥

सर्वं काल॰ समादत्ते गम्भीरः स्वेन तेजसा।
तस्मिन् कालवशं प्राप्ते का व्यथा मे विजानत॰ ॥ ९ ॥

तुषभक्षं तु मां ज्ञात्वा प्रविविक्तजने गृहे।
बिभ्रतं गार्दभं रूपमागत्य परिगर्हसे ॥ २११० ॥

काल॰ सर्वं समादत्ते काल॰ सर्वं प्रयच्छति।
कालेन विहितं सर्वं मा कृथा॰ शक्र पौरुषम् ॥ ११ ॥

कौमारमेव ते चित्तं तथैवाद्य यथा पुरा।
समवेक्षस्व मघवन्बुद्धिं विन्दस्व नैष्ठिकीम् ॥ १२ ॥

नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम्।
यत्त्वमेवङ्गतो वज्रिन् यच्चाप्येवङ्गता वयम् ॥ १३ ॥

नाहं कर्ता न चैव त्वं नान्य कर्ता शचीपते।
पर्यायेण हि भुज्यन्ते लोकाः शक्र यदृच्छया ॥ १४ ॥

बहूनीन्द्रसहस्राणि समतीतानि वासव ।
बलवीर्योपपन्नानि यथैव त्वं शचीपते ॥ १५ ॥
त्वामप्यतिबलं शक्र देवराजं बलोत्कटम् ।
प्राप्ते काले महावीर्यः कालः संशमयिष्यति ॥ १६ ॥
यामेतां प्राप्य जानीषे राज्यश्रियमनुत्तमाम् ।
स्थिता मयीति तन्मिथ्या नैषा ह्येकत्र तिष्ठति ॥ १७ ॥
स्थिता हीन्द्रसहस्रेषु त्वद्विशिष्टतमेष्वियम् ।
मां च लोला परित्यज्य त्वामगाद्विबुधाधिप ॥ १८ ॥
मैवं शक्र पुनः कार्षीः शान्तो भवितुमर्हसि ।
त्वामप्येवंविधं ज्ञात्वा क्षिप्रमन्यं गमिष्यति ॥ १९ ॥

(अ.२२५) पुनर्देवासुरं युद्धं भावि जेताऽस्मि वस्तदा ॥ २१२० ॥

शक्र०- ब्रह्मणाऽस्मि समादिष्टो न हन्तव्यो भवानिति ।
तेन तेऽहं बले वज्रं न विमुञ्चामि मूर्धनि ।
यथेष्टं गच्छ दैत्येन्द्र स्वस्ति तेऽस्तु महासुर ॥ २१ ॥
एवमुक्तस्तु दैत्येन्द्रो बलिरिन्द्रेण भारत ।
जगाम दक्षिणामाशामुदीचीं तु पुरन्दरः ॥ २२ ॥

## धर्मलक्षणम् , तुलाधारजाजलिसंवादः

(अ.२५९) धर्मस्त्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत् ।
युधि०- उभयार्थो हि वा धर्मस्तन्मे ब्रूहि पितामह ॥ २३ ॥
भीष्म०- सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ।
चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणम् ॥ २४ ॥
अपि ह्युक्तानि धर्म्याणि व्यवस्यन्त्युत्तरावरे ॥ २५ ॥
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ।
उभयत्र सुखोदर्क इह चैव परत्र च ॥ २६ ॥
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ २७ ॥

योऽन्यस्य स्यादुपपति· स कं किं वक्तुमर्हति।
यदन्यस्य ततः कुर्यान्न मृष्येदिति मे मति· ॥ २८ ॥
जीवितुं यः स्वयं चेच्छेत्कथं सोऽन्यं प्रघातयेत्।
यद्यदात्मनि चेच्छेत तत्परस्यापि चिन्तयेत् ॥ २९ ॥
अतिरिक्तैः संविभजेद्भोगैरन्यानकिञ्चनान्।
एतस्मात्कारणाद्धात्रा कुसीदं संप्रवर्तितम् ॥ २१३० ॥
यस्मिंस्तु देवा· समये सन्तिष्ठेरंस्तथा भवेत्।
अथवा लाभसमये स्थितिर्धर्मेऽपि शोभना ॥ ३१ ॥
सर्वं प्रियाभ्युपगतं धर्ममाहुर्मनीषिणः।
पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥ ३२ ॥
लोकसङ्ग्रहसंयुक्तं विधात्रा विहितं पुरा।
सूक्ष्मधर्मार्थनियत सता चरितमुत्तमम् ॥ ३३ ॥
(अ २६०)इमानि हि प्राणयन्ति सृजन्त्युत्तारयन्ति च।
युधि०- न धर्म· परिपाठेन शक्यो भारत वेदितुम् ॥ ३४ ॥
अन्यो धर्मः समस्थस्य विषमस्थस्य चापर·।
आपदस्तु कथं शक्या परिपाठेन वेदितुम् ॥ ३५ ॥
सदाचारो मतो धर्म· सन्तस्त्वाचारलक्षणा·।
साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणः ॥ ३६ ॥
अन्ये कृतयुगे धर्मास्त्रेताया द्वापरे परे।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ॥ ३७ ॥
निपानानीव गोभ्योऽपि क्षेत्रे कुल्ये च भारत।
स्मृतिर्हि शाश्वतो धर्मो विप्रहीणो न दृश्यते ॥ ३८ ॥
न हि सर्वहितः कश्चिदाचारः संप्रवर्तते।
आचाराणामनैकाग्र्य सर्वेषामुपलक्षयेत् ॥ ३९ ॥
चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः।
तेनाचारेण पूर्वेण संस्था भवति शाश्वती ॥ २१४० ॥

(अ २६१)अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भीष्म०–तुलाधारस्य वाक्यानि धर्मे जाजलिना सह ॥ ४१ ॥
वने वनचरः कश्चिज्जाजलिर्नाम वै द्विजः ।
सागरोद्देशमागम्य तपस्तेपे महातपाः ॥ ४२ ॥
स कदाचिन्महातेजा जलवासो महीपते ।
चचार लोकान् विप्रर्षिः प्रेक्षमाणो मनोजवः ॥ ४३ ॥
स चिन्तयामास मुनिर्जलवासे कदाचन ।
न मया सदृशोऽस्तीह लोके स्थावरजङ्गमे ।
अप्सु वैहायसं गच्छेन्मया योऽन्यः सहेति वै ॥ ४४ ॥
अदृश्यमानो रक्षोभिर्जलमध्ये वदंस्तथा ।
अब्रुवंश्च पिशाचास्तं नैवं त्वं वक्तुमर्हसि ॥ ४५ ॥
तुलाधारो वणिग्धर्मा वाराणस्यां महायशाः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं द्विजसत्तम ॥ ४६ ॥
ततः कदाचित् स मुनिर्वर्षास्वाकाशमास्थितः ।
अन्तरिक्षाज्जलं मूर्ध्ना प्रत्यगृह्णान्मुहुर्मुहुः ।
अथ तस्य जटाः क्लिन्ना बभूवुर्ग्रथिताः प्रभो ॥ ४७ ॥
स कदाचिन्निराहारो वायुभक्षो महातपाः ।
तस्थौ काष्ठवदव्यग्रो न चचाल च कर्हिचित् ॥ ४८ ॥
तस्य स्म स्थाणुभूतस्य निर्विचेष्टस्य भारत ।
कुलिङ्गशकुनौ राजन् नीडं शिरसि चक्रतुः ॥ ४९ ॥
अतीतास्वथ वर्षासु शरत्काल उपस्थिते ।
प्राजापत्येन विधिना विश्वासात् काममोहितौ ।
तत्रापातयतां राजन् शिरस्यण्डानि खेचरौ ॥ २१५० ॥
जातपक्षांश्च सोऽपश्यदुड्डीनान् पुनरागतान् ।
सायं सायं द्विजान् विप्रो न चाकम्पत जाजलिः ॥ ५१ ॥
कदाचिन्मासमात्रेण समुत्पत्य विहङ्गमाः ।
नैवागच्छंस्ततो राजन् प्रातिष्ठत स जाजलिः ॥ ५२ ॥

ततस्तेषु प्रलीनेषु जाजलिर्जातविस्मयः।
सिद्धोऽस्मीति मतिं चक्रे ततस्तं मान आविशत् ॥ ५३ ॥

सम्भाव्य चटकान् मूर्ध्नि जाजलिर्जपतां वरः।
आस्फोटयत्तथाऽऽकाशे धर्मः प्राप्तो मयेति वै ॥ ५४ ॥

अथान्तरिक्षे वागासीत्तां च शुश्राव जाजलिः।
धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ॥ ५५ ॥

वाराणस्यां महाप्राज्ञस्तुलाधारः प्रतिष्ठितः।
सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ॥ ५६ ॥

सोऽमर्षवशमापन्नस्तुलाधारदिदृक्षया।
पृथिवीमचरद्राजन् यत्रसायङ्गृहो मुनिः ॥ ५७ ॥

कालेन महताऽगच्छत्स तु वाराणसीं पुरीम्।
विक्रीणन्तं च पण्यानि तुलाधारं ददर्श सः ॥ ५८ ॥

सोऽपि दृष्ट्वैव तं विप्रमायान्तं भाण्डजीवनः।
समुत्थाय सुसंहृष्टः स्वागतेनाभ्यपूजयत् ॥ ५९ ॥

तुला०– आयानेवासि विदितो मम ब्रह्मन्न संशयः।
ब्रवीमि यत्तु वचनं तच्छृणुष्व द्विजोत्तम ॥ २१६० ॥

सागरानूपमाश्रित्य तपस्तप्तं त्वया महत्।
न च धर्मस्य संज्ञां त्वं पुरा वेत्थ कथञ्चन ॥ ६१ ॥

ततः सिद्धस्य तपसा तव विप्र शकुन्तकाः।
क्षिप्रं शिरस्यजायन्त ते च संभावितास्त्वया ॥ ६२ ॥

जातपक्षा यदा ते च गताश्चारीमितस्ततः।
मन्यमानस्ततो धर्मं चटकप्रभवं द्विज।
खे वाचं त्वमथाश्रौषोर्मां प्रति द्विजसत्तम ॥ ६३ ॥

अमर्षवशमापन्नस्ततः प्राप्तो भवानिह।
करवाणि प्रियं किं ते तद्ब्रूहि द्विजसत्तम ॥ ६४ ॥

(अ.२६२) विक्रीणतः सर्वरसान् सर्वगन्धांश्च वाणिज ।
जाज०- वनस्पतीनोषधीश्च तेषां मूलफलानि च ॥ ६५ ॥
अध्यगा नैष्ठिकीं बुद्धिं कुतस्त्वामिदमागतम् ।
एतदाचक्ष्व मे सर्वं निखिलेन महामते ॥ ६६ ॥
तुला०- वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।
सर्वभूतहितं मैत्रं पुराणं य जना विदु. ॥ ६७ ॥
अद्रोहेणैव भूतानामल्पद्रोहेण वा पुन. ।
या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥ ६८ ॥
सर्वेषां यः सुहृन्नित्यं सर्वेषा च हिते रत. ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ ६९ ॥
नानुरुद्ध्ये विरुद्ध्ये वा न द्वेष्मि न च कामये ।
समोहं सर्वभूतेषु पश्य मे जाजले व्रतम् ॥ २१७० ॥
तुला मे सर्वभूतेषु समा तिष्ठति जाजले ।
नाहं परेषां कृत्यानि प्रशंसामि न गर्हये ।
आकाशस्येव विप्रेन्द्र पश्यन्लोकस्य चित्रताम् ॥ ७१ ॥
यथान्धबधिरोन्मत्ता उच्छ्वासपरमा. सदा ।
देवैरपिहितद्वाराः सोपमा पश्यतो मम ॥ ७२ ॥
यथा वृद्धातुरकृशा निस्पृहा विषयान्प्रति ।
तथार्थकामभोगेषु ममापि विगता स्पृहा ॥ ७३ ॥
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ७४ ॥
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ७५ ॥
यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।
अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम् ॥ ७६ ॥
यस्मादुद्विजते लोक. सर्पाद्वेश्मगतादिव ।
न स धर्ममवाप्नोति इहलोके परत्र च ॥ ७७ ॥

अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले।
भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ॥ ७८ ॥

सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः।
कारणाद्धर्ममन्विच्छेन्न लोकचरितं चरेत् ॥ ७९ ॥

यो हन्याद्यश्च मां स्तौति तत्रापि शृणु जाजले।
समौ तावपि मे स्यातां न हि मेऽस्ति प्रियाप्रियम् ॥२१८०॥

एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः ॥ ८१ ॥
उपपत्त्या हि सम्पन्नो यतिभिश्चैव सेव्यते।
सततं धर्मशीलैश्च निपुणेनोपलक्षित. ॥ ८२ ॥

(अ २६४) सद्भिर्वा यदि वाऽसद्भि पन्थानमिममास्थितम्।
प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि तद्यथा ॥ ८३ ॥

एते शकुन्ता बहवः समन्ताद्विचरन्ति ह।
आह्वयैनान् महाब्रह्मन् विशमानांस्ततस्ततः ॥ ८४ ॥

ततो जाजलिना तेन समाहूताः पतत्रिणः।
वाचमुच्चारयन्ति स्म धर्मस्य वचनात्किल ॥ ८५ ॥

अहिंसादि कृतं कर्म इह चैव परत्र च।
श्रद्धां निहन्ति वै ब्रह्मन् सा हता हन्ति तं नरम् ॥ ८६ ॥

अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी।
जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥ ८७ ॥

इति धर्मः समाख्यातः सद्भिर्धर्मार्थदर्शिभिः।
वयं जिज्ञासमानास्तु सम्प्राप्ता धर्मदर्शनात् ॥ ८८ ॥
श्रद्धां कुरु महाप्राज्ञ ततः प्राप्स्यमि यत्परम् ॥ ८९ ॥
श्रद्धावान् श्रद्दधानश्च धर्मश्चैव हि जाजले।
स्ववर्त्मनि स्थितश्चैव गरीयानेव जाजले ॥ २१९० ॥

ततोऽचिरेण कालेन तुलाधारः स एव च।
दिवं गत्वा महाप्राज्ञौ विहरेतां यथासुखम् ॥ ९१ ॥

## चिरकारिकोपाख्यानम्

(अ.२६६) कथं कार्यं परीक्षेत शीघ्रं वाऽथ चिरेण वा ।
युधि०- सर्वथा कार्यदुर्गेऽस्मिन् भवान्नः परमो गुरुः ॥ ९२ ॥

भीष्म०- अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चिरकारेस्तु यत्पूर्वं वृत्तमाङ्गिरसे कुले ॥ ९३ ॥

चिरं स चिन्तयत्यर्थांश्चिरं जाग्रच्चिरं स्वपन् ।
चिरं कार्याभिपत्तिं च चिरकारी तथोच्यते ॥ ९४ ॥

अलसग्रहणं प्राप्तो दुर्मेधावी तथोच्यते ।
बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ॥ ९५ ॥

व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्यापरान् सुतान् ।
पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ॥ ९६ ॥

इत्युक्त्वा स तदा विप्रो गौतमो जपतां वर ।
अविमृश्य महाभागो वनमेव जगाम सः ॥ ९७ ॥

स तथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः ।
विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरम् ॥ ९८ ॥

पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम् ।
कथं धर्मच्छलेनास्मिन्निमज्जेयमसाधुवत् ॥ ९९ ॥

पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम् ।
अस्वतन्त्रं च पुत्रत्वं किं तु मां नानुपीडयेत् ॥ २२०० ॥

स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत् ।
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ॥ १ ॥

पिता धर्मः पिता स्वर्गः पिता हि परमं तपः ।
पितरि प्रीतिमापन्ने सर्वाः प्रीयन्ति देवताः ॥ २ ॥

यो ह्ययं मयि सङ्घातो मर्त्यत्वे पाञ्चभौतिकः ।
अस्य मे जननी हेतुः पावकस्य यथाऽरणिः ॥ ३ ॥

माता देहारणिः पुंसा सर्वस्यार्तस्य निर्वृतिः।
मातृलाभे सनाथत्वमनाथत्वं विपर्यये ॥ ४ ॥

पुत्रपौत्रोपपन्नोऽपि जननीं यः समाश्रितः।
अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् ॥ ५ ॥

समर्थं वाऽसमर्थं वा कृशं वाप्यकृशं तथा।
रक्षत्येव सुतं माता नान्यः पोष्टा विधानत. ॥ ६ ॥

तदा स वृद्धो भवति तदा भवति दु.खितः।
तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते ॥ ७ ॥

नास्ति मातृसमा छाया नास्ति मातृसमा गतिः।
नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया ॥ ८ ॥

देवताना समावायमेकस्थं पितरं विदुः।
मर्त्यांना देवतानां च स्नेहादभ्येति मातरम् ॥ ९ ॥

एवं विमृशतस्तस्य चिरकारितया बहु।
दीर्घः कालो व्यतिक्रान्तस्ततोऽस्याभ्यागमत्पिता ॥ २२१० ॥

मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थित.।
विमृश्य तेन कालेन पत्न्या. संस्थाव्यतिक्रमम् ॥ ११ ॥

सोऽब्रवीद्भृशसन्तप्तो दु.खेनाश्रूणि वर्तयन्।
श्रुतधैर्यप्रसादेन पश्चात्तापमुपागत. ॥ १२ ॥

आश्रमं मम संप्राप्तस्त्रिलोकेशः पुरन्दरः।
अतिथिव्रतमास्थाय ब्राह्मणं रूपमास्थितः।
अत्र चाकुशले जाते स्त्रिया नास्ति व्यतिक्रमः ॥ १३ ॥

एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः।
अपराध्यति धर्मस्य प्रमादस्त्वपराध्यति ॥ १४ ॥

ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्ध्वरेतसः।
ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे ॥ १५ ॥

हन्त्वा साध्वीं च नारी च व्यसनित्वाच्च वासिताम्।
भर्तव्यत्वेन भार्या च को नु मां तारयिष्यति ॥ १६ ॥
अन्तरेण मयाऽऽज्ञप्तश्चिरकारीत्युदारधी·।
यद्यद्य चिरकारी स्यात्स मां त्रायेत पातकात् ॥ १७ ॥
एवं स दुःखितो राजन् महर्षिर्गौतमस्तदा।
चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके ॥ १८ ॥
गौतमस्तं ततो दृष्ट्वा शिरसा पतितं भुवि।
पत्नीं चैव निराकारां परामभ्यागमन्मुदम् ॥ १९ ॥
न हि सा तेन सम्भेदं पत्नी नीता महात्मना।
विजने चाश्रमस्थेन पुत्रश्चापि समाहित ॥ २२२० ॥
तत· पित्रा चिरं स्तुत्वा चिरं चाघ्राय मूर्धनि।
चिरं दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृत· ॥ २१ ॥
एवं स गौतमः पुत्रं प्रीतिहर्षगुणैर्युतः।
अभिनन्द्य महाप्राज्ञ इदं वचनमब्रवीत् ॥ २२ ॥
चिरकारिक भद्रं ते चिरकारी चिरं भव।
चिराय यदि ते सौम्य चिरमस्मि न दुःखितः ॥ २३ ॥
गाथाश्चाप्यब्रवीद्विद्वान् गौतमो मुनिसत्तमः।
चिरकारिषु धीरेषु गुणोद्देशासमाश्रयाः ॥ २४ ॥
रागे दर्पे च माने च द्रोहे पापे च कर्मणि।
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ २५ ॥
बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ २६ ॥
एवं स गौतमस्तत्र प्रीतः पुत्रस्य भारत।
कर्मणा तेन कौरव्य चिरकारितया तथा ॥ २७ ॥
एवं सर्वेषु कार्येषु विमृश्य पुरुषस्ततः।
चिरेण निश्चयं कृत्वा चिरं न परितप्यते ॥ २८ ॥

## मोक्षोपायः, माण्डव्यजनकसंवादः

(अ २७३) कथं भवति पापात्मा कथं धर्मं करोति वा ।
युधि०- केन निर्वेदमादत्ते मोक्षं वा केन गच्छति ॥ २९ ॥
भीष्म०- विज्ञानार्थं हि पञ्चानामिच्छा पूर्वं प्रवर्तते ।
प्राप्यैकं जायते कामो द्वेषो वा भरतर्षभ ॥ २२३० ॥
ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासं च चिकीर्षति ॥ ३१ ॥
ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ३२ ॥
लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च
व्याजेन चरते धर्ममर्थं व्याजेन रोचते ॥ ३३ ॥
व्याजेन सिद्ध्यमानेषु धनेषु कुरुनन्दन ।
तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति ॥ ३४ ॥
सुहृद्भिर्वार्यमाणोऽपि पण्डितैश्चापि भारत ।
उत्तरं न्यायसंबद्धं ब्रवीति विधिचोदितम् ॥ ३५ ॥
अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ।
पापं चिन्तयते चैव प्रब्रवीति करोति च ॥ ३६ ॥
तस्याधर्मप्रवृत्तस्य दोषान्पश्यन्ति साधवः ।
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ॥ ३७ ॥
स नेह सुखमाप्नोति कुत एव परत्र वै ।
एवं भवति पापात्मा धर्मात्मानं तु मे शृणु ॥ ३८ ॥
य एतान् प्रज्ञया दोषान् पूर्वमेवानुपश्यति ।
कुशलः सुखदुःखानां साधूंश्चाप्यथ सेवते ॥ ३९ ॥
तस्य साधुसमाचारादभ्यासाच्चैव वर्धते ।
प्रज्ञा धर्मे च रमते धर्मं चैवोपजीवति ॥ २२४० ॥

सोऽथ धर्मादवाप्तेषु धनेषु कुरुते मनः।
तस्यैव सिञ्चते मूलं गुणान् पश्यति यत्र वै ॥ ४१ ॥
धर्मात्मा भवति ह्येव मित्रं च लभते शुभम् ॥ ४२ ॥
स तु धर्मफलं लब्ध्वा न हृष्यति युधिष्ठिर।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥ ४३ ॥
प्रज्ञाचक्षुर्यदा कामे रसे गन्धे न रज्यते।
ततो मोक्षाय यतते नानुपायादुपायतः ॥ ४४ ॥
शनैर्निर्वेदमादत्ते पापं कर्म जहाति च।
धर्मात्मा चैव भवति मोक्षं च लभते परम् ॥ ४५ ॥
तस्माद्धर्मे प्रवर्तेथाः सर्वावस्थं युधिष्ठिर।
धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ॥ ४६ ॥
(अ.२७४) मोक्ष॰ पितामहेनोक्त उपायान्नानुपायतः।
युधि॰— तमुपायं यथान्यायं श्रोतुमिच्छामि भारत ॥ ४७ ॥
भीष्म॰— करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सा मता।
एवं धर्माभ्युपायेषु नान्यद्धर्मेषु कारणम् ॥ ४८ ॥
पूर्वे समुद्रे यः पन्थाः स न गच्छति पश्चिमम्।
एकः पन्था हि मोक्षस्य तन्मे विस्तरतः शृणु ॥ ४९ ॥
क्षमया क्रोधमुच्छिन्द्यात्कामं सङ्कल्पवर्जनात्।
सत्त्वसंसेवनाद्धीरो निद्रां च च्छेत्तुमर्हति ॥ २२५० ॥
अप्रमादाद्भयं रक्षेच्छ्वासं क्षेत्रज्ञशीलनात्।
इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥ ५१ ॥
भ्रमं संमोहमावर्तमभ्यासाद्विनिवर्तयेत्।
निद्रां च प्रतिभां चैव ज्ञानाभ्यासेन तत्त्ववित् ॥ ५२ ॥
उपद्रवांस्तथा रोगान् हितजीर्णमिताशनात्।
लोभं मोहं च सन्तोषाद्विषयांस्तत्त्वदर्शनात् ॥ ५३ ॥
अनुक्रोशादधर्मं च जयेद्धर्ममवेक्षया।
आयत्या च जयेदाशामर्थं सङ्गविवर्जनात् ॥ ५४ ॥

अनित्यत्वेन च स्नेहं क्षुधां योगेन पण्डितः।
कारुण्येनात्मनो मानं तृष्णां च परितोषतः॥ ५५॥

उत्थानेन जयेत्तन्द्रीं वितर्कं निश्चयाज्जयेत्।
मौनेन बहुभाष्यं च शौर्येण च भयं त्यजेत्॥ ५६॥

यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा।
ज्ञानमात्मावबोधेन यच्छेदात्मानमात्मना॥ ५७॥

तदेतदुपशान्तेन बोद्धव्यं शुचिकर्मणा।
योगदोषान् समुच्छिद्य पञ्च यान् कवयो विदुः॥ ५८॥

कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम्।
परित्यज्य निषेवेत यतवाग्योगसाधनान्॥ ५९॥

ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा।
शौचमाहारतः शुद्धिरिन्द्रियाणां च संयमः॥ २२६०॥

एतैर्विवर्धते तेजः पाप्मानमुपहन्ति च।
सिद्ध्यन्ति चास्य सङ्कल्पा विज्ञानं च प्रवर्तते॥ ६१॥

धूतपापः स तेजस्वी लघ्वाहारो जितेन्द्रियः।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम्॥ ६२॥

(अ २७६) येयमर्थोद्भवा तृष्णा कथमेतां पितामह।
युधि०— निवर्तयेयं पापानि तृष्णया कारिता वयम्॥ ६३॥

भीष्म०— अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
गीतं विदेहराजेन माण्डव्यायानुपृच्छते॥ ६४॥

सुसुखं बत जीवामि यस्य मे नास्ति किञ्चन।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन॥ ६५॥

अर्थाः खलु समृद्धा हि बाढं दुःखं विजानताम्।
असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान्॥ ६६॥

यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते।
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते॥ ६७॥

न जातु कामः कामानामुपभोगेन शाम्यति ।*
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ६८ ॥

किञ्चिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापाय नाशे संपद्यते पुनः ॥ ६९ ॥

न कामाननुरुद्ध्येत दुःखं कामेषु वै रतिः ।
प्राप्यार्थमुपयुञ्जीत धर्मं कामान् विसर्जयेत् ॥ २२७० ॥

विद्वान् सर्वेषु भूतेषु आत्मना सोपमो भवेत् ।
कृतकृत्यो विशुद्धात्मा सर्वं त्यजति चैव ह ॥ ७१ ॥

उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये ।
भयाभयं च सन्त्यज्य स प्रशान्तो निरामयः ॥ ७२ ॥

राज्ञस्तद्वचनं श्रुत्वा प्रीतिमानभवद्द्विजः ।
पूजयित्वा च तद्वाक्यं माण्डव्यो मोक्षमाश्रितः ॥ ७३ ॥

## पितापुत्रसंवादः

(अ.२७७) अतिक्रामति कालेऽस्मिन् सर्वभूतभयावहे ।
युधि०– किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ॥ ७४ ॥

भीष्म०– अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रेण संवादं तं निबोध युधिष्ठिर ॥ ७५ ॥

द्विजातेः कस्यचित्पार्थ स्वाध्यायनिरतस्य वै ।
पुत्रो बभूव मेधावी मेधावी नाम नामतः ॥ ७६ ॥

सोऽब्रवीत्पितरं पुत्रः स्वाध्यायकरणे रतम् ।
मोक्षधर्मेष्वकुशलं मोक्षधर्मविचक्षणः ॥ ७७ ॥

पुत्र०– धीरः किंस्वित्तात कुर्यात्प्रजानन्
क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम् ।
पितस्तथाऽऽख्याहि यथार्थयोगं
ममानुपूर्व्या येन धर्मं चरेयम् ॥ ७८ ॥

---

*आदिपर्वणि ८५ तमेऽध्याये विद्यमानोऽयं श्लोकस्तत्र विस्मृतोऽत्र गृहीत ।

पिता०- अधीत्य वेदान् ब्रह्मचर्येषु पुत्र
पुत्रानिच्छेत्पावनार्थं पितृणाम्।
अग्नीनाधाय विधिवच्चेष्टयज्ञो
वनं प्रविश्याथ मुनिर्बुभूषेत् ॥ ७९ ॥

पुत्र०- मृत्युनाऽभ्याहतो लोको जरया परिवारित ।
अहोरात्राः पतन्तीमे तच्च कस्मान्न बुध्यसे ॥ २२८० ॥
यदाहमेव जानामि न मृत्युस्तिष्ठतीति ह।
सोऽहं कथं प्रतीक्षिष्ये ज्ञानेनापिहितश्चरन् ॥ ८१ ॥
रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा।
गाधोदके मत्स्य इव सुख विन्देत कस्तदा ॥ ८२ ॥
पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम्।
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ॥ ८३ ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् ॥ ८४ ॥
अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगान्महान्।
को हि जानाति कस्याद्य मृत्युकालो भविष्यति ॥ ८५ ॥
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति।
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम्।
कृते धर्मे भवेत्प्रीतिरिह प्रेत्य च शाश्वती ॥ ८६ ॥
मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः।
कृत्वा कार्यमकार्यं वा तुष्टिमेषां प्रयच्छति ॥ ८७ ॥
तं पुत्रपशुसंपन्नं व्यासक्तमनसं नरम्।
सुप्त व्याघ्रं महौघो वा मृत्युरादाय गच्छति ॥ ८८ ॥
सञ्चिन्वानकमेवैनं कामानामवितृप्तकम्।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ ८९ ॥
मृत्युर्जरा च व्याधिश्च दुःखं चानेककारणम्।
असन्त्याज्यं यदा मर्त्यैः किं स्वस्थ इव तिष्ठसि ॥ २२९० ॥

जातमेवान्तकोऽन्ताय जरा चाभ्येति देहिनम् ।
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ॥ ९१ ॥

न मृत्युसेनामायान्तीं जातु कश्चित्प्रबाधते ।
बलात्सत्यमृते त्वेकं सत्ये ह्यमृतमाश्रितम् ॥ ९२ ॥

तस्मात्सत्यव्रताचारः सत्यव्रतपरायणः ।
सत्यकामः समो दान्तः सत्येनैवान्तकं जयेत् ॥ ९३ ॥

अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ।
मृत्युरापद्यते मोहात्सत्येनापद्यतेऽमृतम् ॥ ९४ ॥

सोऽहं सत्यमहिंसार्थी कामक्रोधबहिष्कृतः ।
समाश्रित्य सुखं क्षेमी मृत्युं हास्याम्यमृत्युवत् ॥ ९५ ॥

आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजः पितः ।
आत्मयज्ञो भविष्यामि न मां तारयति प्रजा ॥ ९६ ॥

यस्य वाङ्मनसी स्यातां सम्यक् प्रणिहिते सदा ।
तपस्त्यागश्च योगश्च स तैः सर्वमवाप्नुयात् ॥ ९७ ॥

नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं फलम् ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ९८ ॥

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीले स्थितिर्दण्डविधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः ॥ ९९ ॥

किं ते धनैर्बान्धवैर्वापि किं ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥ २३०० ॥

भीष्म०– पुत्रस्यैतद्वचः श्रुत्वा तथाऽकार्षीत्पिता नृप ।
तथा त्वमपि वर्तस्व सत्यधर्मपरायणः ॥ १ ॥

## पराशरगीता

(अ १९०)अन. परं महाबाहो यच्छ्रेयस्तद्ब्रवीहि मे ।
युधि०- न तृप्याम्यमृतस्येव वचसस्ते पितामह ॥ २ ॥
अत्र ते वर्तयिष्यामि यथापूर्वं महायशाः ।
भीष्म०- पराशरं महात्मानं पप्रच्छ जनको नृपः ॥ ३ ॥
किं श्रेयः सर्वभूतानामस्मिँल्लोके परत्र च ।
यद्भवेत्प्रतिपत्तव्यं तद्भवान्प्रब्रवीतु मे ॥ ४ ॥
ततः स तपसा युक्त. सर्वधर्मविधानवित् ।
नृपायानुग्रहमना मुनिर्वाक्यमथाब्रवीत् ॥ ५ ॥
परा०- धर्म एव कृत. श्रेयानिह लोके परत्र च ।
तस्माद्धि परमं नास्ति यथा प्राहुर्मनीषिण. ।
प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते ॥ ६ ॥
धर्मात्मक. कर्मविधिर्देहिनां नृपसत्तम ।
तस्मिन्नाश्रमिणः सन्तः स्वकर्माणीह कुर्वते ॥ ७ ॥
चतुर्विधा हि लोकेऽस्मिन्यात्रा तात विधीयते ।
मर्त्या यत्रावतिष्ठन्ते सा च कामात्प्रवर्तते ॥ ८ ॥
सुकृतासुकृत कर्म निषेव्य विविधै. क्रमै ।
दशार्धप्रविभक्तानां भूतानां बहुधा गति. ॥ ९ ॥
सौवर्णं राजतं चापि यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तु. पूर्वकर्मवशानुगः ॥ २३१० ॥
नाबीजाज्जायते किञ्चिन्नाकृत्वा सुखमेधते ।
सुकृतैर्विन्दते सौख्यं प्राप्य देहक्षय नर. ॥ ११ ॥
दैवं तात न पश्यामि नास्ति दैवस्य साधनम् ।
स्वभावतो हि संसिद्धा देवगन्धर्वदानवा. ॥ १२ ॥
प्रेत्य यान्त्यकृतं कर्म न स्मरन्ति सदा जना. ।
ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्विधम् ॥ १३ ॥

लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः।
शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनम्॥ १४॥

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम्।
कुरुते यादृशं कर्म तादृशं प्रतिपद्यते॥ १५॥

निरन्तरं च मिश्रं च लभते कर्म पार्थिव।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते॥ १६॥

कदाचित्सुकृतं तात कूटस्थमिव तिष्ठति।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते॥ १७॥

ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते।
सुकृतक्षयाच्च दुष्कृतं तद्विद्धि मनुजाधिप॥ १८॥

दमः क्षमा धृतिस्तेजः सन्तोषः सत्यवादिता।
ह्रीरहिंसाऽव्यसनिता दाक्ष्यं चेति सुखावहाः॥ १९॥

दुष्कृते सुकृते चापि न जन्तुर्नियतो भवेत्।
नित्यं मनःसमाधाने प्रयतेत विचक्षणः॥ २३२०॥

नायं परस्य सुकृतं दुष्कृतं चापि सेवते।
करोति यादृशं कर्म तादृशं प्रतिपद्यते॥ २१॥

सुखदुःखे समाधाय पुमानन्येन गच्छति।
अन्येनैव जनः सर्वः सङ्गतो यश्च पार्थिवः॥ २२॥

परेषां यदसूयेत न तत्कुर्यात्स्वयं नरः।
यो ह्यसूयुस्तथायुक्तः सोऽवहासं नियच्छति॥ २३॥

भीरू राजन्यो ब्राह्मणः सर्वभक्ष्यो
वैश्योऽनीहावान्हीनवर्णोऽलसश्च।
विद्वांश्चाशीलो वृत्तहीनः कुलीनः
सत्याद्विभ्रष्टो ब्राह्मणस्त्री च दुष्टा॥ २४॥

रागी युक्तः पचमानोऽऽत्महेतो-
र्मूर्खो वक्ता नृपहीनं च राष्ट्रम्।

एते सर्वे शोच्यतां यान्ति राजन्
यश्चायुक्तः स्नेहहीनः प्रजासु ॥ २५ ॥
(अ २९१) मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः ।
रश्मिभिर्ज्ञानसंभूतैर्यो गच्छति स बुद्धिमान् ॥ २६ ॥
आयुर्नसुलभं लब्ध्वा नावकर्षेद्विशां पते ।
उत्कर्षार्थं प्रयतेत नरः पुण्येन कर्मणा ॥ २७ ॥
वर्णेभ्यो हि परिभ्रष्टो न वै संमानमर्हति ।
न तु यः सत्क्रियां प्राप्य राजसं कर्म सेवते ॥ २८ ॥
वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा ।
दुर्लभं तमलब्धा हि हन्यात्पापेन कर्मणा ॥ २९ ॥
अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्णुदेत् ।
पापं हि कर्म फलति पापमेव स्वयं कृतम् ।
तस्मात्पापं न सेवेत कर्म दुःखफलोदयम् ॥ २३३० ॥
पापानुबन्धं यत्कर्म यद्यपि स्यान्महाफलम् ।
तन्न सेवेत मेधावी शुचिः कुशलिनं यथा ॥ ३१ ॥
अज्ञानात्तु कृता हिंसामहिंसा व्यपकर्षति ।
ब्राह्मणाः शास्त्रनिर्देशादित्याहुर्ब्रह्मवादिनः ॥ ३२ ॥
तथा कामकृतं नास्य विहिंसैवानुकर्षति ।
इत्याहुर्ब्रह्मशास्त्रज्ञा ब्राह्मणा ब्रह्मवादिनः ॥ ३३ ॥
अहं तु तावत्पश्यामि कर्म यद्वर्तते कृतम् ।
गुणयुक्त प्रकाशं वा पापेनानुपसंहितम् ॥ ३४ ॥
यथा सूक्ष्माणि कर्माणि फलन्तीह यथातथम् ।
बुद्धियुक्तानि तानीह कृतानि मनसा सह ॥ ३५ ॥
भवत्यल्पफलं कर्म सेवितं नित्यमुल्बणम् ।
अबुद्धिपूर्वं धर्मज्ञ कृतमुग्रेण कर्मणा ॥ ३६ ॥
कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।
न चरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥ ३७ ॥

सञ्चिन्त्य मनसा राजन् विदित्वा शक्यमात्मनः।
करोति यः शुभं कर्म स वै भद्राणि पश्यति ॥ ३८ ॥

(अ.२९२) कः कस्य चोपकुरुते कश्च कस्मै प्रयच्छति।
प्राणी करोत्ययं कर्म सर्वमात्मार्थमात्मना ॥ ३९ ॥

गौरवेण परित्यक्तं निःस्नेहं परिवर्जयेत्।
सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ २३४० ॥

न्यायागतं धनं चैव न्यायेनैव विवर्धितम्।
संरक्ष्य यत्नमास्थाय धर्मार्थमिति निश्चयः ॥ ४१ ॥

न धर्मार्थी नृशंसेन कर्मणा धनमर्जयेत्।
शक्तितः सर्वकार्याणि कुर्यान्नर्द्धिमनुस्मरेत् ॥ ४२ ॥

देवतातिथिभृत्येभ्यः पितृभ्यश्चात्मनस्तथा।
ऋणवान् जायते मर्त्यस्तस्मादनृणतां व्रजेत् ॥ ४३ ॥

स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा।
पितृभ्यः श्राद्धदानेन नृणामभ्यर्चनेन च ॥ ४४ ॥

वाचा शेषावहार्येण पालनेनात्मनोऽपि च।
यथावद्भृत्यवर्गस्य चिकीर्षेत्कर्म आदितः ॥ ४५ ॥

येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान्।
धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥ ४६ ॥

(अ.२९३)सद्भिस्तु सह संसर्गः शोभते धर्मदर्शिभिः।
नित्यं सर्वास्ववस्थासु नासद्भिरिति मे मतिः ॥ ४७ ॥

यथोदयगिरौ द्रव्यं सन्निकर्षेण दीप्यते।
तथा सत्सन्निकर्षेण हीनवर्णोऽपि दीप्यते ॥ ४८ ॥

यादृशेन हि वर्णेन भाव्यते शुक्लमम्बरम्।
तादृशं कुरुते रूपमेतदेवमवेहि मे ॥ ४९ ॥

तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन।
अनित्यमिह मर्त्यानां जीवितं हि चलाचलम् ॥ २३५० ॥

सुखे वा यदि वा दुःखे वर्तमानो विचक्षणः।
यश्चिनोति शुभान्येव स तन्त्राणीह पश्यति ॥ ५१ ॥

धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम्।
न तत्सेवेत मेधावी न तद्धितमिहोच्यते ॥ ५२ ॥

तस्माद्यो रक्षति नृपः स धर्मेणेति पूज्यते।
अधीते चापि यो विप्रो वैश्यो यश्चार्जने रतः ॥ ५३ ॥

यश्च शुश्रूषते शूद्रः सततं नियतेन्द्रिय।
अतोऽन्यथा मनुष्येन्द्र स्वधर्मात्परिहीयते ॥ ५४ ॥

प्राणसन्तापनिर्दिष्टाः काकिण्योऽपि महाफलाः।
न्यायेनोपार्जिता दत्ताः किमुतान्याः सहस्रशः ॥ ५५ ॥

सत्कृत्य हि द्विजातिभ्यो यो ददाति नराधिपः।
यादृशं तादृशं नित्यमश्नाति फलमूर्जितम् ॥ ५६ ॥

अभिगम्य च तत्तुष्ट्या दत्तमाहुरभिष्टुतम्।
याचितेन तु यद्दत्तं तदाहुर्मध्यमं बुधाः ॥ ५७ ॥

अवज्ञया दीयते यत्तथैवाश्रद्धयाऽपि वा।
तमाहुरधमं दानं मुनयः सत्यवादिनः ॥ ५८ ॥

अतिक्रामेन्मज्जमानो विविधेन नरः सदा।
तथा प्रयत्नं कुर्वीत यथा मुच्येत संश्रयात् ॥ ५९ ॥

दमेन शोभते विप्रः क्षत्रियो विजयेन तु।
धनेन वैश्यः शूद्रस्तु नित्यं दाक्ष्येण शोभते ॥ २३६० ॥

(अ.२९४) प्रतिग्रहागता विप्रे क्षत्रिये युधि निर्जिताः।
वैश्ये न्यायार्जिताश्चैव शूद्रे शुश्रूषयार्जिताः।
स्वल्पाप्यर्थाः प्रशस्यन्ते धर्मस्यार्थे महाफलाः ॥ ६१ ॥

क्षत्रधर्मा वैश्यधर्मा नावृत्तिः पतते द्विजः।
शूद्रधर्मा यदा तु स्यात्तदा पतति वै द्विजः ॥ ६२ ॥

वाणिज्यं पाशुपाल्यं च तथा शिल्पोपजीवनम् ।
शूद्रस्यापि विधीयन्ते यदा वृत्तिर्न जायते ॥ ६३ ॥

संसिद्धः पुरुषो लोके यदाचरति पापकम् ।
मदेनाभिप्लुतमनास्तच्च न ग्राह्यमुच्यते ॥ ६४ ॥

न सङ्करेण द्रविणं प्रचिन्वीयाद्विचक्षणः ।
धर्मार्थं न्यायमुत्सृज्य न तत्कल्याणमुच्यते ॥ ६५ ॥

स त्वमेवंविधो दान्तः क्षत्रियः प्रियबान्धवः ।
प्रजा भृत्यांश्च पुत्रांश्च स्वधर्मेणानुपालय ॥ ६६ ॥

धर्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा ।
आत्मभूतः सदा लोके चरेद्भूतान्यहिंसया ॥ ६७ ॥

यदा व्यपेतहृल्लेखं मनो भवति तस्य वै ।
नानृतं चैव भवति तदा कल्याणमृच्छति ॥ ६८ ॥

(अ २९५) एष धर्मविधिस्तात गृहस्थस्य प्रकीर्तितः ।
तपोविधिं तु वक्ष्यामि तन्मे निगदतः शृणु ॥ ६९ ॥

प्रायेण च गृहस्थस्य ममत्वं नाम जायते ।
सङ्गागतं नरश्रेष्ठ भावै राजसतामसैः ॥ २३७० ॥

एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः ।
रागद्वेषौ विवर्धेते ह्यनित्यत्वमपश्यतः ॥ ७१ ॥

रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम् ।
मोहजाता रतिर्नाम समुपैति नराधिप ॥ ७२ ॥

कृतार्थं भोगिनं मत्वा सर्वो रतिपरायणः ।
लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ॥ ७३ ॥

ततो लोभाभिभूतात्मा सङ्गाद्वर्धयते जनम् ।
पुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति ॥ ७४ ॥

स जानन्नपि चाकार्यमर्थार्थं सेवते नरः ।
बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते ॥ ७५ ॥

स्नेहायतननाशाच्च धननाशाच्च पार्थिव ।
आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ॥ ७६ ॥

निर्वेदादात्मसम्बोधः सम्बोधाच्छास्त्रदर्शनम् ।
शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति ॥ ७७ ॥

दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान् ।
यो वै प्रियसुखे क्षीणस्तपः कर्तुं व्यवस्यति ॥ ७८ ॥

तपः सर्वगतं तात हीनस्यापि विधीयते ।
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रवर्तकम् ।
तस्मात्सुखक्षये प्राप्ते पुमानुग्रं तपश्चरेत् ॥ ७९ ॥

सुखे तु वर्तमानो वै दुःखे वापि नरोत्तम ।
सुवृत्ताद्यो न चलते शास्त्रचक्षुः स मानवः ॥ २३८० ॥

इषुप्रपातमात्रं हि स्पर्शयोगे रतिः स्मृता ।
रसने दर्शने घ्राणे श्रवणे च विशाम्पते ।
ततोऽस्य जायते तीव्रा वेदना तत्क्षयात्पुनः ॥ ८१ ॥

क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् ।
तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥ ८२ ॥

(अ.२९६) वर्णो विशेषवर्णाना महर्षे केन जायते ।
जनक०–कथ ब्रह्मणतो जातो विशेषग्रहणं गतः ॥ ८३ ॥

परा०– एवमेतन्महाराज येन जातः स एव सः ।
तपसस्त्वपकर्षेण जातिग्रहणता गतः ॥ ८४ ॥

सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति संभवः ।
अतोऽन्यतरतो हीनादवरो नाम जायते ॥ ८५ ॥

वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे ।
सृजतः प्रजापतेर्लोकानिति धर्मविदो विदुः ॥ ८६ ॥

मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रियाः स्मृताः ।
ऊरुजा धनिनो राजन् पादजाः परिचारकाः ॥ ८७ ॥

चतुर्णामेव वर्णानामागम पुरुषर्षभ ।
अतोऽन्ये त्वतिरिक्ता ये ते वै सङ्करजाः स्मृताः ॥ ८८ ॥

क्षत्रियातिरथाम्बष्ठा उग्रा वैदेहकास्तथा ।
श्वपाकाः पुल्कसा· स्तेना निषादाः सूतमागधाः ॥ ८९ ॥

अयोगाः करणा व्रात्याश्चाण्डालाश्च नराधिप ।
एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परात् ॥ २३९० ॥

जनक०–ब्रह्मणैकेन जातानां नानात्वं गोत्रत कथम् ।
यत्र तत्र कथं जाता· स्वयोनिं मुनयो गता· ॥ ९१ ॥

परा०– राजन्नैतद्भवेद्ग्राह्यमपकृष्टेन जन्मना ।
महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम् ॥ ९२ ॥

उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह ।
स्वेनैव तपसा तेषामृषित्वं विदधुः पुन· ॥ ९३ ॥

पितामहश्च मे पूर्वमृष्यशृङ्गश्च काश्यपः ।
वेदस्ताण्डय· कृपश्चैव काक्षीवत्कमठादयः ॥ ९४ ॥

एते स्वां प्रकृतिं प्राप्ता वैदेह तपसोऽश्रयात् ।
प्रतिष्ठिता वेदविदो दमेन तपसैव हि ॥ ९५ ॥

मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव ।
अङ्गिराः कश्यपश्चैव वसिष्ठो भृगुरेव च ॥ ९६ ॥

कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव ।
नामधेयानि तपसा तानि च ग्रहणं सताम् ॥ ९७ ॥

जनक०–विशेषधर्मान् वर्णानां प्रब्रूहि भगवन्मम ।
ततः सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ॥ ९८ ॥

परा०– प्रतिग्रहो याजनं च तथैवाध्यापनं नृप ।
विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना ॥ ९९ ॥

कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि ।
द्विजानां परिचर्या च शूद्रकर्म नराधिप ॥ २४०० ॥

विशेषधर्मा नृपते वर्णानां परिकीर्तिताः।
धर्मान् साधारणांस्तात विस्तरेण शृणुष्व मे ॥ १ ॥
आनृशंस्यमहिंसा चाप्रमादः संविभागिता।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥ २ ॥
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता।
आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥ ३ ॥
सतां वृत्तमधिष्ठाय निहीना उद्दिधीर्षवः।
मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः ॥ ४ ॥
यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः।
तथा तथा सुखं प्राप्य प्रेत्य चेह च मोदते ॥ ५ ॥
जनक०–किं कर्म दूषयत्येनमथो जातिर्महामुने।
सन्देहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि ॥ ६ ॥
परा०– असंशयं महाराज उभयं दोषकारकम्।
कर्म चैव हि जातिश्च विशेषं तु निशामय ॥ ७ ॥
जात्या च कर्मणा चैव दुष्टं कर्म न सेवते।
जात्या दुष्टश्च यः पापं न करोति स पूरुषः ॥ ८ ॥
जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतम्।
कर्म तद्दूषयत्येन तस्मात्कर्म न शोभनम् ॥ ९ ॥
(अ.२९७) एकः शत्रुर्न द्वितीयोऽस्ति शत्रु-
रज्ञानतुल्यः पुरुषस्य राजन्।
येनावृतः कुरुते संप्रयुक्तो
घोराणि कर्माणि सुदारुणानि ॥ २४१० ॥
प्रबाधनार्थं श्रुतिधर्मयुक्तं
वृद्धानुपास्य प्रभवेत यस्य।
प्रयत्नसाध्यो हि स राजपुत्र
प्रज्ञाशरेणोन्मथितः परैति ॥ ११ ॥

उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः।
चण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम् ॥ १२ ॥
इयं हि योनिः प्रथमा यां प्राप्य जगतीपते।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ॥ १३ ॥
कथं न विप्रणश्येम योनितोऽस्या इति प्रभो।
कुर्वन्ति धर्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ॥ १४ ॥
यो दुर्लभतरं प्राप्य मानुष्यं द्विषते नरः।
धर्मावमन्ता कामात्मा भवेत्स खलु वञ्च्यते ॥ १५ ॥
यस्तु प्रीतिपुराणेन चक्षुषा तात पश्यति।
दीपोपमानि भूतानि यावदर्थान्न पश्यति ॥ १६ ॥
सान्त्वेनान्नप्रदानेन प्रियवादेन चाप्युत।
समदुःखसुखो भूत्वा स परत्र महीयते ॥ १७ ॥
(अ.२९८)किं श्रेयः का गतिर्ब्रह्मन्किं कृतं न विनश्यति।
जनक०–क्व गतो न निवर्तेत तन्मे ब्रूहि महामते ॥ १८ ॥
परा०– असङ्गः श्रेयसो मूलं ज्ञानं ज्ञानगतिः परा।
चीर्णं तपो न प्रणश्येद्वापः क्षेत्रे न नश्यति ॥ १९ ॥
छित्त्वाऽधर्ममयं पाशं यदा धर्मेऽभिरज्यते।
दत्त्वाऽभयकृतं दानं तदा सिद्धिमवाप्नुते ॥ २४२० ॥
यथान्धः स्वगृहे युक्तो ह्यभ्यासादेव गच्छति।
तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिम् ॥ २१ ॥
अविद्वान् मोक्षधर्मेषु बद्धो भ्रमति चक्रवत्।
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ॥ २२ ॥
यथा मृणालानुगतमाशु मुञ्चति कर्दमम्।
तथाऽऽत्मा पुरुषस्येह मनसा परिमुच्यते ॥ २३ ॥
इत्युक्तो जनको राजन् याथातथ्यं मनीषिणा।
श्रुत्वा धर्मविदां श्रेष्ठः परां मुदमवाप ह ॥ २४ ॥

## हंसगीता

(अ.२९९) सत्यं दमं क्षमां प्रज्ञां प्रशंसन्ति पितामह।
युधि०- विद्वांसो मनुजा लोके कथमेतन्मतं तव ॥ २५ ॥

भीष्म०- अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम्।
साध्यानामिह संवादं हंसस्य च युधिष्ठिर ॥ २६ ॥

हंसो भूत्वाऽथ सौपर्णस्त्वजो नित्य प्रजापतिः।
स वै पर्येति लोकांस्त्रीनथ साध्यानुपागमत् ॥ २७ ॥

साध्या०-शकुने वयं स्म देवा वै साध्यास्त्वामनुयुङ्क्ष्महे।
पृच्छामस्त्वां मोक्षधर्मं भवांश्च किल मोक्षवित् ॥ २८ ॥

तन्नः कार्यं पक्षिवर प्रशाधि
यत्कार्याणां मन्यसे श्रेष्ठमेकम्।
यत्कृत्वा वै पुरुषः सर्वबन्धै-
र्विमुच्यते विहगेन्द्रेह शीघ्रम् ॥ २९ ॥

हंस०- इदं कार्यममृताशाः शृणोमि
तपो दमः सत्यमात्माभिगुप्तिः।
ग्रन्थीन्विमुच्य हृदयस्य सर्वान्
प्रियाप्रिये स्वं वशमानयीत ॥ २४३० ॥

नारुन्तुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेदुषतीं पापलोक्याम् ॥ ३१ ॥

वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ ३२ ॥

परश्चेदेनमतिवादवाणै-
भृशं विध्येच्छम एवेह कार्यः।
संरोष्यमाणः प्रतिहृष्यते यः
स आदत्ते सुकृतं वै परस्य ॥ ३३ ॥

वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः।
दमस्योपनिषन्मोक्ष एतत्सर्वानुशासनम् ॥ ३४ ॥

वाचो वेगं मनसः क्रोधवेगं
विधित्सावेगमुदरोपस्थवेगम्।
एतान् वेगान् यो विषहेदुदीर्णा-
स्तं मन्येऽहं ब्राह्मणं वै मुनिं च ॥ ३५ ॥

अक्रोधनः क्रुध्यतां वै विशिष्ट-
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः।
अमानुषान्मानुषो वै विशिष्ट-
स्तथाऽज्ञानाज्ज्ञानविद्वै विशिष्टः ॥ ३६ ॥

आक्रुश्यमानो नाक्रुश्येन्मन्युरेनं तितिक्षतः।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ३७ ॥

यो नात्युक्तः प्राह रूक्षं प्रियं वा
यो वा हतो न प्रतिहन्ति धैर्यात्।
पापं च यो नेच्छति तस्य हन्तु-
स्तस्येह देवाः स्पृहयन्ति नित्यम् ॥ ३८ ॥

पापीयसः क्षमेतैव श्रेयसः सदृशस्य च।
विमानितो हतोत्क्रुष्ट एवं सिद्धिं गमिष्यति ॥ ३९ ॥

न तथा वक्तुमिच्छन्ति कल्याणान्पुरुषे गुणान्।
यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥ २४४० ॥

यस्य वाङ्मनसी गुप्ते सम्यक्प्रणिहिते सदा।
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥ ४१ ॥

अमृतस्येव सन्तृप्येद्‌वमानस्य पण्डित ।
सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ॥ ४२ ॥
यत्क्रोधनो यजति यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं
मोघः श्रमो भवति हि क्रोधनस्य ॥ ४३ ॥
चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक्‌चतुर्थी स धर्मवित् ॥ ४४ ॥
सत्यं दमं ह्यार्जवमानृशंस्यं
धृतिं तितिक्षामतिसेवमानः ।
स्वाध्यायनित्योऽस्पृहयन्परेषा-
मेकान्तशील्यूर्ध्वगतिर्भवेत्सः ॥ ४५ ॥
यादृशैः सन्निवसति यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ ४६ ॥
यदि सन्तं सेवति यद्यसन्त
तपस्विन यदि वा स्तेनमेव ।
वासो यथा रङ्गवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ ४७ ॥
अदुष्टं वर्तमाने तु हृदयान्तरपूरुषे ।
तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ॥ ४८ ॥
अव्याहृतं व्याहृताच्छ्रेय आहु
सत्यं वदेद्‌व्याहृतं तद्‌द्वितीयम् ।
धर्मं वदेद्‌व्याहृतं तत्तृतीयं
प्रियं वदेद्‌व्याहृतं तच्चतुर्थम् ॥ ४९ ॥
अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥ २४५०
भीष्म०– संवाद इत्ययं श्रेष्ठः साध्यानां परिकीर्तितः ।
क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ॥ ५१ ॥

## साङ्ख्ययोगकथनम्

(अ.३००) साङ्ख्ये योगे च मे तात विशेषं वक्तुमर्हसि।
युधि०– तव धर्मज्ञ सर्वं हि विदितं कुरुसत्तम॥ ५२॥

भीष्म०–साङ्ख्याः साङ्ख्यं प्रशंसन्ति योगा योगं द्विजातयः।
वदन्ति कारणं श्रेष्ठं स्वपक्षोद्भावनाय वै॥ ५३॥

अनीश्वरः कथं मुच्येदित्येवं शत्रुकर्शन।
वदन्ति कारणश्रैष्ठ्यं योगाः सम्यङ्मनीषिणः॥ ५४॥

वदन्ति कारणं चेदं साङ्ख्याः सम्यग्द्विजातयः।
विज्ञायेह गतीः सर्वा विरक्तो विषयेषु यः॥ ५५॥

ऊर्ध्वं स देहात्सुव्यक्तं विमुच्येदिति नान्यथा।
एतदाहुर्महाप्राज्ञाः साङ्ख्यं वै मोक्षदर्शनम्॥ ५६॥

स्वपक्षे कारणं ग्राह्यं समये वचनं हितम्।
शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसमतैः॥ ५७॥

प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः।
उभे चैते मते तत्त्वे मम तात युधिष्ठिर॥ ५८॥

उभे चैते मते ज्ञाते नृपते शिष्टसंमते।
अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम्॥ ५९॥

तुल्यं शौचं तपोयुक्तं दया भूतेषु चानघ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः॥ २४६०॥

युधि०– यदि तुल्यं व्रतं शौचं दया चात्र फलं तथा।
न तुल्यं दर्शनं कस्मात्तन्मे ब्रूहि पितामह॥ ६१॥

भीष्म०–रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम्।
योगाच्छित्त्वा ततो दोषान् पञ्चैतान् प्राप्नुवन्ति तत्॥ ६२॥

यथा चानिमिषाः स्थूला जालं छित्त्वा पुनर्जलम्।
प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः॥ ६३॥

तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः॥ ६४॥
लोभजानि तथा राजन् बन्धनानि बलान्विताः।
छित्त्वा योगाः परं मार्गं गच्छन्ति विमलं शिवम्॥ ६५॥

बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव।
विमोक्षप्रभविष्णुत्वमुपपन्नमसंशयम्॥ ६६॥
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहित.।
युक्तः सम्यक्तथा योगी मोक्षं प्राप्नोत्यसशयम्॥ ६७॥

यथा च नावं कौन्तेय कर्णधार. समाहित।
महार्णवगतां शीघ्रं नयेत् पार्थिवसत्तम॥ ६८॥

तद्वदात्मसमाधानं युक्त्वा योगेन तत्त्ववित्।
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप॥ ६९॥
दुर्गस्त्वेष महापन्था ब्राह्मणानां विपश्चिताम्।
यः कश्चिद्व्रजति ह्यस्मिन्क्षेमेण भरतर्षभ॥ २४७०॥

सुस्थेयं क्षुरधारासु निशितासु महीपते।
धारणासु च योगस्य दु.स्थेयमकृतात्मभि॰॥ ७१॥
विपन्ना धारणास्तात नयन्ति न शुभां गतिम्।
नेतृहीना यथा नाव. पुरुषानर्णवे नृप॥ ७२॥
यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि।
मरणं जन्मदुःखं च सुखं च स विमुञ्चति॥ ७३॥

(अ.३०१)शृणु मे त्वमिदं सूक्ष्मं साङ्ख्यानां विदितात्मनाम्।
विहितं यतिभिः सर्वैः कपिलादिभिरीश्वरैः॥ ७४॥
यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ।
गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला॥ ७५॥
ज्ञानेन परिसङ्ख्याय सदोषान्विषयान्नृप।
मार्गं विज्ञाय तत्त्वेन प्रलये प्रेक्षणे तथा॥ ७६॥

ज्ञानविज्ञानसंपन्नाः कारणैर्भाविता· शुभाः ।
प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम् ॥ ७७ ॥

परमात्मानमासाद्य तद्भूतायतनाऽमलाः ।
अमृतत्त्वाय कल्पन्ते न निवर्तन्ति वा विभो ॥ ७८ ॥

परमा सा गतिः पार्थ निर्द्वंद्वानां महात्मनाम् ।
सत्यार्जवरतानां वै सर्वभूतदयावताम् ॥ ७९ ॥

साङ्ख्या राजन् महाप्राज्ञा गच्छन्ति परमां गतिम् ।
अत्र ते संशयो माभूज्ज्ञान साङ्ख्य परं मतम् ॥ २४८० ॥

ज्ञानं महद्यद्धि महत्सु राजन्
वेदेषु सङ्ख्येषु तथैव योगे ।
यच्चापि दृष्टं विविधं पुराणे
साङ्ख्यागतं तन्निखिलं नरेन्द्र ॥ ८१ ॥

## सुलभाजनकसंवादः

(अ ३२०)अपरित्यज्य गार्हस्थ्यं कुरुराजर्षिसत्तम ।
युधि०- कः प्राप्तो विनयं बुद्ध्या मोक्षतत्त्वं वदस्व मे ॥ ८२ ॥

भीष्म०- अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
जनकस्य च संवादं सुलभायाश्च भारत ॥ ८३ ॥

संन्यासफलिक· कश्चिद्बभूव नृपतिः पुरा ।
मैथिलो जनको नाम धर्मध्वज इति श्रुतः ॥ ८४ ॥

स वेदे मोक्षशास्त्रे च स्वे च शास्त्रे कृतश्रमः ।
इन्द्रियाणि समाधाय शशास वसुधामिमाम् ॥ ८५ ॥

तस्य वेदविदः प्राज्ञा· श्रुत्वा तां साधुवृत्तताम् ।
लोकेषु स्पृहयन्त्यन्ये पुरुषाः पुरुषेश्वर ॥ ८६ ॥

अथ धर्मयुगे तस्मिन् योगधर्ममनुष्ठिता ।
महीमनुचचारैका सुलभा नाम भिक्षुकी ॥ ८७ ॥

तया जगदिदं कृत्स्नमटन्त्या मिथिलेश्वरः।
तत्र तत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ॥ ८८ ॥

साऽतिसूक्ष्मां कथा श्रुत्वा तथ्य नेति ससंशया।
दर्शने जातसङ्कल्पा जनकस्य बभूव ह ॥ ८९ ॥

तत्र सा विप्रहायाथ पूर्वरूपं हि योगतः।
अविभ्रदनवद्याङ्गी रूपमन्यदनुत्तमम् ॥ २४९० ॥

चक्षुर्निमेषमात्रेण लघ्वस्त्रगतिगामिनी।
विदेहानां पुरीं सुभ्रूर्जगाम कमलेक्षणा ॥ ९१ ॥

सा प्राप्य मिथिलां रम्यां प्रभूतजनसङ्कुलाम्।
भैक्ष्यचर्यापदेशेन ददर्श मिथिलेश्वरम् ॥ ९२ ॥

राजा तस्याः परं दृष्ट्वा सौकुमार्यं वपुस्तदा।
केयं कस्य कुतो वेति बभूवागतविस्मयः ॥ ९३ ॥

ततोऽस्या स्वागतं कृत्वा व्यादिश्य च वरासनम्।
पूजितां पादशौचेन वरान्नेनाप्यतर्पयत् ॥ ९४ ॥

अथ भुक्तवती प्रीता राजानं मन्त्रिभिर्वृतम्।
सर्वभाष्यविदां मध्ये चोदयामास भिक्षुकी ॥ ९५ ॥

सुलभा त्वस्य धर्मेषु मुक्तो नेति ससंशया।
सत्त्वं सत्त्वेन योगज्ञा प्रविवेश महीपतेः ॥ ९६ ॥

नेत्राभ्यां नेत्रयोरस्य रश्मीन् संयस्य रश्मिभिः।
सा स्म तं चोदयिष्यन्ती योगबन्धैर्बबन्ध ह ॥ ९७ ॥

जनकोऽप्युत्स्मयन् राजा भावमस्या विशेषयन्।
प्रतिजग्राह भावेन भावमस्या नृपोत्तम ॥ ९८ ॥

तदेकस्मिन्नधिष्ठाने संवादः श्रूयतामयम् ॥ ९९ ॥

जनक०— छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डके।
भगवत्याः क्व चर्चेयं कृता क्व च गमिष्यसि ॥ २५०० ॥
कस्य च त्वं कुतो वेति पप्रच्छैनां महीपतिः ॥ १ ॥

श्रुते वयसि जातौ च सद्भावो नाधिगम्यते ।
एष्वर्थेषूत्तरं तस्मात्प्रवेश्यं मत्समागमे ॥ २ ॥

छत्रादिषु विशेषेषु मुक्त मा विद्धि तत्त्वतः ।
स त्वां संमन्तुमिच्छामि मानार्हा हि मतासि मे ॥ ३ ॥

यस्माच्चैतन्मया प्राप्तं ज्ञानं वैशेषिकं पुरा ।
यस्य नान्य प्रवक्ताऽस्ति मोक्षं तमपि मे शृणु ॥ ४ ॥

पराशरसगोत्रस्य वृद्धस्य सुमहात्मनः ।
भिक्षोः पञ्चशिखस्याहं शिष्य परमसंमतः ॥ ५ ॥

साङ्ख्यज्ञाने च योगे च महीपालविधौ तथा ।
त्रिविधे मोक्षधर्मेऽस्मिन्गताध्वा छिन्नसंशयः ॥ ६ ॥

स यथा शास्त्रदृष्टेन मार्गेणेह परिभ्रमन् ।
वार्षिकांश्चतुरो मासान् पुरा मयि सुखोषितः ॥ ७ ॥

तेनाहं साङ्ख्यमुख्येन सुदृष्टार्थेन तत्त्वतः ।
श्रावितस्त्रिविधं मोक्षं न च राज्याद्धि चालितः ॥ ८ ॥

सोऽहं तामखिलां वृत्तिं त्रिविधां मोक्षसंहिताम् ।
मुक्तरागश्चराम्येकः पदे परमके स्थितः ॥ ९ ॥

वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः ।
ज्ञानादेव च वैराग्यं जायते येन मुच्यते ॥ २५१० ॥

ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत् ।
महद्द्वन्द्वप्रमोक्षाय सा सिद्धिर्या वयोतिगा ॥ ११ ॥

सेयं परमिका बुद्धिः प्राप्ता निर्द्वन्द्वता मया ।
इहैव गतमोहेन चरता मुक्तसङ्गिना ॥ १२ ॥

यथा क्षेत्रं मृदूभूतमद्भिराप्लावितं तथा ।
जनयत्यङ्कुरं कर्म नृणां तद्वत्पुनर्भवम् ॥ १३ ॥

यथा चोत्तापितं बीजं कपाले यत्र तत्र वा ।
प्राप्याप्यङ्कुरहेतुत्वमबीजत्वान्न जायते ॥ १४ ॥

तद्वद्भगवताऽनेन शिखाप्रोक्तेन भिक्षुणा।
ज्ञानं कृतमबीजं मे विषयेषु न जायते॥ १५॥
नाभिरज्यति कस्मिंश्चिन्नानर्थे न परिग्रहे।
नाभिरज्यति चैतेषु व्यर्थत्वाद्रागरोषयोः॥ १६॥
यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत्।
सव्यं वास्यापि यस्तक्षेत्समावेतावुभौ मम॥ १७॥
सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः।
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः॥ १८॥
मोक्षे हि त्रिविधा निष्ठा दृष्टाऽन्यैर्मोक्षवित्तमैः।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम्॥ १९॥
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः।
कर्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः॥ २५२०॥
प्रहायोभयमप्येव ज्ञानं कर्म च केवलम्।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना॥ २१॥
यमे च नियमे चैव कामे द्वेषे परिग्रहे।
माने दम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः॥ २२॥
त्रिदण्डादिषु यद्यस्ति मोक्षो ज्ञानेन कस्यचित्।
छत्रादिषु कथं न स्यात्तुल्यहेतौ परिग्रहे॥ २३॥
येन येन हि यस्यार्थं कारणेनेह कर्मणि।
तत्तदालम्बते सर्वद्रव्ये स्वार्थपरिग्रहे॥ २४॥
दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरे।
उत्सृजन्परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते॥ २५॥
आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मके।
राजभिर्भिक्षुकास्तुल्या मुच्यन्ते केन हेतुना॥ २६॥
अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलम्।
मुच्यन्ते सर्वपापेभ्यो देहे परमके स्थिताः॥ २७॥

काषायधारणं मौण्ड्य त्रिविष्टब्धं कमण्डलुम्।
लिङ्गान्युत्पथभूतानि न मोक्षायेति मे मतिः ॥ २८ ॥
यदि सत्यपि लिङ्गेऽस्मिन् ज्ञानमेवात्र कारणम्।
निर्मोक्षायेह दुःखस्य लिङ्गमात्र निरर्थकम् ॥ २९ ॥
अथवा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः।
किं तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते ॥ २५३० ॥
आकिञ्चन्ये न मोक्षोऽस्ति किञ्चन्ये नास्ति बन्धनम्।
किञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ॥ ३१ ॥
तस्माद्धर्मार्थकामेषु तथा राज्यपरिग्रहे।
बन्धनायतनेष्वेषु विद्धयबन्धे पदे स्थितम् ॥ ३२ ॥
राज्यैश्वर्यमय· पाश· स्नेहायतनबन्धनः।
मोक्षाश्मनिशितेनेह छिन्नस्त्यागासिना मया ॥ ३३ ॥
सोऽहमेवंगतो मुक्तो जातास्थस्त्वयि भिक्षुकि।
अयथार्थं हि ते वर्णं वक्ष्यामि शृणु तन्मम ॥ ३४ ॥
सौकुमार्यं तथा रूपं वपुरग्र्यं तथा वय·।
तवैतानि समस्तानि नियमश्चेति संशयः ॥ ३५ ॥
यच्चाप्यननुरूपं ते लिङ्गस्यास्य विचेष्टितम्।
मुक्तोऽयं स्यान्नवेति स्याद्धर्षितो मत्परिग्रहः ॥ ३६ ॥
न च कामसमायुक्ते युक्तेऽप्यस्ति त्रिदण्डके।
न रक्ष्यते त्वया चेदं न मुक्तस्यास्ति गोपना ॥ ३७ ॥
मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रम· ॥ ३८ ॥
आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम्।
प्रवेशस्ते कृतः केन मम राष्ट्रे पुरेऽपि वा।
कस्य वा सन्निकर्षात्त्वं प्रविष्टा हृदयं मम ॥ ३९ ॥
वर्णप्रवरमुख्याऽसि ब्राह्मणी क्षत्रियस्त्वहम्।
नावयोरेकयोगोऽस्ति मा कृथा वर्णसङ्करम् ॥ २५४० ॥

तद्भगवताऽनेन शिखाप्रोक्तेन भिक्षुणा।
ज्ञानं कृतमबीज मे विषयेषु न जायते ॥ १५ ॥
नाभिरज्यति कस्मिंश्चिन्नानर्थे न परिग्रहे।
नाभिरज्यति चैतेषु व्यर्थत्वाद्रागरोषयोः ॥ १६ ॥
यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत्।
सव्यं वास्यापि यस्तक्षेत्समावेतावुभौ मम ॥ १७ ॥
सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः।
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥ १८ ॥
मोक्षे हि त्रिविधा निष्ठा दृष्टाऽन्यैर्मोक्षवित्तमैः।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ॥ १९ ॥
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः।
कर्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः ॥ २५२० ॥
प्रहायोभयमप्येव ज्ञानं कर्म च केवलम्।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥ २१ ॥
यमे च नियमे चैव कामे द्वेषे परिग्रहे।
माने दम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः ॥ २२ ॥
त्रिदण्डादिषु यद्यस्ति मोक्षो ज्ञानेन कस्यचित्।
छत्रादिषु कथं न स्यात्तुल्यहेतौ परिग्रहे ॥ २३ ॥
येन येन हि यस्यार्थः कारणेनेह कर्मणि।
तत्तदालम्बते सर्वद्रव्ये स्वार्थपरिग्रहे ॥ २४ ॥
दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरे।
उत्सृजन्परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते ॥ २५ ॥
आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मके।
राजभिर्भिक्षुकास्तुल्या मुच्यन्ते केन हेतुना ॥ २६ ॥
अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलम्।
मुच्यन्ते सर्वपापेभ्यो देहे परमके स्थिताः ॥ २७ ॥

काषायधारणं मौण्ड्यं त्रिविष्टब्धं कमण्डलुम्।
लिङ्गान्युत्पथभूतानि न मोक्षायेति मे मतिः ॥ २८ ॥
यदि सत्यपि लिङ्गेऽस्मिन् ज्ञानमेवात्र कारणम्।
निर्मोक्षायेह दुःखस्य लिङ्गमात्रं निरर्थकम् ॥ २९ ॥
अथवा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः।
किं तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते ॥ २५३० ॥
आकिञ्चन्ये न मोक्षोऽस्ति किञ्चन्ये नास्ति बन्धनम्।
किञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ॥ ३१ ॥
तस्माद्धर्मार्थकामेषु तथा राज्यपरिग्रहे।
बन्धनायतनेष्वेषु विद्ध्यबन्धे पदे स्थितम् ॥ ३२ ॥
राज्यैश्वर्यमयः पाशः स्नेहायतनबन्धनः।
मोक्षाश्मनिशितेनेह छिन्नस्त्यागासिना मया ॥ ३३ ॥
सोऽहमेवंगतो मुक्तो जातास्थस्त्वयि भिक्षुकि।
अयथार्थं हि ते वर्णं वक्ष्यामि शृणु तन्मम ॥ ३४ ॥
सौकुमार्यं तथा रूपं वपुरग्र्यं तथा वयः।
तवैतानि समस्तानि नियमश्चेति संशयः ॥ ३५ ॥
यच्चाप्यननुरूपं ते लिङ्गस्यास्य विचेष्टितम्।
मुक्तोऽयं स्यान्नवेति स्याद्धर्षितो मत्परिग्रहः ॥ ३६ ॥
न च कामसमायुक्ते युक्तेऽप्यस्ति त्रिदण्डके।
न रक्ष्यते त्वया चेदं न मुक्तस्यास्ति गोपना ॥ ३७ ॥
मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रमः ॥ ३८ ॥
आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम्।
प्रवेशस्ते कृतः केन मम राष्ट्रे पुरेऽपि वा।
कस्य वा सन्निकर्षात्त्वं प्रविष्टा हृदयं मम ॥ ३९ ॥
वर्णप्रवरमुख्याऽसि ब्राह्मणी क्षत्रियस्त्वहम्।
नावयोरेकयोगोऽस्ति मा कृथा वर्णसङ्करम् ॥ २५४० ॥

वर्नसे मोक्षधर्मेण त्व गार्हस्थ्येऽहमाश्रमे ।
अयं चापि सुकष्टस्ते द्वितीयोऽऽश्रमसङ्करः ॥ ४१ ॥

सगोत्रां वाऽसगोत्रां वा न वेद त्वां न वेत्थ माम् ।
सगोत्रमाविशन्त्यास्ते तृतीयो गोत्रसङ्करः ॥ ४२ ॥

अथ जीवति ते भर्ता प्रोषितोऽप्यथवा क्वचित् ।
अगम्या परभार्येति चतुर्थो धर्मसङ्करः ॥ ४३ ॥

सा त्वमेतान्यकार्याणि कार्यापेक्षा व्यवस्यसि ।
अविज्ञानेन वा युक्ता मिथ्याज्ञानेन वा पुनः ॥ ४४ ॥

अथवाऽपि स्वतन्त्राऽसि स्वदोषेणेह कर्हिचित् ।
यदि किञ्चिच्छ्रुतं तेऽस्ति सर्वं कृतमनर्थकम् ॥ ४५ ॥

इदमन्यत्तृतीयं ते भावस्पर्शविघातकम् ।
दुष्टाया लक्ष्यते लिङ्ग विवृण्वत्या प्रकाशितम् ॥ ४६ ॥

न मय्येवाभिसन्धिस्ते जयैषिण्या जये कृतः ।
येयं मत्परिषत्कृत्स्ना जेतुमिच्छसि तामपि ॥ ४७ ॥

तथाऽर्हतस्ततश्च त्व दृष्टिं स्वां प्रतिमुञ्चसि ।
मत्पक्षप्रतिघाताय स्वपक्षोद्भावनाय च ॥ ४८ ॥

सा स्वेनामर्षजेन त्वमृद्धिमोहेन मोहिता ।
भूय· सृजसि योगांस्त्वं विषामृतमिवैकताम् ॥ ४९ ॥

इच्छतोरत्र यो लाभ· स्त्रीपुंसोरमृतोपमः ।
अलाभश्चापि रक्तस्य सोऽपि दोषो विषोपमः ॥ २५५० ॥

मा त्याक्षीः साधु जानीष्व स्वशास्त्रमनुपालय ।
कृतेयं हि विजिज्ञासा मुक्तो नेति त्वया मम ॥ ५१ ॥

एतत्सर्वं प्रतिच्छन्नं मयि नार्हसि गूहितुम् ।
सा यदि त्वं स्वकार्येण यद्यन्यस्य महीपतेः ।
तत्त्वं सत्रप्रतिच्छन्ना मयि नार्हसि गूहितुम् ॥ ५२ ॥

न राजानं मृषा गच्छेन्न द्विजातिं कथञ्चन।
न स्त्रियं स्त्रीगुणोपेतां हन्युर्ह्येते मृषा गताः ॥ ५३ ॥

राज्ञां हि बलमैश्वर्यं ब्रह्म ब्रह्मविदां बलम्।
रूपयौवनसौभाग्यं स्त्रीणा बलमनुत्तमम् ॥ ५४ ॥

अत एतैर्बलैरेव बलिन स्वार्थमिच्छता।
आर्जवेनाभिगन्तव्या विनाशाय ह्यनार्जवम् ॥ ५५ ॥

सा त्वं जातिं श्रुतं वृत्त भावं प्रकृतिमात्मनः।
कृत्यमागमने चैव वक्तुमर्हसि तत्त्वत ॥ ५६ ॥

भीष्म०- इत्येतैरसुखैर्वाक्यैरयुक्तैरसमञ्जसै.।
प्रत्यादिष्टा नरेन्द्रेण सुलभा न व्यकम्पत ॥ ५७ ॥

उक्तवाक्ये तु नृपतौ सुलभा चारुदर्शना।
ततश्चारुतरं वाक्यं प्रचक्रामाथ भाषितुम् ॥ ५८ ॥

सुलभा०-नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणै.।
अपेतमुपपन्नार्थमष्टादशगुणान्वितम् ॥ ५९ ॥

सौक्ष्म्यं साङ्ख्यक्रमौ चोभौ निर्णयः सप्रयोजनः।
पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ॥ २५६० ॥

एषामेकैकशोऽर्थानां सौक्ष्म्यादीनां स्वलक्षणम्।
शृणु संसार्यमाणानां पदार्थपदवाक्यत. ॥ ६१ ॥

ज्ञानं ज्ञेयेषु भिन्नेषु यदा भेदेन वर्तते।
यत्राधिवासिनी बुद्धिस्तत्सौक्ष्म्यमिति वर्तते ॥ ६२ ॥

दोषाणां च गुणानां च प्रमाणं प्रविभागत।
कञ्चिदर्थमभिप्रेत्य सा सङ्ख्येत्युपधार्यताम् ॥ ६३ ॥

इदं पूर्वमिदं पश्चाद्वक्तव्यं यद्विवक्षितम्।
क्रमयोग तमप्याहुर्वाक्यं वाक्यविदो जनाः ॥ ६४ ॥

धर्मकामार्थमोक्षेषु प्रतिज्ञाय विशेषतः।
इदं तदिति वाक्यान्ते प्रोच्यते स विनिर्णयः ॥ ६५ ॥

इच्छाद्वेषभवैर्दुःखैः प्रकर्षो यत्र जायते।
तत्र या नृपते वृत्तिस्तत्प्रयोजनमिष्यते ॥ ६६ ॥

तान्येतानि यथोक्तानि सौक्ष्म्यादीनि जनाधिप।
एकार्थसमवेतानि वाक्यं मम निशामय ॥ ६७ ॥

उपेतार्थमभिन्नार्थं न्यायवृत्तं न चाधिकम्।
नाश्लक्ष्णं न च संदिग्धं वक्ष्यामि परमं ततः ॥ ६८ ॥

न गुर्वक्षरसंयुक्तं पराङ्मुखसुखं न च।
नानृतं न त्रिवर्गेण विरुद्धं नाप्यसंस्कृतम् ॥ ६९ ॥

न न्यूनं कष्टशब्दं वा विक्रमाभिहितं न च।
न शेषमनुकल्पेन निष्कारणमहेतुकम् ॥ २५७० ॥

कामात्क्रोधाद्भयाल्लोभाद्दैन्याच्चानार्यकात्तथा।
ह्रीतोऽनुक्रोशतो मानान्न वक्ष्यामि कथञ्चन ॥ ७१ ॥

वक्ता श्रोता च वाक्यं च यदा त्वविकलं नृप।
सममेति विवक्षायां तदा सोऽर्थः प्रकाशते ॥ ७२ ॥

वक्तव्ये तु यदा वक्ता श्रोतारमवमन्य वै।
स्वार्थमाह परार्थं तत्तदा वाक्यं न रोहति ॥ ७३ ॥

अथ यः स्वार्थमुत्सृज्य परार्थं प्राह मानवः।
विशङ्का जायते तस्मिन् वाक्यं तदपि दोषवत् ॥ ७४ ॥

यस्तु वक्ता द्वयोरर्थमविरुद्धं प्रभाषते।
श्रोतुश्चैवात्मनश्चैव स वक्ता नेतरो नृप ॥ ७५ ॥

तदर्थवदिदं वाक्यं राजन्नेकमनाः शृणु ॥ ७६ ॥

यथा जतु च काष्ठं च पांसवश्चोदबिन्दवः।
संश्लिष्टानि तथा राजन् प्राणिनामिह संभव ॥ ७७ ॥

शब्दः स्पर्शो रसो रूपं गन्धः पञ्चेन्द्रियाणि च।
पृथगात्मान आत्मानं संश्लिष्टा जतुकाष्ठवत् ॥ ७८ ॥

न चैषां चोदना काचिदस्तीत्येष विनिश्चयः।
एकैकस्येह विज्ञानं नास्त्यात्मनि तथा परे ॥ ७९ ॥

न वेद चक्षुश्चक्षुश्च श्रोत्रं नात्मनि वर्तते।
तथैव व्यभिचारेण न वर्तन्ते परस्परम् ॥ २५८० ॥

प्रश्लिष्टं च न जानन्ति यथाऽऽप इव पांसवः।
बाह्यानन्यानपेक्षन्ते गुणांस्तानपि मे शृणु ॥ ८१ ॥

रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः।
यथैवात्र तथाऽन्येषु ज्ञानज्ञेयेषु हेतवः ॥ ८२ ॥

ज्ञानज्ञेयान्तरे तस्मिन्मनो नामापरो गुणः।
विचारयति येनायं निश्चये साध्वसाधुनी ॥ ८३ ॥

द्वादशस्त्वपरस्तत्र बुद्धिर्नाम गुणः स्मृतः।
येन संशयपूर्वेषु बोद्धव्येषु व्यवस्यति ॥ ८४ ॥

अथ द्वादशके तस्मिन् सत्त्वं नामापरो गुणः।
महासत्त्वोऽपसत्त्वो वा जन्तुर्येनानुमीयते॥ ८५ ॥

अहं कर्तेति चाप्यन्यो गुणस्तत्र चतुर्दशः।
ममायमिति येनायं मन्यते न ममेति च ॥ ८६ ॥

अथ पञ्चदशो राजन् गुणस्तत्रापरः स्मृतः।
पृथक्कलासमूहस्य सामग्र्यं तदिहोच्यते ॥ ८७ ॥

गुणस्त्वेवापरस्तत्र सङ्घात इव षोडशः।
प्रकृतिर्व्यक्तिरित्येतौ गुणौ यस्मिन्समाश्रितौ ॥ ८८ ॥

सुखासुखे जन्ममृत्यू लाभालाभौ प्रियाप्रिये।
इति चैकोनविंशोऽयं द्वन्द्वयोग इति स्मृतः ॥ ८९ ॥

ऊर्ध्वं चैकोनविंशत्या कालो नामापरो गुणः।
इतीमं विद्धि विंशत्या भूतानां प्रभवाप्ययम् ॥ २५९० ॥

विंशकश्चैष सङ्घातो महाभूतानि पञ्च च।
सदसद्भावयोगौ तु गुणावन्यौ प्रकाशकौ ॥ ९१ ॥

इत्येवं विंशकश्चैव गुणाः सप्त च ये स्मृताः।
विधिः शुक्रं बलं चेति त्रय एते गुणाः परे ॥ ९२ ॥

विंशतिर्दश चैव हि गुणा सङ्ख्यानत· स्मृताः।
समग्रा यत्र वर्तन्ते तच्छरीरमिति स्मृतम् ॥ ९३ ॥

अव्यक्तं प्रकृतिं त्वासा कलानां कश्चिदिच्छति।
व्यक्तं चासां तथा चान्य· स्थूलदर्शी प्रपश्यति ॥ ९४ ॥

अव्यक्तं यदि वा व्यक्तं द्वयीमथ चतुष्टयीम्।
प्रकृतिं सर्वभूतानां पश्यन्त्यध्यात्मचिन्तका· ॥ ९५ ॥

येयं प्रकृतिरव्यक्ता कलाभिर्व्यक्ततां गता।
अहं च त्वं च राजेन्द्र ये चाप्यन्ये शरीरिणः ॥ ९६ ॥

बिन्दुन्यासादयोऽवस्था· शुक्रशोणितसंभवाः।
यासामेव निपातेन कललं नाम जायते ॥ ९७ ॥

कललाद्बुद्बुदोत्पत्ति· पेशी च बुद्बुदात् स्मृता।
पेश्यास्त्वङ्गाभिनिर्वृत्तिर्नखरोमाणि चाङ्गतः ॥ ९८ ॥

संपूर्णे नवमे मासि जन्तोर्जातस्य मैथिल।
जायते नामरूपत्वं स्त्री पुमान् वेति लिङ्गतः ॥ ९९ ॥

जातमात्रं तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि।
कौमारं रूपमापन्नं रूपतो नोपलभ्यते ॥ २६०० ॥

कौमाराद्यौवनं चापि स्थाविर्यं चापि यौवनात्।
अनेन क्रमयोगेन पूर्वं पूर्वं न लभ्यते ॥ १ ॥

कलानां पृथगर्थाना प्रतिभेदः क्षणे क्षणे।
वर्तते सर्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते ॥ २ ॥

न चैषामत्ययो राजन् लक्ष्यते प्रभवो न च।
अवस्थायामवस्थायां दीपस्येवार्चिषो गतिः ॥ ३ ॥

तस्याप्येवं प्रभावस्य सदश्वस्येव धावतः।
अजस्रं सर्वलोकस्य कः कुतो वा न वा कुतः ॥ ४ ॥

कस्येदं कस्य वा नेदं कुतो वेदं न वा कुतः।
सम्बन्धः कोऽस्ति भूतानां स्वैरप्यवयवैरिह ॥ ५ ॥

यथाऽऽदित्यान्मणेश्चापि वीरुद्भ्यश्चैव पावकः।
जायन्त्येव समुदयात्कलानामिव जन्तवः॥ ६॥

आत्मन्येवात्मनाऽऽत्मानं यथा त्वमनुपश्यसि।

एवमेवात्मनाऽऽत्मानं यथा त्वमनुपश्यसि।
एवमेवात्मनात्मानमन्यस्मिन् किं न पश्यसि॥ ७॥

यद्यात्मनि परस्मिंश्च समतामध्यवस्यसि।
अथ मा काऽसि कस्येति किमर्थमनुपृच्छसि॥ ८॥

इदं मे स्यादिदं नेति द्वन्द्वैर्मुक्तस्य मैथिल।
काऽसि कस्य कुतो वेति वचनैः किं प्रयोजनम्॥ ९॥

रिपौ मित्रेऽथ मध्यस्थे विजये सन्धिविग्रहे।
कृतवान् यो महीपाल किं तस्मिन्मुक्तलक्षणम्॥ २६१०॥

त्रिवर्गं सप्तधा व्यक्तं यो न वेदेह कर्मसु।
सङ्गवान् यस्त्रिवर्गेण किं तस्मिन्मुक्तलक्षणम्॥ ११॥

प्रिये वाऽप्यप्रिये वापि दुर्बले बलवत्यपि।
यस्य नास्ति समं चक्षुः किं तस्मिन्मुक्तलक्षणम्॥ १२॥

तद्युक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप।
सुहृद्भिः संनिवार्यस्तेऽविरक्तस्येव भेषजम्॥ १३॥

तानि तानि तु सञ्चिन्त्य सङ्गस्थानान्यरिन्दम।
आत्मनाऽऽत्मनि संपश्येत्किमन्यन्मुक्तलक्षणम्॥ १४॥

इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य कानिचित्।
चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु॥ १५॥

य इमां पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति ह।
एक एव स वै राजा पुरमध्यावसत्युत॥ १६॥

तत्पुरे चैकमेवास्य गृहं यदधितिष्ठति।
गृहे शयनमप्येकं निशायां यत्र लीयते॥ १७॥

शय्यार्थं तस्य चाप्यत्र स्त्री पूर्वमधितिष्ठति ।
तदनेन प्रसङ्गेन फलेनैवेह युज्यते ॥ १८ ॥

एवमेवोपभोगेषु भोजनाच्छादनेषु च ।
गुणेषु परिमेयेषु निग्रहानुग्रहं प्रति ॥ १९ ॥

परतन्त्रः सदा राजा स्वल्पेष्वपि प्रसज्जते ।
सन्धिविग्रहयोगे च कुतो राज्ञः स्वतन्त्रता ॥ २६२० ॥

स्त्रीषु क्रीडाविहारेषु नित्यमस्यास्वतन्त्रता ।
मन्त्रे चामात्यसमितौ कुतस्तस्य स्वतन्त्रता ॥ २१ ॥

यदा ह्याज्ञापयत्यन्यांस्तत्रास्योक्ता स्वतन्त्रता ।
अवशः कार्यते तत्र तस्मिंस्तस्मिन् क्षणे स्थितः ॥ २२ ॥

स्वप्नकामो न लभते स्वप्तुं कार्यार्थिभिर्जनैः ।
शयने चाप्यनुज्ञातः सुप्त उत्थाप्यतेऽवशः ॥ २३ ॥

स्नाह्यालभ पिब प्राश जुहुध्यग्नीन्यजेत्यपि ।
ब्रवीहि शृणु चापीति विवशः कार्यते परैः ॥ २४ ॥

अभिगम्याभिगम्यैवं याचन्ते सततं नराः ।
न चाप्युत्सहते दातुं वित्तरक्षी महाजनान् ॥ २५ ॥

दाने कोषक्षयोऽप्यस्य वैरं चास्याप्रयच्छतः ।
क्षणेनास्योपवर्तन्ते दोषा वैराग्यकारकाः ॥ २६ ॥

प्राज्ञान् शूरांस्तथैवाढ्यानेकस्थानपि शङ्कते ।
भयमप्यभये राज्ञो यैश्च नित्यमुपास्यते ॥ २७ ॥

तथा चैते प्रदुष्यन्ति राजन् ये कीर्तिता मया ।
तथैवास्य भयं तेभ्यो जायते पश्य यादृशम् ॥ २८ ॥

सर्वः स्वे स्वे गृहे राजा सर्वः स्वे स्वे गृहे गृही ।
निग्रहानुग्रहान् कुर्वंस्तुल्यो जनक राजभिः ॥ २९ ॥

पुत्रा दारास्तथैवात्मा कोशो मित्राणि सञ्चयाः ।
परैः साधारणा ह्येते तैस्तैरेवास्य हेतुभिः ॥ २६३० ॥

हतो देशः पुरं दग्धं प्रधानः कुञ्जरो मृतः।
लोकसाधारणेष्वेषु मिथ्याज्ञानेन तप्यते ॥ ३१ ॥

अमुक्तो मानसैर्दुःखैरिच्छाद्वेषभयोद्भवैः।
शिरोरोगादिभी रोगैस्तथैवाभिनियन्तृभिः ॥ ३२ ॥

द्वन्द्वैस्तैस्तैस्त्वपहतः सर्वतः परिशङ्कितः।
बहुप्रत्यर्थिकं राज्यमुपास्ते गणयन्निशाः ॥ ३३ ॥

तदल्पसुखमत्यर्थं बहुदुःखमसारवत्।
तृणाग्निज्वलनप्रख्यं फेनबुद्बुदसन्निभम्।
को राज्यमभिपद्येत प्राप्य चोपशमं लभेत् ॥ ३४ ॥

ममेदमिति यच्चेदं पुरं राष्ट्रं च मन्यसे।
बलं कोशममात्यांश्च कस्यैतानि न वा नृप ॥ ३५ ॥

मित्रामात्यपुरं राष्ट्रं दण्डः कोशो महीपतिः।
सप्ताङ्गस्यास्य राज्यस्य त्रिदण्डस्येव तिष्ठतः।
अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः ॥ ३६ ॥

तेषु तेषु हि कालेषु तत्तदङ्गं विशिष्यते।
येन यत्सिध्यते कार्यं तत्प्राधान्याय कल्पते ॥ ३७ ॥

सप्ताङ्गश्चैव सङ्घातस्त्रयश्चान्ये नृपोत्तम।
संभूय दशवर्गोऽयं भुङ्क्ते राज्यं हि राजवत् ॥ ३८ ॥

यश्च राजा महोत्साहः क्षत्रधर्मे रतो भवेत्।
स तुष्येद्दशभागेन ततस्त्वन्यो दशावरैः ॥ ३९ ॥

नास्त्यसाधारणो राजा नास्ति राज्यमराजकम्।
राज्येऽसति कुतो धर्मो धर्मेऽसति कुतः परम् ॥ २६४० ॥

योऽप्यत्र परमो धर्मः पवित्रं राजराज्ययोः।
पृथिवी दक्षिणा यस्य सोऽश्वमेधो न युज्यते ॥ ४१ ॥

साऽहमेतानि कर्माणि राजदुःखानि मैथिल।
समर्था शतशो वक्तुमथवाऽपि सहस्रशः ॥ ४२ ॥

स्वदेहे नाभिषङ्गो मे कुतः परपरिग्रहे।
न मामेवंविधां युक्तामीदृशं वक्तुमर्हसि ॥ ४३ ॥

ननु नाम त्वया मोक्षः कृत्स्नः पञ्चशिखाच्छ्रुतः।
सोपायः सोपनिषदः सोपासङ्गः सनिश्चयः ॥ ४४ ॥

तस्य ते मुक्तसङ्गस्य पाशानाक्रम्य तिष्ठतः।
छत्रादिषु विशेषेषु पुनः सङ्गः कथं नृप ॥ ४५ ॥

श्रुतं ते न श्रुतं मन्ये मृषा वापि श्रुतं श्रुतम्।
अथवा श्रुतसङ्काशं श्रुतमन्यच्छ्रुतं त्वया ॥ ४६ ॥

अथापीमासु संज्ञासु लौकिकीषु प्रतिष्ठसे।
अभिषङ्गावरोधाभ्यां बद्धस्त्वं प्राकृतो यथा ॥ ४७ ॥

सत्त्वेनानुप्रवेशो हि योऽयं त्वयि कृतो मया।
किं तवापकृतं तत्र यदि मुक्तोऽसि सर्वशः ॥ ४८ ॥

नियमो ह्येषु वर्णेषु यतीनां शून्यवासिता।
शून्यमावेशयन्त्या च मया किं कस्य दूषितम् ॥ ४९ ॥

न पाणिभ्यां न बाहुभ्यां पादोरुभ्यां न चानघ।
न गात्रावयवैरन्यैः स्पृशामि त्वां नराधिप। ॥ २६५० ॥

कुले महति जातेन ह्रीमता दीर्घदर्शिना।
नैतत्सदसि वक्तव्यं सद्वाऽसद्वा मिथः कृतम् ॥ ५१ ॥

ब्राह्मणा गुरवश्चेमे तथा मान्या गुरूत्तमाः।
त्वं चाथ गुरुरप्येषामेवमन्योन्यगौरवम् ॥ ५२ ॥

तदेवमनुसन्दृश्य वाच्यावाच्यं परीक्षता।
स्त्रीपुंसोः समवायोऽयं त्वया वाच्यो न संसदि ॥ ५३ ॥

यथापुष्करपर्णस्थं जलं तत्पर्णमस्पृशत्।
तिष्ठत्यस्पृशती तद्वत्त्वयि वत्स्यामि मैथिल ॥ ५४ ॥

यदि चाद्य स्पृशन्त्या मे स्पर्शं जानासि कञ्चन।
ज्ञानं कृतमबीजं ते कथं तेनेह भिक्षुणा ॥ ५५ ॥

स गार्हस्थ्याच्च्युतश्च त्वं मोक्ष चानाप्य दुर्विदम्।
उभयोरन्तराले वै वर्तसे मोक्षवार्तिक' ॥ ५६ ॥

न हि मुक्तस्य मुक्तेन ज्ञस्यैकत्वपृथक्त्वयोः।
भावाभावसमायोगे जायते वर्णसङ्करः ॥ ५७ ॥

वर्णाश्रमाः पृथक्त्वेन दृष्टार्थस्यापृथक्त्विन.।
नान्यदन्यदिति ज्ञात्वा नान्यदन्यत्र वर्तते ॥ ५८ ॥

पाणौ कुण्ड तथा कुण्डे पय. पयसि मक्षिका।
आश्रिताश्रययोगेन पृथक्त्वेनाश्रिता. पुनः ॥ ५९ ॥

न तु कुण्डे पयोभाव पयश्चापि न मक्षिका।
स्वयमेवाप्नुवन्त्येते भावा न तु पराश्रयम् ॥ २६६० ॥

पृथक्त्वादाश्रमाणां च वर्णान्यत्वे तथैव च।
परस्परपृथक्त्वाच्च कथं ते वर्णसङ्कर. ॥ ६१ ॥

नास्मि वर्णोत्तमा जात्या न वैश्या नावरा तथा।
तव राजन् सवर्णाऽस्मि शुद्धयोनिरविप्लुता ॥ ६२ ॥

प्रधानो नाम राजर्षिर्व्यक्त ते श्रोत्रमागत.।
कुले तस्य समुत्पन्ना सुलभा नाम विद्धि माम् ॥ ६३ ॥

द्रोणश्च शतशृङ्गश्च चक्रद्वारश्च पर्वत.।
मम सत्रेषु पूर्वेषां चिता मघवता सह ॥ ६४ ॥

साहं तस्मिन् कुले जाता भर्तर्यसति मद्विधे।
विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥ ६५ ॥

नास्मि सत्रप्रतिच्छन्ना न परस्वापहारिणी।
न धर्मसङ्करकरी स्वधर्मेऽस्मि धृतव्रता ॥ ६६ ॥

नास्थिरा स्वप्रतिज्ञायां नासमीक्ष्य प्रवादिनी।
नासमीक्ष्यागता चेह त्वत्सकाशं जनाधिप ॥ ६७ ॥

मोक्षे ते भावितां बुद्धिं श्रुत्वाऽहं कुशलैषिणी।
तव मोक्षस्य चाप्यस्य जिज्ञासार्थमिहागता ॥ ६८ ॥

न वर्गस्था ब्रवीम्येतत्स्वपक्षपरपक्षयोः ।
मुक्तो व्यायच्छते यश्च शान्तौ यश्च न शाम्यति ॥ ६९ ॥

यथा शून्ये पुरागारे भिक्षुरेकां निशां वसेत् ।
तथाऽहं त्वच्छरीरेऽस्मिन्निमां वत्स्यामि शर्वरीम् ॥ २६७० ॥

साऽहं मानप्रदानेन वागातिथ्येन चार्चिता ।
सुप्ता सुशरणं प्रीता श्वो गमिष्यामि मैथिल ॥ ७१ ॥

भीष्म०– इत्येतानि स वाक्यानि हेतुमन्त्यर्थवन्ति च ।
श्रुत्वा नाधिजगौ राजा किञ्चिदन्यदतःपरम् ॥ २६७२ ॥

आदिपर्वत श्लोकाः ॥ १३४६८ ॥

॥ इति श्रीमहाभारतसारे शान्तिपर्व समाप्तम् ॥

---

# महाभारतसारः

## १३. अनुशासनपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

### दानधर्माः, कर्मणः प्राबल्यम्

(अ. १) शमो बहुविधाकारः सूक्ष्म उक्तः पितामह।
युधि०– स्वकृते का नु शान्तिः स्याच्छमाद्बहुविधादपि ॥ १ ॥
रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलम्।
त्वा दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम् ॥ २ ॥
इदं तु धार्तराष्ट्रस्य श्रेयो मन्ये जनाधिप।
इमामवस्थां सप्राप्तं यदसौ त्वां न पश्यति ॥ ३ ॥
सोऽहं तव ह्यन्तकरः सुहृद्वधकरस्तथा।
न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ ॥ ४ ॥
अन्यस्मिन्नपि लोके वै यथा मुच्येम किल्बिषात्।
तथा प्रशाधि मां राजन् मम चेदिच्छसि प्रियम् ॥ ५ ॥
भीष्म०– परतन्त्रं कथं हेतुमात्मानमनुपश्यसि।
कर्मणां हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ॥ ६ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ॥ ७ ॥
गौतमी नाम कौन्तेय स्थविरा शमसंयुता।
सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम् ॥ ८ ॥
अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः।
लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत् ॥ ९ ॥

स चाब्रवीदयं ते स पुत्रहा पन्नगाधमः।
ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना ॥ १० ॥

अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोऽपि वा।
न ह्ययं बालहा पापश्चिरं जीवितुमर्हति ॥ ११ ॥

गौतमी०-विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक त्वया।
को ह्यात्मानं गुरुं कुर्यात् प्राप्तव्यमविचिन्तयन् ॥ १२ ॥

प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः।
मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥ १३ ॥

लुब्धक०- जानाम्यहं देवि गुणागुणज्ञे
सर्वार्तियुक्ता गुरवो भवन्ति।
स्वस्थस्यैते तूपदेशा भवन्ति
तस्मात्क्षुद्रं सर्पमेनं हनिष्ये ॥ १४ ॥

अस्मादेकाद्बहवो रक्षितव्या
नैको बहुभ्यो गौतमि रक्षितव्यः।
कृतागसं धर्मविदस्त्यजन्ति
सरीसृपं पापमिमं जहि त्वम् ॥ १५ ॥

भीष्म०- असकृत्प्रोच्यमानापि गौतमी भुजगं प्रति।
लुब्धकेन महाभागा पापे नैवाकरोन्मतिम् ॥ १६ ॥

सर्प०- को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश।
अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् ॥ १७ ॥

तस्यायं वचनाद्दष्टो न कोपेन न काम्यया।
तस्य तत्किल्बिषं लुब्ध विद्यते यदि किल्बिषम् ॥ १८ ॥

भीष्म०- तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते।
आजगाम ततो मृत्युः पन्नगं चाब्रवीदिदम् ॥ १९ ॥

मृत्यु०- प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम्।
विनाशहेतुर्नास्य त्वमहं न प्राणिनः शिशोः ॥ २० ॥

भीष्म०— सर्पोऽथार्जुनकं प्राह श्रुतं ते मृत्युभाषितम्।
नानागसं मां पाशेन सन्तापयितुमर्हसि ॥ २१ ॥

लुब्धक०—मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम।
नैव तावददोषत्वं भवति त्वयि पन्नग ॥ २२ ॥

मृत्युस्त्वं चैव हेतुर्हि वालस्यास्य विनाशने।
उभयं कारणं मन्ये न कारणमकारणम् ॥ २३ ॥

भीष्म०— अथोपगम्य कालस्तु तस्मिन् धर्मार्थसंशये।
अब्रवीत्पन्नगं मृत्युं लुब्धं चार्जुनकं तथा ॥ २४ ॥

काल०— न ह्ययं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः।
किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः ॥ २५ ॥

अकरोद्यदयं कर्म तन्नोऽर्जुनक चोदकम्।
विनाशहेतुर्नान्योऽस्य वध्यतेऽयं स्वकर्मणा ॥ २६ ॥

यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ २७ ॥

यथा छायातपौ नित्यं सुसम्बद्धौ निरन्तरम्।
तथा कर्म च कर्ता च संबद्धावात्मकर्मभिः ॥ २८ ॥

तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप।
स्वकर्मप्रत्ययाँल्लोकान् मत्वाऽर्जुनकमब्रवीत् ॥ २९ ॥

नैव कालो न भुजगो न मृत्युरिह कारणम्।
स्वकर्मभिरयं वालः कालेन निधनं गतः ॥ ३० ॥

मया च तत्कृतं कर्म येनायं मे मृतः सुतः।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगम् ॥ ३१ ॥

भीष्म०— ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः।
अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी ॥ ३२ ॥

एतच्छ्रुत्वा शमं गच्छ मा भूः शोकपरो नृप।
स्वकर्मप्रत्ययाँल्लोकान् सर्वे गच्छन्ति वै नृप ॥ ३३ ॥

नैव त्वया कृत कर्म नापि दुर्योधनेन वै।
कालेनैतत्कृत विद्धि निहता येन पार्थिवाः॥ ३४॥
इत्येतद्वचनं श्रुत्वा बभूव विगतज्वर.।
युधिष्ठिरो महातेजाः पप्रच्छेदं च धर्मवित्॥ ३५॥
(अ २) भूयस्तु श्रोतुमिच्छामि धर्मार्थसहितं नृप।
युधि०– कथ्यमानं त्वया किञ्चित्तन्मे व्याख्यातुमर्हसि॥ ३६॥
भीष्म०– गृहस्थस्य हि धर्मोऽग्र्यः संप्राप्तातिथिपूजनम्॥ ३७॥
अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः॥ ३८॥
तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै।
ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय॥ ३९॥
अतिथि· पूजितो यद्धि ध्यायते मनसा शुभम्।
न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः॥ ४०॥
पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत्।
स दत्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति॥ ४१॥

## विश्वामित्रस्य ब्रह्मर्षित्वम्

(अ. ३) ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैर्नराधिप।
युधि०– कथं प्राप्तं महाराज क्षत्रियेण महात्मना॥ ४२॥
विश्वामित्रेण धर्मात्मन् ब्राह्मणत्वं नरर्षभ।
श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह॥ ४३॥
(अ ४) कुशिकस्यात्मजः श्रीमान् गाधिर्नाम जनेश्वरः।
भीष्म०– अपुत्र· प्रसवेनार्थी वनवासमुपावसत्॥ ४४॥
कन्या जज्ञे सुतात्तस्य वने निवसतः सतः।
नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि॥ ४५॥
तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मसंभवः।
ऋचीक इति विख्यातो विपुले तपसि स्थितः॥ ४६॥

स तां न प्रददौ तस्मै ऋचीकाय महात्मने।
दरिद्र इति मत्वा वै गाधिः शत्रुनिवर्हणः ॥ ४७ ॥

प्रत्याख्याय पुनर्यान्तमब्रवीद्राजसत्तमः।
शुल्कं प्रदीयतां मह्य ततो वत्स्यसि मे सुताम् ॥ ४८ ॥

चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम्।
एकतः श्यामकर्णानां सहस्र देहि भार्गव ॥ ४९ ॥

ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः।
अब्रवीद्वरुणं देवमादित्यं पतिमम्भसाम् ॥ ५० ॥

एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम्।
सहस्रं वातवेगाना भिक्षे त्वा देवसत्तम ॥ ५१ ॥

तथेति वरुणो देव आदित्यो भृगुसत्तमम्।
उवाच यत्र ते छन्दस्तत्रोत्थास्यन्ति वाजिनः ॥ ५२ ॥

ध्यातमात्रं ऋचीकेन हयानां चन्द्रवर्चसाम्।
गङ्गाजलात्समुत्तस्थौ सहस्रं विपुलौजसाम् ॥ ५३ ॥

अदूरे कान्यकुब्जस्य गङ्गायास्तीरमुत्तमम्।
अश्वतीर्थं तदद्यापि मानवैः परिचक्ष्यते ॥ ५४ ॥

ततो वै गाधये तात सहस्रं वाजिनां शुभम्।
ऋचीकः प्रददौ प्रीतः शुल्कार्थं तपतां वरः ॥ ५५ ॥

ततः स विस्मितो राजा गाधिः शापभयेन च।
ददौ तां समलङ्कृत्य कन्यां भृगुसुताय वै ॥ ५६ ॥

जग्राह विधिवत्पाणिं तस्या ब्रह्मर्षिसत्तमः।
सा च तं पतिमासाद्य परं हर्षमवाप ह ॥ ५७ ॥

स तुतोष च ब्रह्मर्षिस्तस्या वृत्तेन भारत।
छन्दयामास चैवैना वरेण वरवर्णिनीम् ॥ ५८ ॥

मात्रे तत्सर्वमाचख्यौ सा कन्या राजसत्तम।
अथ तामब्रवीन्माता सुतां किञ्चिदवाङ्मुखीम् ॥ ५९ ॥

ममापि पुत्रि भर्ता ते प्रसादं कर्तुमर्हति ।
अपत्यस्य प्रदानेन समर्थश्च महातपाः ॥ ६० ॥
ततः सा त्वरितं गत्वा तत्सर्वं प्रत्यवेदयत् ।
मातुश्चिकीर्षितं राजन् ऋचीकस्तामथाब्रवीत् ॥ ६१ ॥
गुणवन्तमपत्यं सा अचिराज्जनयिष्यति ।
मम प्रसादात्कल्याणि माऽभूत्ते प्रणयोऽन्यथा ॥ ६२ ॥
तव चैव गुणश्लाघी पुत्र उत्पत्स्यते महान् ।
अस्मद्वंशकरः श्रीमान् सत्यमेतद्ब्रवीमि ते ॥ ६३ ॥
ऋतुस्नाता च साऽश्वत्थं त्वं च वृक्षमुदुम्बरम् ।
परिष्वजेथाः कल्याणि तत एवमवाप्स्यथः ॥ ६४ ॥
चरुद्वयमिदं चैव मन्त्रपूतं शुचिस्मिते ।
त्वं च सा चोपभुञ्जीत ततः पुत्राववाप्स्यथः ॥ ६५ ॥
ततः सत्यवती हृष्टा मातरं प्रत्यभाषत ।
यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् ॥ ६६ ॥
तामुवाच ततो माता सुतां सत्यवतीं तदा ।
पुत्रि पूर्वोपपन्नायाः कुरुष्व वचनं मम ॥ ६७ ॥
भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः ।
एतं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ॥ ६८ ॥
व्यत्यासं वृक्षयोश्चापि करवाव शुचिस्मिते ।
यदि प्रमाणं वचनं मम मातुरनिन्दिते ॥ ६९ ॥
स्वमपत्यं विशिष्टं हि सर्व इच्छत्यनाविलम् ।
व्यक्तं भगवता चात्र कृतमेवं भविष्यति ॥ ७० ॥
ततो मे त्वच्चरौ भावः पादपे च सुमध्यमे ।
कथं विशिष्टो भ्राता मे भवेदित्येव चिन्तय ॥ ७१ ॥
तथा च कृतवत्यौ ते माता सत्यवती च सा ।
अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ॥ ७२ ॥

दृष्ट्वा गर्भमनुप्राप्ता भार्या स च महानृषि.।
उवाच तां सत्यवतीं दुर्मना भृगुसत्तम.॥ ७३॥
व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति।
व्यत्यासः पादपे चापि सुव्यक्तं ते कृत' शुभे॥ ७४॥
मया हि विश्वं यद्ब्रह्म त्वच्चरौ सन्निवेशितम्।
क्षत्रवीर्यं च सकलं चरौ तस्या निवेशितम्॥ ७५॥
व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा च ते शुभे।
तस्मात् सा ब्राह्मणं श्रेष्ठं माता ते जनयिष्यति॥ ७६॥
क्षत्रियं तूग्रकर्माणं त्वं भद्रे जनयिष्यसि।
न हि ते तत्कृतं साधु मातृस्नेहेन भाविनि॥ ७७॥
सा श्रुत्वा शोकसन्तप्ता पपात वरवर्णिनी।
भूमौ सत्यवती राजञ्छिन्नेव रुचिरा लता॥ ७८॥
प्रतिलभ्य च सा संज्ञां शिरसा प्रणिपत्य च।
उवाच भार्या भर्तारं गाधेयी भार्गवर्षभम्॥ ७९॥
प्रसादयन्त्यां भार्यायां मयि ब्रह्मविदां वर।
प्रसादं कुरु विप्रर्षे न मे स्यात् क्षत्रिय. सुत.॥ ८०॥
कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति।
न तु मे स्यात्सुतो ब्रह्मन्नेष मे दीयतां वरः॥ ८१॥
एवमस्त्विति होवाच स्वां भार्यां सुमहातपाः।
तत. सा जनयामास जमदग्निं सुतं शुभम्॥ ८२॥
विश्वामित्रं चाजनयद्गाधिभार्या यशस्विनी।
ऋषे. प्रसादाद्राजेन्द्र ब्रह्मर्षेर्ब्रह्मवादिनम्॥ ८३॥
ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः।
क्षत्रिय. सोप्यथ तथा ब्रह्मवंशस्य कारक.॥ ८४॥
विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः।
तथैव क्षत्रियो राजन् विश्वामित्रो महातपाः।
ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर॥ ८५॥

## शुकवासवसंवादः, दैवपुरुषकारविचारः

(अ. ५) आनृशंस्यस्य धर्मज्ञ गुणान् भक्तजनस्य च ।
युधि०– श्रोतुमिच्छामि धर्मज्ञ तन्मे ब्रूहि पितामह ॥ ८६ ॥
भीष्म०– अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासवस्य च संवाद शुकस्य च महात्मनः ॥ ८७ ॥

विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः ।
सविषं काण्डमादाय मृगयामास वै मृगम् ॥ ८८ ॥

तत्र चामिषलुब्धेन लुब्धकेन महावने ।
अविदूरे मृगान् दृष्ट्वा बाणः प्रतिसमाहितः ॥ ८९ ॥

तेन दुर्वारितास्त्रेण निमित्तचपलेषुणा ।
महान् वनतरुस्तत्र विद्धो मृगजिघांसया ॥ ९० ॥

स तीक्ष्णविषदिग्धेन शरेणातिबलात्क्षतः ।
उत्सृज्य फलपत्राणि पादपः शोषमागतः ॥ ९१ ॥

तस्मिन्वृक्षे तथाभूते कोटरेषु चिरोषितः ।
न जहाति शुको वासं तस्य भक्त्या वनस्पतेः ॥ ९२ ॥

निष्प्रचारो निराहारो ग्लानः शिथिलवागपि ।
कृतज्ञः सह वृक्षेण धर्मात्मा सोऽप्यशुष्यत ॥ ९३ ॥

ततो ब्राह्मणवेषेण मानुषं रूपमास्थित ।
अवतीर्य महीं शक्रस्त पक्षिणमुवाच ह ॥ ९४ ॥

शुक भोः पक्षिणां श्रेष्ठ दाक्षेयी सुप्रजा त्वया ।
पृच्छे त्वां शुकमेनं त्वं कस्मान्न त्यजसि द्रुमम् ॥ ९५ ॥

अथ पृष्टः शुकः प्राह मूर्ध्ना समभिवाद्य तम् ।
स्वागतं देवराज त्वं विज्ञातस्तपसा मया ॥ ९६ ॥

तमेवं शुभकर्माणं शुकं परमधार्मिकम् ।
विजानन्नपि ता प्रीतिं पप्रच्छ बलसूदनः ॥ ९७ ॥

निष्पत्रमफलं शुष्कमशरण्यं पतत्रिणाम्।
किमर्थं सेवसे वृक्षं यदा महदिदं वनम् ॥ ९८ ॥

तदुपश्रुत्य धर्मात्मा शुकः शक्रेण भाषितम्।
सुदीर्घमतिनिःश्वस्य दीनो वाक्यमुवाच ह ॥ ९९ ॥

अनतिक्रमणीयानि दैवतानि शचीपते।
यत्राभवत्तव प्रश्नस्तन्निबोध सुराधिप ॥ १०० ॥

अस्मिन्नहं द्रुमे जातः साधुभिश्च गुणैर्युतः।
बालभावेन सङ्गुप्तः शत्रुभिश्च न धर्षितः ॥ १०१ ॥

किमनुक्रोश्य वैफल्यमुत्पादयसि मेऽनघ।
आनृशंस्याभियुक्तस्य भक्तस्यानन्यगस्य च ॥ १०२ ॥

अनुक्रोशो हि साधूनां महद्धर्मस्य लक्षणम्।
अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति ॥ १०३ ॥

अतस्त्वं देवदेवानामाधिपत्ये प्रतिष्ठितः।
नार्हसे मां सहस्राक्ष द्रुम त्याजयितुं चिरात् ॥ १०४ ॥

समर्थमुपजीव्येमं त्यजेयं कथमद्य वै ॥ १०५ ॥

तस्य वाक्येन सौम्येन हर्षितः पाकशासनः।
विदित्वा च दृढां भक्तिं तां शुके शीलसम्पदम्।
प्रीतः क्षिप्रमथो वृक्षममृतेनावसिक्तवान् ॥ १०६ ॥

ततः फलानि पत्राणि शाखाश्चापि मनोहराः।
शुकस्य दृढभक्तित्वाच्छ्रीमत्तां प्राप स द्रुमः ॥ १०७ ॥

शुकश्च कर्मणा तेन आनृशंस्यकृतेन वै।
आयुषोऽन्ते महाराज प्राप शक्रसलोकताम् ॥ १०८ ॥

एवमेव मनुष्येन्द्र भक्तिमन्तं समाश्रितः।
सर्वार्थसिद्धिं लभते शुकं प्राप्य यथा द्रुमः ॥ १०९ ॥

(अ. ६) पितामह महाप्राज्ञ सर्वशास्त्रविशारद।
युधि०— दैवे पुरुषकारे च किंस्विच्छ्रेष्ठतरं भवेत् ॥ ११० ॥

भीष्म०— नाबीजं जायते किञ्चिन्न बीजेन विना फलम्।
बीजाद्बीजं प्रभवति बीजादेव फलं स्मृतम् ॥ १११ ॥

यादृशं वपते बीजं क्षेत्रमासाद्य कर्षकः।
सुकृते दुष्कृते वापि तादृशं लभते फलम्॥ ११२॥
यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम्।
तथा पुरुषकारेण विना दैवं न सिद्ध्यति॥ ११३॥
क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम्।
क्षेत्रबीजसमायोगात्ततः सस्यं समृद्ध्यते॥ ११४॥
कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः।
प्रत्यक्षं दृश्यते लोके कृतस्यापकृतस्य च॥ ११५॥
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा।
कृतं फलति सर्वत्र नाकृतं भुज्यते क्वचित्॥ ११६॥
कृती सर्वत्र लभते प्रतिष्ठां भाग्यसंयुताम्।
अकृती लभते भ्रष्टः क्षते क्षारावसेचनम्॥ ११७॥
ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः।
सर्वे पुरुषकारेण मानुष्याद्देवता गताः॥ ११८॥
अकृत्वा मानुषं कर्म यो दैवमनुवर्तते।
वृथा श्राम्यति संप्राप्य पतिं क्लीबमिवाङ्गना॥ ११९॥
कृतः पुरुषकारस्तु दैवमेवानुवर्तते।
न दैवमकृते किञ्चित्कस्यचिद्दातुमर्हति॥ १२०॥
यथाऽग्निः पवनोध्दूतः सुसूक्ष्मोऽपि महान् भवेत्।
तथा कर्मसमायुक्तं दैवं साधु विवर्धते॥ १२१॥
यथा तैलक्षयाद्दीपः प्रह्लासमुपगच्छति।
तथा कर्मक्षयाद्दैवं प्रह्लासमुपगच्छति॥ १२२॥

विपुलमपि धनौघं प्राप्य भोगान् स्त्रियो वा
पुरुष इह न शक्तः कर्महीनो हि भोक्तुम्।
सुनिहितमपि चार्थं दैवतैः रक्ष्यमाणं
पुरुष इह महात्मा प्राप्नुते नित्ययुक्तः॥ १२३॥

## श्रीरुक्मिणीसंवादः, लोकयात्राकथनम्

(अ. ११) कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ।
युधि०— श्री॰ पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥ १२४ ॥

भीष्म— अत्र ते वर्णयिष्यामि यथावृत्तं यथाश्रुतम्।
रुक्मिणी देवकीपुत्रसन्निधौ पर्यपृच्छत ॥ १२५ ॥

नारायणस्याङ्कगतां ज्वलन्ती
दृष्ट्वा श्रियं पद्मसमानवर्णाम्।
कौतूहलाद्विस्मितचारुनेत्रा
प्रपच्छ माता मकरध्वजस्य ॥ १२६ ॥

कानीह भूतान्युपसेवसे त्वं
सन्तिष्ठसे कानिव सेवसे त्वम्।
तानि त्रिलोकेश्वरभूतकान्ते
तत्त्वेन मे ब्रूहि महर्षिकल्पे ॥ १२७ ॥

श्री०— वसामि नित्यं सुभगे प्रगल्भे
दक्षे नरे कर्मणि वर्तमाने।
अक्रोधने देवपरे कृतज्ञे
जितेन्द्रिये नित्यमुदीर्णसत्त्वे ॥ १२८ ॥

नाकर्मशीले पुरुषे वसामि
न नास्तिके साङ्करिके कृतघ्ने।
न भिन्नवृत्ते न नृशंसवर्णे
न चापि चौरे न गुरुष्वसूये ॥ १२९ ॥

स्वधर्मशीलेषु च धर्मवित्सु
वृद्धोपसेवानिरते च दान्ते।
कृतात्मनि क्षान्तिपरे समर्थे
क्षान्तासु दान्तासु तथाऽबलासु।
सत्यस्वभावार्जवसंयुतासु
वसामि देवद्विजपूजिकासु ॥ १३० ॥

प्रकीर्णभाण्डामनपेक्ष्यकारिणीं
सदा च भर्तुः प्रतिकूलवादिनीम्।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां ता परिवर्जयामि ॥ १३१ ॥

पापामचोक्षामवलेहिनीं च
व्यपेतधैर्यां कलहप्रियां च।
निद्राभिभूतां सततं शयाना-
मेवंविधां तां परिवर्जयामि ॥ १३२ ॥

सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु गुणान्वितासु।
वसामि नारीषु पतिव्रतासु
कल्याणशीलासु विभूषितासु ॥ १३३ ॥

वसामि फुल्लासु च पद्मिनीषु
नदीषु हंसस्वननादितासु।
मत्ते गजे गोवृषभे नरेन्द्रे
सिंहासने सत्पुरुषेषु नित्यम् ॥ १३४ ॥

यस्मिन् जनो हव्यभुजं जुहोति
गोब्राह्मणं चार्चति देवताश्च।
काले च पुष्पैर्बलयः क्रियन्ते
तस्मिन् गृहे नित्यमुपैमि वासम् ॥ १३५ ॥

स्वाध्यायनित्येषु सदा द्विजेषु
क्षत्रे च धर्माभिरते सदैव।
वैश्ये च कृष्याभिरते वसामि
शूद्रे च शुश्रूषणनित्ययुक्ते ॥ १३६ ॥

नारायणे त्वेकमना वसामि
सर्वेण भावेन शरीरभूता।

तस्मिन् हि धर्मः सुमहान्निविष्टो
ब्रह्मण्यता चात्र तथा प्रियत्वम् ॥ १३७ ॥

नाहं शरीरेण वसामि देवि
नैवं मया शक्यमिहाभिधातुम् ।
भावेन यस्मिन्निवसामि पुंसि
स वर्धते धर्मयशोर्थकामैः ॥ १३८ ॥

(अ. १३) किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना
युधि०- कथं वै लोकयात्रां तु किंशीलश्च समाचरेत् ॥ १३९ ॥

भीष्म०- कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् ।
मनसा त्रिविधं चैव दशकर्मपथांस्त्यजेत् ॥ १४० ॥

प्राणातिपातः स्तैन्यं च परदारानथापि च ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥ १४१ ॥

असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥ १४२ ॥

अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् ।
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥ १४३ ॥

तस्माद्वाक्कायमनसा नाचरेदशुभं नरः ।
शुभाशुभान्याचरन् हि तस्य तस्याश्नुते फलम् ॥ १४४ ॥

(अ. २२) कीदृशाः साधवो विप्राः केभ्यो दत्तं महाफलम् ।
युधि०- कीदृशानां च भोक्तव्यं तन्मे ब्रूहि पितामह ॥ १४५ ॥

भीष्म०- अक्रोधना धर्मपराः सत्यनित्या दमे रताः ।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ॥ १४६ ॥

साङ्गांश्च चतुरो वेदानधीते यो द्विजर्षभः ।
षड्भ्यः प्रवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥ १४७ ॥

ये त्वेवंगुणजातीयास्तेभ्यो दत्तं महाफलम् ।
सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ॥ १४८ ॥

निशम्य च गुणोपेतं ब्राह्मणं साधुसम्मतम् ।
दूरादानाय्य सत्कृत्य सर्वतश्चापि पूजयेत् ॥ १४९ ॥

युधि०– श्राद्धकाले च दैवे च पित्र्येऽपि च पितामह ।
इच्छामीह त्वयाऽऽख्यातं विहितं यत्सुरर्षिभिः ॥ १५० ॥

भीष्म०– दैवं पौर्वाह्णिकं कुर्यादपराह्णे तु पैतृकम् ।
मङ्गलाचारसम्पन्नः कृतशौचः प्रयत्नवान् ॥ १५१ ॥

मनुष्याणां तु मध्याह्ने प्रदद्यादुपपत्तिभिः ।
कालहीनं तु यद्दानं तं भागं रक्षसां विदुः ॥ १५२ ॥

यावन्तः पतिता विप्रा जडोन्मत्तास्तथैव च ।
दैवे वाप्यथ पित्र्ये वा राजन्नार्हन्ति केतनम् ॥ १५३ ॥

श्वित्री क्लीबश्च कुष्ठी च तथा यक्ष्महतश्च य ।
अपस्मारी च यश्चान्धो राजन्नार्हन्ति केतनम् ॥ १५४ ॥

अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत ।
नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ ॥ १५५ ॥

ऋणकर्ता च यो राजन्यश्च वार्धुषिको नरः ।
प्राणिविक्रयवृत्तिश्च राजन्नार्हन्ति केतनम् ॥ १५६ ॥

क्षात्रधर्मिणमप्याजौ केतयेत्कुलजं द्विजम् ।
न त्वेव वणिजं तात श्राद्धे च परिकल्पयेत् ॥ १५७ ॥

अग्निहोत्री च यो विप्रो ग्रामवासी च यो भवेत् ।
अस्तेनश्चातिथिज्ञश्च स राजन् केतनक्षमः ॥ १५८ ॥

सावित्रीं जपते यस्तु त्रिकालं भरतर्षभ ।
भिक्षावृत्तिः क्रियावांश्च स राजन् केतनक्षम ॥ १५९ ॥

ब्रह्मविक्रयनिर्दिष्टं स्त्रिया यच्चार्जितं धनम् ।
अदेयं पितृविप्रेभ्यो यच्च क्लैब्यादुपार्जितम् ॥ १६० ॥

(अ. २४) इदं मे तत्त्वतो राजन् वक्तुमर्हसि भारत ।
युधि०– अहिंसयित्वाऽपि कथं ब्रह्महत्या विधीयते ॥ १६१ ॥

भीष्म०– ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनम्।
ब्रूयान्नास्तीति य पश्चात्तं विद्याद्ब्रह्मघातिनम्॥ १६२॥
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत।
वृत्तिं हरति दुर्बुद्धिस्तं विद्याद्ब्रह्मघातिनम्॥ १६३॥
गोकुलस्य तृषार्तस्य जलार्थे वसुधाधिप।
उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम्॥ १६४॥
यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं वा मुनिभि कृतम्।
दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम्॥ १६५॥
आत्मजा रूपसंपन्नां महती सदृशे वरे।
न प्रयच्छति य कन्यां तं विद्याद्ब्रह्मघातिनम्॥ १६६॥
अधर्मनिरतो मूढो मिथ्या यो वै द्विजातिषु।
दद्यान्मर्मातिगं शोकं तं विद्याद्ब्रह्मघातिनम्॥ १६७॥
चक्षुषा विप्रहीणस्य पङ्गुलस्य जडस्य वा।
हरेत यो वै सर्वस्वं तं विद्याद्ब्रह्मघातिनम्॥ १६८॥
आश्रमे वा वने वापि ग्रामे वा यदि वा पुरे।
अग्निं समुत्सृजेन्मोहात्त विद्याद्ब्रह्मघातिनम्॥ १६९॥

## गङ्गामाहात्म्यम्

(अ २६) के देशा के जनपदा आश्रमा के च पर्वताः।
युधि०– प्रकृष्टा पुण्यत काश्च ज्ञेया नद्य पितामह॥ १७०॥
भीष्म०– ते देशास्ते जनपदास्तेऽऽश्रमास्ते च पर्वताः।
येषां भागीरथी गङ्गा मध्येनैति सरिद्वरा॥ १७१॥
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुन।
गतिं तां न लभेज्जन्तुर्गङ्गां संसेव्य यां लभेत्॥ १७२॥
स्नातानां शुचिभिस्तोयैर्गाङ्गेयै प्रयतात्मनाम्।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि॥ १७३॥

यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ १७४ ॥

अपहत्य तमस्तीव्रं यथा भात्युदये रवि· ।
तथाऽपहत्य पाप्मानं भाति गङ्गाजलोक्षितः ॥ १७५ ॥

तिष्ठेद्युगसहस्रं तु पदेनैकेन य· पुमान् ।
मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ॥ १७६ ॥

भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते ॥ १७७ ॥

यथा सुराणाममृतं पितॄणां च यथा स्वधा ।
सुधा यथा च नागानां तथा गङ्गाजलं नृणाम् ॥ १७८ ॥

स्वायंभुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते ।
स्नातानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ॥ १७९ ॥

देवा· सोमार्कसंस्थानि यथा सत्रादिभिर्मखै· ।
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥ १८० ॥

जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव च ।
समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शिवाम् ॥ १८१ ॥

पूर्णमिन्दुं यथा दृष्ट्वा नृणा दृष्टि· प्रसीदति ।
तथा त्रिपथगा दृष्ट्वा नृणां दृष्टि· प्रसीदति ॥ १८२ ॥

## इन्द्रमतङ्गसंवादः

(अ. २७) क्षत्रियो यदि वा वैश्य· शूद्रो वा राजसत्तम ।
युधि०— ब्राह्मण्यं प्राप्नुयाद्येन तन्मे व्याख्यातुमर्हसि ॥ १८३ ॥

भीष्म०—ब्राह्मण्यं तात दुष्प्राप्यं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्वभूतानां स्थानमेतद्युधिष्ठिर ॥ १८४ ॥

बह्वीस्तु संसरन् योनीर्जायमानः पुन· पुनः ।
पर्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते ॥ १८५ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर ॥ १८६ ॥
द्विजाते॰ कस्यचित्तात तुल्यवर्ण॰ सुतस्त्वभूत्।
मतङ्गो नाम नाम्ना वै सर्वैः समुदितो गुणैः ॥ १८७ ॥
स यज्ञकार॰ कौन्तेय पित्रोत्सृष्टः परन्तप।
प्रायाद्गर्दभयुक्तेन रथेनाप्याशुगामिना ॥ १८८ ॥
स बालं गर्दभं राजन् वहन्तं मातुरन्तिके।
निरविध्यत्प्रतोदेन नासिकाया पुन॰ पुनः ॥ १८९ ॥
तत्र तीव्रं व्रणं दृष्ट्वा गर्दभी पुत्रगृद्धिनी।
उवाच मा शुचः पुत्र चाण्डालस्त्वधितिष्ठति ॥ १९० ॥
ब्राह्मणे दारुणं नास्ति मैत्रो ब्राह्मण उच्यते।
आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति ॥ १९१ ॥
अयं तु पापप्रकृतिर्बाले न कुरुते दयाम्।
स्वयोनिं मानयत्येष भावो भावं नियच्छति ॥ १९२ ॥
एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः।
अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥ १९३ ॥
ब्रूहि रासभि कल्याणि माता मे येन दूषिता।
कथं मां वेत्सि चण्डालं क्षिप्रं रासभि शंस मे ॥ १९४ ॥
गर्दभी०-ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह।
जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत् ॥ १९५ ॥
एवमुक्तो मतङ्गस्तु प्रतिप्रायाद्गृहं प्रति।
तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत् ॥ १९६ ॥
मया त्वं यज्ञसंसिद्धौ नियुक्तो गुरुकर्मणि।
कस्मात्प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव ॥ १९७ ॥
मतङ्ग०- अन्त्ययोनिरयोनिर्वा कथं स कुशली भवेत्।
कुशलं तु कुतस्तस्य यस्येयं जननी पितः ॥ १९८ ॥

ब्राह्मण्या वृषलाज्जात पितर्वेदयतीव माम्।
अमानुषी गर्दभीय तस्मात्तप्स्ये तपो महत्॥ १९९॥
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः।
ततो गत्वा महारण्यमतपत्सुमहत्तपः॥ २००॥
ततः स तापयामास विबुधास्तपसान्वितः।
मतङ्ग सुखसंप्रेप्सुः स्थानं सुचरितादपि॥ २०१॥
तं तथा तपसा युक्तमुवाच हरिवाहनः।
मतङ्ग तप्स्यसे किं त्वं भोगानुत्सृज्य मानुषान्॥ २०२॥
वरं ददामि ते हन्त वृष्णीष्व त्वं यदिच्छसि।
यच्चाप्यवाप्य हृदि ते सर्वं तद्ब्रूहि मा चिरम्॥ २०३॥
मतङ्ग०— ब्राह्मण्यं कामयानोऽहमिदमारब्धवास्तपः।
गच्छेयं तदवाप्येह वर एष वृतो मया॥ २०४॥
भीष्म०— एतच्छ्रुत्वा तु वचनं तमुवाच पुरन्दरः।
मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया॥ २०५॥
ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः।
विनशिष्यसि दुर्बुद्धे तदुपारम मा चिरम्॥ २०६॥
(अ. २८) मा कृथाः साहसं पुत्र नैष धर्मपथस्तव।
नहि शक्यं त्वया प्राप्तुं ब्राह्मण्यमिह दुर्मते॥ २०७॥
तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति।
स जायते पुल्कसो वा चण्डालो वाऽप्यसंशयः॥ २०८॥
पुल्कसः पापयोनिर्वा यः कश्चिदिह लक्ष्यते।
स तस्यामेव सुचिरं मतङ्ग परिवर्तते॥ २०९॥
ततो दशशते काले लभते शूद्रतामपि।
शूद्रयोनावपि ततो बहुशः परिवर्तते॥ २१०॥
ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि।
वैश्यतायां चिरं कालं तत्रैव परिवर्तते॥ २११॥

तत· षष्टिगुणे काले राजन्यो नाम जायते ।
तत· षष्टिगुणे काले लभते ब्रह्मबन्धुताम् ॥ २१२ ॥

ब्रह्मबन्धुश्चिरं कालं ततस्तु परिवर्तते ।
ततस्तु द्विशते काले लभते काण्डपृष्ठताम् ॥ २१३ ॥

काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते ।
ततस्तु त्रिशते काले लभते जपतामपि ॥ २१४ ॥

तं च प्राप्य चिरं कालं तत्रेव परिवर्तते ।
ततश्चतु·शते काले श्रोत्रियो नाम जायते ॥ २१५ ॥

श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते ॥ २१६ ॥

तदेवं शोकहर्षौ तु कामद्वेषौ च पुत्रक ।
अतिमानातिवादौ च प्रविशेते द्विजाधमम् ॥ २१७ ॥

तांश्चेज्जयति शत्रून् स तदा प्राप्नोति सद्गतिम् ।
अथ ते वै जयन्त्येनं तालाग्रादिव पात्यते ॥ २१८ ॥

मतङ्ग संप्रधार्यैवं यदहं त्वामचूचुदम् ।
वृणीष्व काममन्यं त्वं ब्राह्मण्य हि सुदुर्लभम् ॥ २१९ ॥

(अ. २९) इदं वर्षसहस्र वै ब्रह्मचारी समाहित ।
मतङ्ग०– अतिष्ठमेकपादेन ब्राह्मण्यं नाप्नुया कथम् ॥ २२० ॥

शक्र०– चण्डालयोनौ जातेन नावाप्यं वै कथञ्चन ।
अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः ॥ २२१ ॥

मतङ्ग०– दैवं तु कथमेतद्वै यदहं मातृदोषतः ।
एतामवस्थां सम्प्राप्तो धर्मज्ञ· सन् पुरन्दर ॥ २२२ ॥

नूनं दैवं न शक्यं हि पौरुषेणातिवर्तितुम् ।
यदर्थं यत्नवानेव न लभे विप्रतां विभो ॥ २२३ ॥

एवं गते तु धर्मज्ञ दातुमर्हसि मे वरम् ।
यथा कामविहारी स्या कामरूपी विहङ्गमः ।
ब्रह्मक्षत्राविरोधेन पूजां च प्राप्नुयामहम् ॥ २२४ ॥

यथा ममाक्षया कीर्तिर्भवेच्चापि पुरन्दर ।
कर्तुमर्हसि तद्देव शिरसा त्वां प्रसादये ॥ २२५ ॥

शक्र०– छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि ।
कीर्तिश्च तेऽतुला वत्स त्रिषु लोकेषु यास्यति ॥ २२६ ॥

एवं तस्मै वरं दत्वा वासवोऽन्तरधीयत ।
प्राणांस्त्यक्त्वा मतङ्गोऽपि संप्राप्तः स्थानमुत्तमम् ॥ २२७ ॥

एवमेतत्परं स्थानं ब्राह्मण्यं नाम भारत ।
तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा ॥ २२८ ॥

## वीतहव्यस्य विप्रत्वम्, शरणागतरक्षणम्

(अ. ३०) वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः ।
युधि०– तदेव तावद्गाङ्गेय श्रोतुमिच्छाम्यहं विभो ॥ २२९ ॥

भीष्म०–शृणु राजन् यथा राजा वीतहव्यो महायशाः ।
राजर्षिर्दुर्लभं प्राप्तो ब्राह्मण्य लोकसत्कृतम् ॥ २३० ॥

मनोर्महात्मनस्तात प्रजा धर्मेण शासतः ।
बभूव पुत्रो धर्मात्मा शर्यातिरिति विश्रुतः ॥ २३१ ॥

तस्यान्ववाये द्वौ राजन् राजानौ सम्बभूवतुः ।
हैहयस्तालजङ्घश्च वत्सस्य जयतां वर ॥ २३२ ॥

हैहयस्य तु राजेन्द्र दशसु स्त्रीषु भारत ।
शतं बभूव पुत्राणा शूराणामनिवर्तिनाम् ॥ २३३ ॥

काशिष्वपि नृपो राजन् दिवोदासपितामहः ।
हर्यश्व इति विख्यातो बभूव जयतां वरः ॥ २३४ ॥

स वीतहव्यदायादैरागत्य पुरुषर्षभ ।
गङ्गायमुनयोर्मध्ये सङ्ग्रामे विनिपातितः ॥ २३५ ॥

तं तु हत्वा नरपतिं हैहयास्ते महारथाः ।
प्रतिजग्मुः पुरीं रम्यां वत्सानामकुतोभयाः ॥ २३६ ॥

हर्यश्वस्य च दायादः काशिराजोऽभ्यषिच्यत।
सुदेवो देवसङ्काश साक्षाद्धर्म इवापर ॥ २३७ ॥

स पालयामास महीं धर्मात्मा काशिनन्दनः।
तैर्वीतहव्यैरागत्य युधि सर्वैर्विनिर्जितः॥ २३८ ॥

तमथाजौ विनिर्जित्य प्रतिजग्मुर्यथागतम्।
सौदेवस्त्वथ काशीशो दिवोदासोऽभ्यषिच्यत॥ २३९ ॥

दिवोदासस्तु विज्ञाय वीर्य तेषां यतात्मनाम्।
वाराणसीं महातेजा निर्ममे शक्रशासनात्॥ २४० ॥

गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तम।
गोमत्या दक्षिणे कूले शक्रस्येवामरावतीम् ॥ २४१ ॥

तत्र तं राजशार्दूलं निवसन्त महीपतिम्।
आगत्य हैहया भूयः पर्यधावन्त भारत॥ २४२ ॥

स निष्क्रम्य ददौ युद्धं दिनाना दशतीर्दश।
हतवाहनभूयिष्ठस्ततो दैन्यमुपागमत्॥ २४३ ॥

हतयोधस्ततो राजन् क्षीणकोशश्च भूमिपः।
दिवोदासः पुरीं त्यक्त्वा पलायनपरोऽभवत्॥ २४४ ॥

गत्वाऽऽश्रमपदं रम्यं भरद्वाजस्य धीमतः।
जगाम शरणं राजा कृताञ्जलिररिन्दम॥ २४५ ॥

तमुवाच भरद्वाजो ज्येष्ठः पुत्रो बृहस्पते ।
यत्ते प्रियं तत्करिष्ये न मेऽत्रास्ति विचारणा॥ २४६ ॥

राजा०- भगवन् वैतहव्यैर्मे युद्धे वंश प्रणाशितः।
अहमेकः परिद्यूनो भवन्तं शरणं गतः॥ २४७ ॥

तमुवाच महाभागो भरद्वाजः प्रतापवान्।
न भेतव्यं न भेतव्यं सौदेव व्येतु ते भयम्॥ २४८ ॥

अहमिष्टिं करिष्यामि पुत्रार्थं ते विशां पते।
वीतहव्यसहस्राणि येन त्वं प्रहरिष्यसि ॥ २४९ ॥

तत इष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीम् ।
अथास्य तनयो जज्ञे प्रतर्दन इति श्रुतः ॥ २५० ॥

स जातमात्रो ववृधे समाः सद्यस्त्रयोदश ।
वेदं चापि जगौ कृत्स्नं धनुर्वेदं च भारत ॥ २५१ ॥

तं दृष्ट्वा परमं हर्षं सुदेवतनयो ययौ ।
मेने च मनसा दग्धान् वैतहव्यान् स पार्थिवः ॥ २५२ ॥

ततोऽसौ यौवराज्ये च स्थापयित्वा प्रतर्दनम् ।
कृतकृत्यं तदाऽऽत्मानं स राजा अभ्यनन्दत ॥ २५३ ॥

ततस्तु वैतहव्यानां वधाय स महीपतिः ।
पुत्रं प्रस्थापयामास प्रतर्दनमरिन्दमम् ॥ २५४ ॥

सरथः स तु सन्तीर्य गङ्गामाशु पराक्रमी ।
प्रययौ वीतहव्यानां पुरीं परपुरञ्जयः ॥ २५५ ॥

वैतहव्यास्तु संश्रुत्य रथघोषं समुद्धतम् ।
निर्ययुर्नगराकारैः रथैः पररथारुजैः ॥ २५६ ॥

निष्क्रम्य ते नरव्याघ्रा दंशिताश्चित्रयोधिनः ।
प्रतर्दनं समाजग्मुः शरवर्षैरुदायुधाः ॥ २५७ ॥

अस्त्रैरस्त्राणि संवार्य तेषां राजा प्रतर्दनः ।
जघान तान्महातेजा वज्रानलसमैः शरैः ॥ २५८ ॥

हतेषु तेषु सर्वेषु वीतहव्यः सुतेष्वथ ।
प्राद्रवन्नगरं हित्वा भृगोराश्रममप्युत ॥ २५९ ॥

ययौ भृगुं च शरणं वीतहव्यो नराधिपः ।
अभयं च ददौ तस्मै राज्ञे राजन् भृगुस्तदा ॥ २६० ॥

अथानुपदमेवाशु तत्रागच्छत्प्रतर्दनः ।
स प्राप्य चाश्रमपदं दिवोदासात्मजोऽब्रवीत् ॥ २६१ ॥

अयं ब्रह्मन्नितो राजा वीतहव्यो विसर्ज्यताम् ।
तस्य पुत्रैर्हि मे कृत्स्नो ब्रह्मन् वंशः प्रणाशितः ॥ २६२ ॥

उत्सादितश्च विषयः काशीनां रत्नसञ्चयः।
एतस्य वीर्यदृप्तस्य हतं पुत्रशतं मया।
अस्येदानीं वधादद्य भविष्याम्यनृणः पितुः॥ २६३॥

तमुवाच कृपाविष्टो भृगुर्धर्मभृतां वरः।
नेहास्ति क्षत्रियः कश्चित्सर्वे हीमे द्विजातयः॥ २६४॥

एतत्तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्दनः।
पादावुपस्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत्॥ २६५॥

एवमप्यस्मि भगवन् कृतकृत्यो न संशय।
य एष राजा वीर्येण स्वजातिं त्याजितो मया॥ २६६॥

अनुजानीहि मां ब्रह्मन् ध्यायस्व च शिवेन माम्।
ततस्तेनाभ्यनुज्ञातो ययौ राजा प्रतर्दनः॥ २६७॥

एवं विप्रत्वमगमद्वीतहव्यो नराधिपः।
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ॥ २६८॥

(अ ३१) के पूज्या वै त्रिलोकेऽस्मिन् मानवा भरतर्षभ।
युधि०- विस्तरेण तदाचक्ष्व न हि तृप्यामि कथ्यतः॥ २६९॥

भीष्म०- अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
नारदस्य च संवादं वासुदेवस्य चोभयोः॥ २७०॥

नारदं प्राञ्जलिं दृष्ट्वा पूजयानं द्विजर्षभान्।
केशवः परिपप्रच्छ भगवन् कान्नमस्यसि॥ २७१॥

नारद०- तपोधनान् वेदविदो नित्यं वेदपरायणान्।
महार्हान्वृष्णिशार्दूल सदा सम्पूजयाम्यहम्॥ २७२॥

अभुक्त्वा देवकार्याणि कुर्वतेयेऽविकत्थनाः।
सन्तुष्टाश्च क्षमायुक्तास्तान्नमस्याम्यहं विभो॥ २७३॥

ये भृत्यभरणे शक्ताः सततं चातिथिव्रताः।
भुञ्जते देवशेषाणि तान्नमस्यामि यादव॥ २७४॥

निर्ममा निष्प्रतिद्वन्द्वा निर्ह्रीका निष्प्रयोजनाः।
ये वेदं प्राप्य दुर्धर्षा वाग्मिनो ब्रह्मवादिनः॥ २७५॥

अहिंसानिरता ये च ये च सत्यव्रता नराः।
दान्ताः शमपराश्चैव तान्नमस्यामि केशव ॥ २७६ ॥

मातापित्रोर्गुरुषु च सम्यग्वर्तन्ति ये सदा।
यथा त्वं वृष्णिशार्दूलेत्युक्त्वैवं विरराम सः ॥ २७७ ॥

तस्मात्त्वमपि कौन्तेय पितृदेवद्विजातिथीन्।
सम्यक्पूजयसे नित्यं गतिमिष्टामवाप्स्यसि ॥ २७८ ॥

(अ. ३२) शरणागतं ये रक्षन्ति भूतग्रामं चतुर्विधम्।
युधि०- किं तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः ॥ २७९ ॥

भीष्म०- इदं शृणु महाप्राज्ञ धर्मपुत्र महायशः।
इतिहासं पुरावृत्तं शरणार्थं महाफलम् ॥ २८० ॥

प्रपात्यमानः श्येनेन कपोतः प्रियदर्शनः।
वृषदर्भं महाभागं नरेन्द्रं शरणं गतः ॥ २८१ ॥

स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतम्।
आश्वास्याश्वसिहीत्याह न तेऽस्ति भयमण्डज ॥ २८२ ॥

मत्सकाशमनुप्राप्तं न त्वां कश्चित्समुत्सहेत्।
मनसा ग्रहणं कर्तुं रक्षाध्यक्षपुरस्कृतम् ॥ २८३ ॥

काशिराज्यं तदद्यैव त्वदर्थं जीवितं तथा।
त्यजेयं भव विस्रब्धः कपोत न भयं तव ॥ २८४ ॥

श्येन०- ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि।
अतिक्रान्तं च प्राप्तं च प्रयत्नाच्चोपपादितम् ॥ २८५ ॥

तृष्णा मे बाधतेऽत्युग्रा क्षुधा निर्दहतीव माम्।
मुञ्चैनं न हि शक्ष्यामि राजन् मन्दयितुं क्षुधाम् ॥ २८६ ॥

यदि स्वविषये राजन् प्रभुस्त्वं रक्षणे नृणाम्।
खेचरस्य तृषार्तस्य न त्वं प्रभुरथोत्तम ॥ २८७ ॥

राजा०- गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा।
त्वदर्थमद्य क्रियतां क्षुधा प्रशमनाय ते ॥ २८८ ॥

शरणागतं न त्यजेयमिति मे व्रतमाहितम् ।
न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज ॥ २८९ ॥

श्येन०– न वराहं न चोक्षाणं न चान्यान्विविधान्द्विजान् ।
भक्षयामि महाराज किमन्नाद्येन तेन मे ॥ २९० ॥

यस्तु मे विहितो भक्ष्य: स्वयं देवैः सनातनः ।
श्येनाः कपोतान् खादन्ति स्थितिरेषा सनातनी ॥ २९१ ॥
उशीनर कपोते तु यदि स्नेहस्तवानघ ।
ततस्त्वं मे प्रयच्छाद्य स्वमांस तुलया धृतम् ॥ २९२ ॥

राजा०– महाननुग्रहो मेऽद्य यस्त्वमेवमिहात्थ माम् ।
बाढमेवं करिष्यामीत्युक्त्वाऽसौ राजसत्तमः ॥ २९३ ॥
उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत् ।
स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत् ॥ २९४ ॥
तानि मांसानि संछिद्य तुलां पूरयतेऽशनैः ।
तथापि न समस्तेन कपोतेन बभूव ह ॥ २९५ ॥
अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः ।
तुला ततः समारूढ: स्वं मांसक्षयमुत्सृजन् ॥ २९६ ॥
ततः सेन्द्रास्त्रयो लोकास्तं नरेन्द्रमुपस्थिताः ।
भेर्यश्चाकाशगैस्तत्र वादिता देवदुन्दुभिः ॥ २९७ ॥
अमृतेनावसिक्तश्च वृषदर्भो नरेश्वरः ।
दिव्यैश्च सुसुखैर्माल्यैरभिवृष्ट: पुन: पुनः ॥ २९८ ॥
हेमप्रासादसम्बाधं मणिकाञ्चनतोरणम् ।
स वैदूर्यमणिस्तम्भं विमानं समधिष्ठितः ॥ २९९ ॥
स राजर्षिर्गतः स्वर्गं कर्मणा तेन शाश्वतम् ।
शरणागतेषु चैवं त्वं कुरु सर्वं युधिष्ठिर ॥ ३०० ॥
भक्तानामनुरक्तानामाश्रितानां च रक्षिता ।
दयावान् सर्वभूतेषु परत्र सुखमेधते ॥ ३०१ ॥

(अ.३७) अपीडया च भूतानां धर्मस्याहिंसया तथा।
युधि०- पात्रं विद्यात्तु तत्त्वेन यस्मै दत्तं न सन्तपेत् ॥ ३०२ ॥
भीष्म०- ऋत्विक् पुरोहिताचार्याः शिष्यसम्बन्धिबान्धवाः।
सर्वे पूज्याश्च मान्याश्च श्रुतवन्तोऽनसूयकाः ॥ ३०३ ॥
अतोऽन्यथा वर्तमानाः सर्वे नार्हन्ति सत्क्रियाम्।
तस्मान्नित्यं परीक्षेत पुरुषान्प्रणिधाय वै ॥ ३०४ ॥
अक्रोधः सत्यवचनमहिंसा दम आर्जवम्।
अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ ३०५ ॥
यस्मिन्नेतानि दृश्यन्ते न चाकार्याणि भारत।
स्वभावतो निविष्टानि तत्पात्रं मानमर्हति ॥ ३०६ ॥

विवाहधर्माः

(अ. ४४) अयं हि सर्वधर्माणां धर्मश्चिन्त्यतमो मतः।
युधि०- कीदृशाय प्रदेया स्यात्कन्येति वसुधाधिप ॥ ३०७ ॥
भीष्म०- शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च।
सद्भिरेव प्रदातव्या कन्या गुणयुते वरे ॥ ३०८ ॥
ब्राह्मणानां सतामेष ब्राह्मो धर्मो युधिष्ठिर।
आवाह्यमावहेदेवं यो दद्यादनुकूलतः ॥ ३०९ ॥
शिष्टानां क्षत्रियाणां च धर्म एष सनातनः।
आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एव यः ॥ ३१० ॥
अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर।
गान्धर्वमिति तं धर्मं प्राहुर्वेदविदो जनाः ॥ ३११ ॥
धनेन बहुधा क्रीत्वा सम्प्रलोभ्य च बान्धवान्।
असुराणां नृपैतं वै धर्ममाहुर्मनीषिणः ॥ ३१२ ॥
हत्वा छित्वा च शीर्षाणि रुदतां रुदतीं गृहात्।
प्रसह्य हरणं तात राक्षसो विधिरुच्यते ॥ ३१३ ॥
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर।
पैशाचश्चासुरश्चैव न कर्तव्यौ कथञ्चन ॥ ३१४ ॥

ब्राह्म· क्षात्रोऽथ गान्धर्व एते धर्म्या नरर्षभ ।
पृथग्वा यदि वा मिश्रा· कर्तव्या नात्र संशयः ॥ ३१५ ॥
तिस्रो भार्या ब्राह्मणस्य द्वे भार्ये क्षत्रियस्य तु ।
वैश्य· स्वजात्या विन्देत तास्वपत्यं समं भवेत् ॥ ३१६ ॥
ब्राह्मणी तु भवेज्ज्येष्ठा क्षत्रिया क्षत्रियस्य तु ।
रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जना· ॥ ३१७ ॥
अपत्यजन्म शूद्रायां न प्रशंसन्ति साधव· ।
शूद्रायां जनयन्विप्रः प्रायश्चित्ती विधीयते ॥ ३१८ ॥
त्रिंशद्वर्षो दशवर्षां भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥ ३१९ ॥
त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती ।
चतुर्थे त्वथ सम्प्राप्ते स्वयं भर्तारमर्जयेत् ॥ ३२० ॥
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
इत्येतामनुगच्छेत तं धर्मं मनुरब्रवीत ॥ ३२१ ॥
पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे ।
पाणिग्रहस्य भार्या स्याद्यस्य चाद्भि· प्रदीयते ॥ ३२२ ॥
(अ. ४५) यो मनुष्य· स्वकं पुत्र विक्रीय धनमिच्छति ।
कन्यां वा जीवितार्थाय य· शुल्केन प्रयच्छति ॥ ३२३ ॥
सप्तावरे महाघोरे निरये कालसाह्वये ।
स्वेदं मूत्रं पुरीषं च तस्मिन्मूढः समश्नुते ॥ ३२४ ॥
(अ. ४६) यस्याः किञ्चिन्नाददते ज्ञातयो न स विक्रय· ।
अर्हणं तत्कुमारीणामानृशंस्यतमं च तत् ।
सर्वं च प्रतिदेयं स्यात्कन्यायै तदशेषतः ॥ ३२५ ॥
पितृभिर्भ्रातृभिश्चापि श्वशुरैरथ देवरैः ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ३२६ ॥
यदि वै स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अप्रमोदात्पुन· पुंस· प्रजनो न प्रवर्धते ॥ ३२७ ॥

पूज्या लालयितव्याश्च स्त्रियो नित्यं जनाधिप ॥ ३२८ ॥
स्त्रियो यत्र च पूज्यन्ते रमन्ते तत्र देवता.।
अपूजिताश्च यत्रैताः सर्वास्तत्राफलाः क्रिया. ॥ ३२९ ॥
उत्पादनमपत्यस्य जातस्य पलिपालनम्।
प्रीत्यर्थं लोकयात्राया. पश्यत स्त्रीनिवन्धनम् ॥ ३३० ॥
पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्राश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ ३३१ ॥
श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता।
पालिता निगृहीता च श्रीः स्त्री भवति भारत ॥ ३३२ ॥
(अ. ४९) ब्रूहि तात कुरुश्रेष्ठ वर्णानां त्वं पृथक् पृथक्।
युधि०- कीदृश्यां कीदृशाश्चापि पुत्राः कस्य च के च ते ॥ ३३३ ॥
भीष्म०- आत्मा पुत्रश्च विज्ञेयस्तस्यानन्तरजश्च यः।
निरुक्तजश्च विज्ञेय सुत प्रसृतजस्तथा ॥ ३३४ ॥
पतितस्य तु भार्याया भर्त्रा सुसमवेतया।
तथा दत्तकृतौ पुत्रावध्यूढश्च तथाऽपरः ॥ ३३५ ॥
षडपध्वंसजाश्चापि कानीनापसदास्तथा ।
इत्येते वै समाख्यातास्तान्विजानीहि भारत ॥ ३३६ ॥
युधि०- षडपध्वंसजाः के स्युः के वाप्यपसदास्तथा।
एतत्सर्वं यथातत्त्वं व्याख्यातुं मे त्वमर्हसि ॥ ३३७ ॥
भीष्म०- त्रिषु वर्णेषु ये पुत्रा ब्राह्मणस्य युधिष्ठिर।
वर्णयोश्च द्वयोः स्याता यौ राजन्यस्य भारत ॥ ३३८ ॥
एको विड्वर्ण एवाथ तथाऽत्रैवोपलक्षितः।
षडपध्वंसजास्ते हि तथैवापसदान् शृणु ॥ ३३९ ॥
चाण्डालो व्रात्यवैद्यौ च ब्राह्मण्यां क्षत्रियासु च।
वैश्यायां चैव शूद्रस्य लक्ष्यन्तेऽपसदास्त्रयः ॥ ३४० ॥
मागधो वामकश्चैव द्वौ वैश्यस्योपलक्षितौ।
ब्राह्मण्यां क्षत्रियायां च क्षत्रियस्यैक एव तु।
ब्राह्मण्यां लक्ष्यते सूत इत्येतेऽपसदाः स्मृताः ॥ ३४१ ॥

## च्यवनोपाख्यानम्

(अ. ५०) दर्शने कीदृशः स्नेहः संवासे च पितामह।
युधि०—महाभाग्यं गवां चैव तन्मे व्याख्यातुमर्हसि ॥ ३४२ ॥

भीष्म०— हन्त ते कथयिष्यामि पुरावृत्तं महाद्युते।
नहुषस्य च संवादं महर्षेश्च्यवनस्य च ॥ ३४३ ॥

पुरा महर्षिश्च्यवनो भार्गवो भरतर्षभ।
उदवासकृतारम्भो बभूव स महाव्रत ॥ ३४४ ॥

स्थाणुभूतः शुचिर्भूत्वा दैवतेभ्यः प्रणम्य च।
गङ्गायमुनयोर्मध्ये जलं संप्रविवेश ह ॥ ३४५ ॥

अन्तर्जलेषु सुष्वाप काष्ठभूतो महामुनिः।
ततश्चोर्ध्वस्थितो धीमानभवद्भरतर्षभ ॥ ३४६ ॥

तत्र तस्यासतः कालः समतीतोऽभवन्महान् ॥ ३४७ ॥
ततः कदाचित्समये कस्मिंश्चिन्मत्स्यजीविनः।
तं देशं समुपाजग्मुर्जालहस्ता महाद्युते ॥ ३४८ ॥

ततस्ते बहुभिर्योगैः कैवर्ता मत्स्यकाङ्क्षिणः।
गङ्गायमुनयोर्वारि जालैरभ्यकिरंस्ततः ॥ ३४९ ॥
अवतीर्य ततः सर्वे जालं चकृषिरे तदा।
बबन्धुस्तत्र मत्स्यांश्च तथाऽन्याञ्जलचारिणः ॥ ३५० ॥
तथा मत्स्यैः परिवृतं च्यवनं भृगुनन्दनम्।
आकर्षयन्महाराज जालेनाथ यदृच्छया ॥ ३५१ ॥
तं जालेनोद्धृतं दृष्ट्वा ते तदा वेदपारगम्।
सर्वे प्राञ्जलयो दाशाः शिरोभिः प्रापतन्भुवि ॥ ३५२ ॥
परिखेदपरित्रासाज्जालस्याकर्षणेन च।
मत्स्या बभूवुर्व्यापन्नाः स्थलसंस्पर्शनेन च ॥ ३५३ ॥
स मुनिस्तत्तदा दृष्ट्वा मत्स्यानां कदनं कृतम्।
बभूव कृपयाविष्टो निःश्वसंश्च पुनः पुनः ॥ ३५४ ॥

निपा०– अज्ञानाद्यत्कृत पापं प्रसादं तत्र न· कुरु।
करवाम प्रियं किं ते तन्नो ब्रूहि महामुने ॥ ३५५ ॥
इत्युक्तो मत्स्यमध्यस्थश्च्यवनो वाक्यमब्रवीत्।
प्राणोत्सर्गं विसर्गं वा मत्स्यैर्यास्याम्यहं सह ॥ ३५६ ॥
संवासान्नोत्सहे त्यक्तुं सलिलेऽध्युषितानहम् ॥ ३५७ ॥
इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः।
सर्वे विवर्णवदना नहुषाय न्यवेदयन् ॥ ३५८ ॥
(अ. ५१) नहुषस्तु तत· श्रुत्वा च्यवनं तं तथागतम्।
त्वरितः प्रययौ तत्र सहामात्यपुरोहित ॥ ३५९ ॥
अर्चयामास तं चापि तस्य राज्ञ· पुरोहितः।
सत्यव्रतं महात्मानं देवकल्पं विशां पते ॥ ३६० ॥
नहुष०– करवाणि प्रियं किं ते तन्मे ब्रूहि द्विजोत्तम ॥ ३६१ ॥
च्यवन०–श्रमेण महता युक्ता· कैवर्ता मत्स्यजीविनः।
मम मूल्यं प्रयच्छैभ्यो मत्स्याना विक्रयै· सह ॥ ३६२ ॥
नहुष०– सहस्र दीयतां मूल्यं निषादेभ्यः पुरोहित।
च्यवन०–सहस्रं नाहमर्हामि किंवा त्वं मन्यसे नृप ॥ ३६३ ॥
नहुष०– सहस्राणां शतं विप्र निषादेभ्यः प्रदीयताम्।
च्यवन०–नाहं शतसहस्रेण निमेय· पार्थिवर्षभ ॥ ३६४ ॥
नहुष०– कोटि· प्रदीयतां मूल्यं निषादेभ्यः पुरोहित ॥ ३६५ ॥
च्यवन०–राजन्नार्हाम्यहं कोटिं भूयो वाऽपि महाद्युते।
नहुष०– अर्धं राज्यं समग्रं वा निषादेभ्यः प्रदीयताम् ॥ ३६६ ॥
च्यवन०– अर्धं राज्यं समग्रं च मूल्यं नार्हामि पार्थिव।
सदृशं दीयतां मूल्यमृषिभि सह चिन्त्यताम् ॥ ३६७ ॥
महर्षेर्वचनं श्रुत्वा नहुषो दु खकर्शितः।
स चिन्तयामास तदा सहामात्यपुरोहितः ॥ ३६८ ॥
तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः।
नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः ॥ ३६९ ॥

स तमाभाष्य राजानमब्रवीद्द्विजसत्तमः।
अनर्घेया महाराज द्विजा वर्णेषु चोत्तमाः।
गावश्च पुरुषव्याघ्र गौर्मूल्यं परिकल्प्यताम् ॥ ३७० ॥

नहुष०– उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोऽसि भार्गव।
एतन्मूल्यमहं मन्ये तव धर्मभृतां वर ॥ ३७१ ॥

च्यवन०–उत्तिष्ठाम्येष राजेन्द्र सम्यक् क्रीतोऽस्मि तेऽनघ।
गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युत ॥ ३७२ ॥
कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव।
गवां प्रशस्यते वीर सर्वपापहरं शिवम् ॥ ३७३ ॥
गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते।
अन्नमेव सदा गावो देवानां परमं हविः ॥ ३७४ ॥
अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च।
अमृतायतनं चैताः सर्वलोकनमस्कृताः ॥ ३७५ ॥
निर्विघ्नं गोकुलं यत्र श्वासं मुञ्चति निर्भयम्।
विराजयति तं देशं पापं चास्यापकर्षति ॥ ३७६ ॥
गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः।
गावः कामदुहो देव्यो नान्यत्किञ्चित्परं स्मृतम् ॥ ३७७ ॥

निषा०– दर्शनं कथनं चैव सहास्माभिः कृतं मुने।
सतां साप्तपदं मैत्रं प्रसादं नः कुरु प्रभो ॥ ३७८ ॥
प्रसादयामहे विद्वन् भवन्तं प्रणता वयम्।
अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् ॥ ३७९ ॥

च्यवन०–प्रतिगृह्णामि वो धेनुं कैवर्ता मुक्तकिल्बिषाः।
दिवं गच्छत वै क्षिप्रं मत्स्यैः सह जलोद्भवैः ॥ ३८० ॥
ततस्तस्य प्रभावात्ते महर्षेर्भावितात्मनः।
निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः ॥ ३८१ ॥
समाप्तदीक्षश्च्यवनस्ततोऽगच्छत्स्वमाश्रमम्।
गविजश्च महातेजाः स्वमाश्रमपदं ययौ ॥ ३८२ ॥

## च्यवनकुशिकसंवादः

(अ ५२) कौतूहलं मे सुमहज्जामदग्न्यं प्रति प्रभो ।
युधि०– कथं ब्रह्मर्षिवंशोऽयं क्षत्रधर्मा व्यजायत ॥ ३८३ ॥
भीष्म०– अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
च्यवनस्य च संवादं कुशिकस्य च भारत ॥ ३८४ ॥
दग्धुकामः कुलं सर्वं कुशिकानां तपोधन ।
च्यवनः समनुप्राप्य कुशिकं वाक्यमब्रवीत् ॥ ३८५ ॥
वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ ॥ ३८६ ॥
ततः स राजा च्यवनं मधुपर्कं यथाविधि ।
ग्राहयामास चाव्यग्रो महात्मा नियतव्रतः ।
सत्कृत्य तं तथा विप्रमिदं पुनरथाब्रवीत् ॥ ३८७ ॥
इदं गृहमिदं राज्यमिदं धर्मासनं च ते ।
राजा त्वमसि शाध्युर्वीमहं तु परवांस्त्वयि ॥ ३८८ ॥
अथर्षिश्चोदयामास पानमन्नं तथैव च ।
तद्वचः पूजयित्वा तु तथेत्याह स पार्थिवः ।
यथोपपन्नमाहारं तस्मै प्रादाज्जनाधिप ॥ ३८९ ॥
ततः स भुक्त्वा भगवान् दम्पती प्राह धर्मवित् ।
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो ॥ ३९० ॥
ततः शय्यागृहं प्राप्य भगवानृषिसत्तम ।
संविवेश नरेशस्तु सपत्नीकः स्थितोऽभवत् ॥ ३९१ ॥
न प्रबोध्योऽस्मि संसुप्त इत्युवाचाथ भार्गवः ।
संवाहितव्यौ मे पादौ जागृतव्यं च तेऽनिशम् ॥ ३९२ ॥
ततः स भगवान्विप्रः समादिश्य नराधिपम् ।
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम् ॥ ३९३ ॥
स तु राजा निराहारः सभार्यः कुरुनन्दन ।
पर्युपासत तं हृष्टश्च्यवनाराधने रतः ॥ ३९४ ॥

भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः।
अकिञ्चिदुक्त्वा तु गृहान्निश्चक्राम महातपा ॥ ३९५ ॥
तमन्वगच्छतां तौ च क्षुधितौ श्रमकर्शितौ।
भार्यापती मुनिश्रेष्ठस्तावेतौ नावलोकयत् ॥ ३९६ ॥
(अ. ५३) अथ शून्येन मनसा प्रविश्य स्वगृहं नृपः।
ददर्श शयने तस्मिन् शयानं भृगुनन्दनम् ॥ ३९७ ॥
यथास्थानं च तौ स्थित्वा भूयस्तं संववाहतु.।
अथापरेण पार्श्वेन सुष्वाप स महामुनि. ॥ ३९८ ॥
तेनैव च स कालेन प्रत्यबुध्यत वीर्यवान्।
न च तौ चक्रतु किञ्चिद्विकारं भयशङ्कितौ ॥ ३९९ ॥
तत उत्थाय सहसा स्नानशालां विवेश ह।
क्लृप्तमेव तु तत्रासीत्स्नानीयं पार्थिवोचितम्।
असत्कृत्य च तत्सर्वं तत्रैवान्तरधीयत ॥ ४०० ॥
अथ स्नात स भगवान्सिंहासनगत. प्रभुः।
दर्शयामास कुशिकं सभार्यं कुरुनन्दन ॥ ४०१ ॥
संहृष्टवदनो राजा सभार्य कुशिको मुनिम्।
सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत् ॥ ४०२ ॥
आनीयतामिति मुनिस्तं चोवाच नराधिपम्।
स राजा समुपाजह्रे तदन्नं सह भार्यया ॥ ४०३ ॥
मांसप्रकारान्विविधान् शाकानि विविधानि च।
वेसवारविकारांश्च पानकानि लघूनि च ॥ ४०४ ॥
रसालापूपकांश्चित्रान्मोदकानथ खाण्डवान्।
रसान्नानाप्रकारांश्च वन्यं च मुनिभोजनम् ॥ ४०५ ॥
फलानि च विचित्राणि राजभोज्यानि भूरिशः।
बदरेङ्गुदकाश्मर्यभल्लातकफलानि च ॥ ४०६ ॥
गृहस्थाना च यद्भोज्यं यच्चापि वनवासिनाम्।
सर्वमाहारयामास राजा शापभयात्ततः ॥ ४०७ ॥

अथ सर्वमुपन्यस्तमग्रतश्च्यवनस्य तत् ॥ ४०८ ॥
ततः सर्वं समानीय तच्च शय्यासनं मुनिः।
वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह।
सर्वमादीपयामास च्यवनो भृगुनन्दनः ॥ ४०९ ॥
पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम्।
सभार्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ॥ ४१० ॥
ततः स तं तथेत्युक्त्वा कल्पयित्वा महारथम्।
भार्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ॥ ४११ ॥
त्रिदण्डं वज्रसूच्यग्रं प्रतोदं तत्र चादधत्।
सर्वमेतत्तथा दत्वा नृपो वाक्यमथाब्रवीत् ॥ ४१२ ॥
भगवन् क्व रथो यातु ब्रवीतु भृगुनन्दन।
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ॥ ४१३ ॥
एवमुक्तस्तु भगवान् प्रत्युवाचाथ तं नृपम्।
इतःप्रभृति यातव्यं पदकं पदकं शनैः ॥ ४१४ ॥
नोत्सार्याः पथिकाः केचित्तेभ्यो दास्ये वसुह्यहम्।
क्रियतां निखिलेनैतन्मा विचारय पार्थिव ॥ ४१५ ॥
तस्य तद्वचनं श्रुत्वा राजा भृत्यांस्तथाऽब्रवीत्।
यद्यद्ब्रूयान्मुनिस्तत्तत्सर्वं देयमशङ्कितैः ॥ ४१६ ॥
तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रतोदितौ।
पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः ॥ ४१७ ॥
वेपमानौ निराहारौ पञ्चाशद्रात्रकर्शितौ।
कथञ्चिदूहतुर्वीरौ दम्पती तं रथोत्तमम् ॥ ४१८ ॥
ततोऽस्य भगवान् प्रीतो बभूव मुनिसत्तमः।
अवतीर्य रथश्रेष्ठाद्दम्पती तौ मुमोच ह ॥ ४१९ ॥
सुकुमारौ च तौ विद्धौ कराभ्यां मुनिसत्तमः।
पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसत्तम ॥ ४२० ॥

५४) ततः प्रकृतिमापन्नो भार्गवो नृपते नृपम्।
उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ॥ ४२१ ॥
सम्यगाराधितः पुत्र त्वया प्रवदतां वर।
न हि ते वृजिनं किञ्चित्सुसूक्ष्ममपि विद्यते ॥ ४२२ ॥
अनुजानीहि मां राजन् गमिष्यामि यथागतम्।
प्रीतोऽस्मि तव राजेन्द्र वरश्च प्रतिगृह्यताम् ॥ ४२३ ॥
कुशि०- अग्निमध्ये गतेनेव भगवन् सन्निधौ मया।
वर्तितं भृगुशार्दूल यन्न दग्धोऽस्मि तद्वहु ॥ ४२४ ॥
(अ ५५) यदि प्रीतोऽसि भगवंस्ततो मे वद भार्गव।
कारणं श्रोतुमिच्छामि मद्गृहे वासकारिनम् ॥ ४२५ ॥
च्यवन०-पितामहस्य वदतः पुरा देवसमागमे।
श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु ॥ ४२६ ॥
ब्रह्मक्षत्रविरोधेन भविता कुलसङ्करः।
पौत्रस्ते भविता राजंस्तेजोवीर्यसमन्वितः ॥ ४२७ ॥
ततस्ते कुलनाशार्थमहं त्वां समुपागतः।
चिकीर्षन्कुशिकोच्छेदं सन्दिधक्षुः कुलं तव ॥ ४२८ ॥
न च ते दुष्कृतं किञ्चिदहमासादयं गृहे।
तेन जीवसि राजर्षे न भवेथास्त्वमन्यथा ॥ ४२९ ॥
वरं गृहाण राजर्षे यत्ते मनसि वर्तते।
तीर्थयात्रां गमिष्यामि पुरा कालोऽभिवर्तते ॥ ४३० ॥
कुशि०- एष एव वरो मेऽद्य यस्त्वं प्रीतो महामुने।
भवत्वेतद्यथाऽऽत्थ त्वं भवेत्पौत्रो ममानघ ॥ ४३१ ॥
ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः।
पुनश्चाख्यातुमिच्छामि भगवन्विस्तरेण वै ॥ ४३२ ॥
कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन।
कश्चासौ भविता बन्धुर्मम कश्चापि संमतः ॥ ४३३ ॥

(अ ५६) अवश्यं कथनीयं मे तवैतन्नरपुङ्गव।
च्यवन०–यदर्थं त्वाहमुच्छेत्तुं संप्राप्तो मनुजाधिप ॥ ४३४ ॥

भृगूणा क्षत्रिया याज्या नित्यमेतज्जनाधिप।
ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना ॥ ४३५ ॥

क्षत्रियाश्च भृगून्सर्वान्वधिष्यन्ति नराधिप।
आ गर्भादनुकृन्तन्तो दैवदण्डनिपीडिताः ॥ ४३६ ॥

तत उत्पत्स्यतेऽस्माकं कुले गोत्रविवर्धनः।
ऊर्वो नाम महातेजा ज्वलनार्कसमद्युतिः ॥ ४३७ ॥

स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति।
महीं सपर्वतवना यः करिष्यति भस्मसात् ॥ ४३८ ॥

कञ्चित्कालं तु वह्निं च स एव शमयिष्यति।
समुद्रे वडवावक्त्रे प्रक्षिप्य मुनिसत्तमः ॥ ४३९ ॥

पुत्रं तस्य महाराज ऋचीकं भृगुनन्दनम्।
साक्षात्कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ ॥ ४४० ॥

क्षत्रियाणामभावाय दैवयुक्तेन हेतुना।
स तु तं प्रतिगृह्यैव पुत्रे सङ्क्रामयिष्यति ॥ ४४१ ॥

जमदग्नौ महाभागे तपसा भावितात्मनि।
स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति ॥ ४४२ ॥

कुलात्तु तव धर्मात्मन् कन्यां सोऽधिगमिष्यति।
उद्भावनार्थं भवतो वंशस्य भरतर्षभ ॥ ४४३ ॥

गाधेर्दुहितरं प्राप्य पौत्रीं तव महातपाः।
ब्राह्मणं क्षत्रधर्माणं पुत्रमुत्पादयिष्यति ॥ ४४४ ॥

क्षत्रियं विप्रकर्माणं बृहस्पतिमिवौजसा।
विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकम्।
तपसा महता युक्तं प्रदास्यति महाद्युते ॥ ४४५ ॥

स्त्रियौ तु कारणं तत्र परिवर्ते भविष्यतः।
पितामहनियोगाद्वै नान्यथैतद्भविष्यति ॥ ४४६ ॥
तृतीये पुरुषे तुभ्य ब्राह्मणत्वमुपैष्यति।
भविता त्वं च सम्बन्धी भृगूणां भावितात्मनाम् ॥ ४४७ ॥
भीष्म०– यथोक्तमृषिणा चापि तदा तदभवन्नृप।
जन्म रामस्य च मुनेर्विश्वामित्रस्य चैव हि ॥ ४४८ ॥

## आरामादिदानप्रशंसा

(अ. ५८) आरामाणां तडागाना यत्फलं कुरुपुङ्गव।
युधि०– तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥ ४४९ ॥
भीष्म०– त्रिषु लोकेषु सर्वत्र पूजनीयस्तडागवान् ॥ ४५० ॥
अथवा मित्रसदनं मैत्रं मित्रविवर्धनम्।
कीर्तिसञ्जननं श्रेष्ठं तडागाना निवेशनम् ॥ ४५१ ॥
धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिण।
तडागसुकृतं देशे क्षेत्रमेकं महाश्रयम् ॥ ४५२ ॥
चतुर्विधानां भूतानां तडागमुपलक्षयेत्।
तडागानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ॥ ४५३ ॥
स कुलं तारयेत्सर्वं यस्य खाते जलाशये।
गावः पिबन्ति सलिलं साधवश्च नरा सदा ॥ ४५४ ॥
तडागे यस्य गावस्तु पिबन्ति तृषिता जलम्।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥ ४५५ ॥
सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते।
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि ॥ ४५६ ॥
एवमेतत्तडागस्य कीर्तितं फलमुत्तमम्।
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामवरोपणम् ॥ ४५७ ॥
स्थावराणां च भूतानां जातयः षट् प्रकीर्तिताः।
वृक्षगुल्मलतावल्यस्त्वक्सारास्तृणजातयः ॥ ४५८ ॥

एता जात्यस्तु वृक्षाणां तेपा रोपे गुणास्त्विमे।
कीर्तिश्च मानुपे लोके प्रेत्य चैव फलं शुभम् ॥ ४५९ ॥

पुष्पै॰ सुरगणान्वृक्षा॰ फलैश्चापि तथा पितृन्।
छायया चातिथिं तात पूजयन्ति महीरुह॰ ॥ ४६० ॥

पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान्।
वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र तु ॥ ४६१ ॥

तस्मात्तडागं कुर्वीत आरामांश्चैव रोपयेत्।
यजेच्च विविधैर्यज्ञै॰ सत्यं च सततं वदेत् ॥ ४६२ ॥

(अ ५९) यानीमानि वहिर्वेद्या दानानि परिचक्षते।
युधि०– तेभ्यो विशिष्टं किं दानं मतं ते कुरुपुङ्गव ॥ ४६३ ॥

भीष्म०– अभय सर्वभूतेषु व्यसने चाप्यनुग्रह॰।
यच्चाभिलपितं दद्यात्तृपितायाभियाचते ॥ ४६४ ॥

दत्तं मन्येत यद्दत्वा तद्दान श्रेष्ठमुच्यते।
दत्तं दातारमन्वेति यद्दानं भरतर्षभ ॥ ४६५ ॥

हिरण्यदानं गोदानं पृथिवीदानमेव च।
एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतम् ॥ ४६६ ॥

यद्यदिष्टतम लोके यच्चास्य दयितं गृहे।
तत्तद्गुणवते देय तदेवाक्षयमिच्छता ॥ ४६७ ॥

क्रियानियमितान् साधून् पुत्रदारैश्च कर्शितान्।
अयाचमानान् कौन्तेय सर्वोपायैर्निमन्त्रयेत् ॥ ४६८ ॥

यथा पत्याश्रयो धर्मः स्त्रीणां लोके सनातनः।
सदैव सा गतिर्नान्या तथाऽस्माकं द्विजातयः ॥ ४६९ ॥

राजन्यो ब्राह्मणान् राजन्पुरा परिचचार ह।
वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुति॰ ॥ ४७० ॥

दूराच्छूद्रेणोपचर्या ब्राह्मणोऽग्निरिव ज्वलन्।
संस्पर्शपरिचर्यस्तु वैश्येन क्षत्रियेण च ॥ ४७१ ॥

(अ. ६०) श्रेयो वै याचत पार्थ दानमाहुरयाचते।
अर्हत्तमो वै धृतिमान् कृपणादधृतात्मनः ॥ ४७२ ॥

क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृति ।
ब्राह्मणो धृतिमान्विद्वान्देवान्प्रीणाति तुष्टिमान् ॥ ४७३ ॥

याच्यमाहुरनीशस्य अभिहारं च भारत।
उद्वेजयन्ति याचन्ति सदा भूतानि दस्युवत् ॥ ४७४ ॥

म्रियते याचमानो वै न जातु म्रियते ददत्।
ददत्सञ्जीवयत्येनमात्मानं च युधिष्ठिर ॥ ४७५ ॥

आनृशंस्यं परो धर्मो याचते यत्प्रदीयते।
अयाचत. सीदमानान् सर्वोपायैर्निमन्त्रयेत् ॥ ४७६ ॥

(अ. ६१) योग. क्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत।
तदर्थं जीवितं तेऽस्तु मा तेभ्योऽप्रतिपालनम् ॥ ४७७ ॥

अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान्।
श्रिया ह्यभीक्ष्णं संवासो दर्पयेत्संप्रमोहयेत् ॥ ४७८ ॥

ब्राह्मणेषु प्रमूढेषु धर्मो विप्रणशेद्ध्रुवम्।
धर्मप्रणाशे भूतानामभाव स्यान्न संशय. ॥ ४७९ ॥

यो रक्षिभ्य. संप्रदाय राजा राष्ट्रं विलुम्पति।
यज्ञे राष्ट्राद्धनं तस्मादानयध्वमिति ब्रुवन् ॥ ४८० ॥

यच्चादाय तदाज्ञप्तं भीतं दत्तं सुदारुणम्।
यजेद्राजा न तं यज्ञं प्रशंसन्त्यस्य साधवः ॥ ४८१ ॥

(अ. ६२) इदं देयमिदं देयमिति यं श्रुतिरादरात्।
युधि०– बहुदेयाश्च राजान. किंस्विद्दानमनुत्तमम् ॥ ४८२ ॥

भीष्म०– अति दानानि सर्वाणि पृथिवीदानमुच्यते।
भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ॥ ४८३ ॥

यावद्भूमेरायुरिह तावद्भूमिद एधते।
न भूमिदानादस्तीह परं किञ्चिद्युधिष्ठिर ॥ ४८४ ॥

सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाप्राज्ञो ददाति वसुधां ददत् ॥ ४८५ ॥

यथा चन्द्रमसो वृद्धिरहन्यहनि जायते ।
तथा भूमिकृतं दानं सस्ये सस्ये विवर्धते ॥ ४८६ ॥

(अ. ६३) अन्नमेव प्रशंसन्ति देवा ऋषिगणास्तथा ।
लोकतन्त्रं हि संज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥ ४८७ ॥
अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ॥ ४८८ ॥

अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ॥ ४८९ ॥

कुटुम्बिने सीदते च ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥ ४९० ॥

नावमन्येदभिगतं न प्रणुद्यात्कदाचन ।
अपि श्वपाके शुनि वा न दानं विप्रणश्यति ॥ ४९१ ॥

यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
आर्तायादृष्टपूर्वाय स महद्धर्ममाप्नुयात् ॥ ४९२ ॥

प्रत्यक्षं प्रीतिजननं भोक्तुर्दातुर्भवत्युत ।
सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ॥ ४९३ ॥

प्राणान् ददाति भूतानां तेजश्च भरतर्षभ ।
गृहमभ्यागतायाथ यो दद्यादन्नमर्थिने ॥ ४९४ ॥

(अ. ६६) यत्फलं तिलदाने च भूमिदाने च कीर्तितम् ।
युधि०— गोदाने चान्नदाने च भूयस्तद्ब्रूहि कौरव ॥ ४९५ ॥

भीष्म०— पितॄणां परमं भोज्यं तिलाः सृष्टाः स्वयंभुवा ।
तिलदानेन वै तस्मात्पितृपक्षः प्रमोदते ॥ ४९६ ॥

पौष्टिका रूपदाश्चैव तथा पापविनाशनाः ।
तस्मात्सर्वप्रदानेभ्यस्तिलदानं विशिष्यते ॥ ४९७ ॥

प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतम् ।
न सीदति स कृच्छ्रेषु न च दुर्गाण्यवाप्नुते ॥ ४९८ ॥
शीतवातातपसहां गृहभूमिं सुसंस्कृताम् ।
प्रदाय सुरलोकस्थः पुण्यान्तेऽपि न चाल्यते ॥ ४९९ ॥
न चोषरां न निर्दग्धां महीं दद्यात्कथञ्चन ।
न श्मशानपरीतां च न च पापनिषेविताम् ॥ ५०० ॥
अतः परं तु गोदानं कीर्तयिष्यामि तेऽनघ ॥ ५०१ ॥
गावोऽधिकास्तपस्विभ्यो यस्मात्सर्वेभ्य एव च ।
तस्मान्महेश्वरो देवस्तपस्ताभिः सहास्थित ॥ ५०२ ॥
ब्राह्मे लोके वसन्त्येताः सोमेन सह भारत ।
यां तां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम् ॥ ५०३ ॥
पयसा हविषा दध्ना शकृता चाथ चर्मणा ।
अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत ॥ ५०४ ॥
नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते ।
न वर्षविषयं वापि दुःखमासां भवत्युत ॥ ५०५ ॥
ब्राह्मणैः सहिता यान्ति तस्मात्पारमकं पदम् ।
एकं गोब्राह्मणं तस्मात्प्रवदन्ति मनीषिणः ॥ ५०६ ॥
ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ।
निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिव ॥ ५०७ ॥
अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः ।
तस्माद्ददाति यो धेनुममृतं स प्रयच्छति ॥ ५०८ ॥
प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ ।
तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति ॥ ५०९ ॥
न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
गोजीविने न दातव्या तथा गौर्भरतर्षभ ॥ ५१० ॥
न कृशां नापवत्सां वा वन्ध्यां रोगान्वितां तथा ।
न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ॥ ५११ ॥

इत्येतद्गोप्रदानं च तिलदानं च कीर्तितम्।
तथा भूमिप्रदानं च शृणुष्वान्ने च भारत॥ ५१२॥

श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिपः।
स्वायंभुवं महत्स्थानं स गच्छति नराधिप॥ ५१३॥

न हिरण्यैर्न वासोभिर्नान्यदानेन भारत।
प्राप्नुवन्ति नरा श्रेयो यथा ह्यन्नप्रदाः प्रभो॥ ५१४॥

अन्नं वै प्रथमं द्रव्यमन्नं श्रीश्च परा मता।
अन्नात्प्राणः प्रभवति तेजो वीर्यं बलं तथा॥ ५१५॥

सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः।
न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः॥ ५१६॥

अर्चयित्वा यथान्यायं देवेभ्योऽन्नं निवेदयेत्।
यदन्ना हि नरा राजंस्तदन्नास्तस्य देवताः॥ ५१७॥

इत्येतदन्नदानस्य तिलदानस्य चैव ह।
भूमिदानस्य च फलं गोदानस्य च कीर्तितम्॥ ५१८॥

(अ. ६७) देवानाममृतं ह्यन्नं नागानां च सुधा तथा।
पितॄणां च स्वधा प्रोक्ता पशूनां चापि वीरुधः॥ ५१९॥

अन्नमेव मनुष्याणां प्राणानाहुर्मनीषिणः।
तच्च सर्वं नरव्याघ्र पानीयात्संप्रवर्तते॥ ५२०॥

तस्मात्पानीयदानाद्वै न परं विद्यते क्वचित्।
तच्च दद्यान्नरो नित्यं यदीच्छेद्भूतिमात्मनः॥ ५२१॥

(अ. ६९) तुल्यनामानि देयानि त्रीणि तुल्यफलानि च।
सर्वकामफलानीह गावः पृथ्वी सरस्वती॥ ५२२॥

यो ब्रूयाच्चापि शिष्याय धर्म्यां ब्राह्मीं सरस्वतीम्।
पृथिवीगोप्रदानाभ्यां तुल्यं स फलमश्नुते॥ ५२३॥

तथैव गाः प्रशंसन्ति न तु देयं ततः परम्।
सन्निकृष्टफलास्ता हि लघ्वर्थाश्च युधिष्ठिर॥ ५२४॥

मातरः सर्व भूतानां गावः सर्वसुखप्रदाः।
वृद्धिमाकाङ्क्षता नित्यं गावः कार्याः प्रदक्षिणाः॥ ५२५॥
सन्ताड्या न तु पादेन गवां मध्ये न च व्रजेत्।
मङ्गलायतनं देव्यस्तस्मात्पूज्याः सदैव हि॥ ५२६॥
प्रचोदनं देवकृतं गवां कर्मसु वर्ततम्॥ ५२७॥
असद्वृत्ताय पापाय लुब्धायानृतवादिने।
हव्यकव्यव्यपेताय न देया गौः कथञ्चन॥ ५२८॥
कल्मषं गुरुशुश्रूषा हन्ति मानो महद्यशः।
अपुत्रतां त्रयः पुत्रा अवृत्तिं दश धेनवः॥ ५२९॥
शुभे पात्रे ये गुणा गोप्रदाने
तावान्दोषो ब्राह्मणस्वापहारे।
सर्वावस्थं ब्राह्मणस्वापहारो
दाराश्चैषां दूरतो वर्जनीया॥ ५३०॥

नृगोपाख्यानम्

(अ. ७०) अत्रैव कीर्त्यते सद्भिर्ब्राह्मणस्वाभिमर्शने।
नृगेण सुमहत्कृच्छ्रं यदवाप्तं कुरूद्वह॥ ५३१॥
निविशंत्यां पुरा पार्थ द्वारवत्यामिति श्रुतिः।
अदृश्यत महाकूपस्तृणवीरुत्समावृतः॥ ५३२॥
प्रयत्नं तत्र कुर्वाणास्तस्मात्कूपाज्जलार्थिनः।
श्रमेण महता युक्तास्तस्मिंस्तोये सुसंवृते।
ददृशुस्ते महाकायं कृकलासमवस्थितम्॥ ५३३॥
तस्य चोद्धरणे यत्नमकुर्वस्ते सहस्रशः।
प्रग्रहैश्चर्मपट्टैश्च तं बध्वा पर्वतोपमम्।
नाशक्नुवन् समुद्धर्तुं ततो जग्मुर्जनार्दनम्॥ ५३४॥
खमावृत्योदपानस्य कृकलासः स्थितो महान्।
तस्य नास्ति समुद्धर्तेत्येतत्कृष्णे न्यवेदयन्॥ ५३५॥

स वासुदेवेन समुद्धृतश्च
पृष्टश्च कार्यं निजगाद राजा।
नृगस्तदात्मानमथो न्यवेदयत्
पुरातनं यज्ञसहस्रयाजिनम् ॥ ५३६ ॥

तथा ब्रुवाणं तु तमाह माधवः
शुभं त्वया कर्म कृतं न पापकम्।
कथं भवान्दुर्गतिमीदृशीं गतो
नरेन्द्र तद्ब्रूहि किमेतदीदृशम् ॥ ५३७ ॥

नृगस्ततोऽब्रवीत्कृष्णं ब्राह्मणस्याग्निहोत्रिणः।
प्रोषितस्य परिभ्रष्टा गौरेका मम गोधने ॥ ५३८ ॥

गवां सहस्रे सङ्ख्याता तदा सा पशुपैर्मम।
सा ब्राह्मणाय मे दत्ता प्रेत्यार्थमभिकाङ्क्षता ॥ ५३९ ॥

अपश्यत्परिमार्गंश्च ता गां परगृहे द्विजः।
ममेयमिति चोवाच ब्राह्मणो यस्य साऽभवत् ॥ ५४० ॥

तावुभौ समनुप्राप्तौ विवदन्तौ भृशज्वरौ।
भवान्दाता भवान्हर्तेत्यथ तौ मामवोचताम् ॥ ५४१ ॥

शतेन शतसङ्ख्येन गवां विनिमयेन वै।
याचे प्रतिग्रहीतारं स तु मामब्रवीदिदम् ॥ ५४२ ॥

देशकालोपसम्पन्ना दोग्ध्री शान्तातिवत्सला।
स्वादुक्षीरप्रदा धन्या मम नित्यं निवेशने ॥ ५४३ ॥

कृशं च भरते सा गौर्मम पुत्रमपस्तनम्।
न सा शक्या मया दातुमित्युक्त्वा स जगाम ह ॥ ५४४ ॥

ततस्तमपरं विप्रं याचे विनिमयेन वै।
गवां शतसहस्रं हि तत्कृते गृह्यतामिति ॥ ५४५ ॥

ब्राह्मण०—न राज्ञः प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे।
सैव गौर्दीयतां शीघ्रं ममेति मधुसूदन ॥ ५४६ ॥

रुक्ममश्वांश्च ददतो रजतस्यन्दनांस्तथा ।
न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः ॥ ५४७ ॥

एतस्मिन्नेव काले तु चोदितः कालधर्मणा ।
पितृलोकमहं प्राप्य धर्मराजमुपागमम् ॥ ५४८ ॥

यमस्तु पूजयित्वा मां ततो वचनमब्रवीत् ।
नान्तः सङ्ख्यायते राजंस्तव पुण्यस्य कर्मणः ॥ ५४९ ॥

अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया ।
चरस्व पापं पश्चाद्वा पूर्वं वा त्वं यथेच्छसि ॥ ५५० ॥

रक्षिताऽस्मीति चोक्तं ते प्रतिज्ञा चानृता तव ।
ब्राह्मणस्वस्य चादानं द्विविधस्ते व्यतिक्रम ॥ ५५१ ॥

पूर्वं कृच्छ्रं चरिष्येऽहं पश्चाच्छुभमिति प्रभो ।
धर्मराजं ब्रुवन्नेवं पतितोऽस्मि महीतले ॥ ५५२ ॥

अश्रौषं पतितश्चाहं यमस्योच्चैः प्रभाषतः ।
वासुदेवः समुद्धर्ता भविता ते जनार्दनः ॥ ५५३ ॥

पूर्णे वर्षसहस्रान्ते क्षीणे कर्मणि दुष्कृते ।
प्राप्स्यसे शाश्वताल्लोकाञ्जितान्स्वेनैव कर्मणा ॥ ५५४ ॥

कूपेऽऽत्मानमधःशीर्षमपश्यं पतितश्च ह ।
तिर्यग्योनिमनुप्राप्तं न च मामजहात्स्मृतिः ॥ ५५५ ॥

त्वया तु तारितोऽस्म्यद्य किमन्यत्र तपोबलात् ।
अनुजानीहि मां कृष्ण गच्छेयं दिवमद्य वै ॥ ५५६ ॥

अनुज्ञातः स कृष्णेन नमस्कृत्य जनार्दनम् ।
दिव्यमास्थाय पन्थानं ययौ दिवमरिन्दमः ॥ ५५७ ॥

ततस्तस्मिन्दिवं याते नृगे भरतसत्तम ।
वासुदेव इमं श्लोकं जगाद कुरुनन्दन ॥ ५५८ ॥

ब्राह्मणस्वं न हर्तव्यं पुरुषेण विजानता ।
ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव ॥ ५५९ ॥

(अ. ७४) विक्रयार्थं हि यो हिंस्याद्भक्षयेद्वा निरङ्कुशः ।
घातयानं हि पुरुषं येऽनुमन्येयुरर्थिन ॥ ५६० ॥

घातकः खादको वापि तथा यश्चानुमन्यते ।
यावन्ति तस्या रोमाणि तावद्वर्षाणि मज्जति ॥ ५६१ ॥

ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके ।
विक्रये चापहारे च ते दोषा वै स्मृताः प्रभो ॥ ५६२ ॥

अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति ।
यावद्दानफलं तस्यास्तावन्निरयमृच्छति ॥ ५६३ ॥

(अ. ८०) गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ॥ ५६४ ॥

इत्याचम्य जपेत्सायं प्रातश्च पुरुषः सदा ।
यदह्ना कुरुते पापं तस्मात्स परिमुच्यते ॥ ५६५ ॥

(अ. ८१) गावः प्रतिष्ठा भूतानां तथा गावः परायणम् ।
गावः पुण्याः पवित्राश्च गोधनं पावनं तथा ॥ ५६६ ॥

पूर्वमासन्नशृङ्गा वै गाव इत्यनुशुश्रुम ।
शृङ्गार्थे समुपासन्त ताः किल प्रभुमव्ययम् ॥ ५६७ ॥

ततो ब्रह्मा तु गाः प्रायमुपविष्टाः समीक्ष्य ह ।
ईप्सितं प्रददौ ताभ्यो गोभ्यः प्रत्येकशः प्रभुः ॥ ५६८ ॥

तासां शृङ्गाण्यजायन्त यस्या यादृङ्मनोगतम् ।
नानावर्णाः शृङ्गवन्त्यस्ता व्यरोचन्त पुत्रक ॥ ५६९ ॥

ब्रह्मणा वरदत्तास्ता हव्यकव्यप्रदाः शुभाः ।
पुण्याः पवित्राः सुभगा दिव्यसंस्थानलक्षणाः ॥ ५७० ॥

गावस्तेजो महद्दिव्यं गवां दानं प्रशस्यते ।

ये चैताः संप्रयच्छन्ति साधवो वीतमत्सराः ।
ते वै सुकृतिनः प्रोक्ताः सर्वदानप्रदाश्च ते ॥ ५७१ ॥

(अ. ९०) कीदृशेभ्य॰ प्रदातव्यं भवेत् श्राद्धं पितामह ।
युधि०– द्विजेभ्य॰ कुरुशार्दूल तन्मे व्याख्यातुमर्हसि ॥ ५७२ ॥
भीष्म०– ब्राह्मणान्न परीक्षेत क्षत्रियो दानधर्मवित् ।
दैवे कर्मणि पित्र्ये तु न्याय्यमाहु॰ परीक्षणम् ॥ ५७३ ॥

देवता पूजयन्तीह दैवेनैवेह तेजसा ।
उपेत्य तस्माद्देवेभ्य॰ सर्वेभ्यो दापयेन्नर ॥ ५७४ ॥

श्राद्धे त्वथ महाराज परीक्षेद्ब्राह्मणान् बुध ।
कुलशीलवयोरूपैर्विद्ययाऽभिजनेन च ॥ ५७५ ॥

तेषामन्ये पङ्क्तिदूषास्तथाऽन्ये पङ्क्तिपावना॰ ।
अपाङ्क्तेयास्तु ये राजन् कीर्तयिष्यामि तान् शृणु ॥५७६॥

कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृति ।
ग्रामप्रेष्यो वार्धुषिको गायन सर्वविक्रयी ॥ ५७७ ॥

अगारदाही गरद॰ कुण्डाशी सोमविक्रयी ।
सामुद्रिको राजभृत्यस्तैलिक कूटकारक ॥ ५७८ ॥

पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ।
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ॥ ५७९ ॥

पर्वकारश्च सूची च मित्रध्रुक् पारदारिक॰ ।
अव्रतानामुपाध्याय॰ काण्डपृष्ठस्तथैव च ॥ ५८० ॥

श्वभिश्च य॰ परिक्रामेद्यः शुना दष्ट एव च ।
परिवित्तिश्च यश्च स्याद्दुश्चर्मा गुरुतल्पग॰ ॥ ५८१ ॥

कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ।
ईदृशैर्ब्राह्मणैर्भुक्तमपाङ्क्तेयैर्युधिष्ठिर ।
रक्षांसि गच्छते हव्यमित्याहुर्ब्रह्मवादिन ॥ ५८२ ॥

पाङ्क्तेयांस्तु प्रवक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः ।
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ॥ ५८३ ॥

ब्रह्मदेयानुमन्तानश्छन्दोगो ज्येष्ठसामगः ।
मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः ॥ ५८४ ॥

ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा ।
वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत ॥ ५८५ ॥

अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः ।
सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत् ॥ ५८६ ॥

## बिसस्तैन्योपाख्यानम्

(अ ९३) यदिदं तप इत्याहुरुपवासं पृथग्जनाः ।
युधि०— तपः स्यादेतदेवेह तपोऽन्यद्वाऽपि किं भवेत् ॥ ५८७ ॥

भीष्म०— मासार्धमासोपवासाद्यत्तपो मन्यते जनः ।
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित् ॥ ५८८ ॥

त्यागस्य चापि संपत्तिः शिष्यते तप उत्तमम् ।
सदोपवासी च भवेद्ब्रह्मचारी तथैव च ॥ ५८९ ॥

मुनिश्च स्यात्सदा विप्रो वेदांश्चैव सदा जपेत् ।
कुटुम्बिको धर्मकामः सदास्वप्नश्च मानवः ॥ ५९० ॥

अमांसाशी सदा च स्यात्पवित्रं च सदा पठेत् ।
ऋतवादी सदा च स्यान्नियतश्च सदा भवेत् ॥ ५९१ ॥

विघसाशी कथं च स्यात्सदा चैवातिथिप्रियः ।
अमृताशी सदा च स्यात्पवित्री च सदा भवेत् ॥ ५९२ ॥

अन्तरा सायमाशं च प्रातराशं च यो नरः ।
सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः । ५९३ ॥

भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति चैव ह ।
ऋतवादी सदा च स्याद्दानशीलस्तु मानवः ॥ ५९४ ॥

अभक्षयन् वृथा मांसममांसाशी भवत्युत ।
दानं ददत्पवित्री स्यादस्वप्नश्च दिवाऽस्वपन् ॥ ५९५ ॥

भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ ५९६ ॥

अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ ५९७ ॥

देवेभ्यश्च पितृभ्यश्च संश्रितेभ्यस्तथैव च।
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम् ॥ ५९८ ॥

युधि०– ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च।
दातृप्रतिग्रहीत्रोर्वै को विशेषः पितामह ॥ ५९९ ॥

भीष्म०– साधोर्यः प्रतिगृह्णीयात्तथैवासाधुतो द्विजः।
गुणवत्यल्पदोषः स्यान्निर्गुणे तु निमज्जति ॥ ६०० ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
वृषादर्भेश्च संवादं सप्तर्षीणां च भारत ॥ ६०१ ॥

कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः।
विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती ॥ ६०२ ॥

सर्वेषामथ तेषां तु गण्डाभूत्कर्मकारिका।
शूद्रः पशुसखश्चैव भर्ता चास्या बभूव ह ॥ ६०३ ॥

ते च सर्वे तपस्यन्तः पुरा चेरुर्महीमिमाम्।
समाधिनोपशिक्षन्तो ब्रह्मलोकं सनातनम् ॥ ६०४ ॥

अथाभवदनावृष्टिर्महती कुरुनन्दन।
कृच्छ्प्राणोऽभवद्यत्र लोकोऽयं वै क्षुधान्वितः ॥ ६०५ ॥

कस्मिंश्चिच्च पुरा यज्ञे शैब्येन शिबिसूनुना।
दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रः पुरा किल ॥ ६०६ ॥

अस्मिन्कालेऽथ सोल्पायुर्दिष्टान्तमगमत्प्रभुः।
ते तं क्षुधाभिसन्तप्ताः परिवार्योपतस्थिरे ॥ ६०७ ॥

याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः।
अपचन्त तदा स्थाल्यां क्षुधार्ताः किल भारत ॥ ६०८ ॥

निरन्ने मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः।
कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः ॥ ६०९ ॥
अटमानोऽथ तान्मार्गे पचमानान्महीपतिः।
राजा शैब्यो वृषादर्भि क्लिश्यमानान्ददर्श ह ॥ ६१० ॥
वृषा०- प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्यताम्।
मयि यद्विद्यते वित्तं तद्वृणुध्वं तपोधनाः ॥ ६११ ॥
प्रियो हि मे ब्राह्मणो याच्यमानो
दद्यामहं व्रीहिरसं यवाश्च।
नास्मिन्नभक्ष्ये भावमेव कुरुध्वं
पुष्ट्यर्थं व किं प्रयच्छाम्यहं वै ॥ ६१२ ॥
ऋषय०-राजन्प्रतिग्रहो राज्ञा मध्वास्वादो विषोपमः।
तज्जानमान· कस्मात्त्व कुरुषे न· प्रलोभनम् ॥ ६१३ ॥
अह्नापीह तपो जातु ब्राह्मणस्योपजायते।
तद्दाव इव निर्दह्यात्प्राप्तो राजप्रतिग्रहः ॥ ६१४ ॥
कुशलं सह दानेन राजन्नस्तु सदा तव।
अर्थिभ्यो दीयता सर्वमित्युक्त्वाऽन्येन ते ययु· ॥ ६१५ ॥
अपक्कमेव तन्मासमभूत्तेषां महात्मनाम्।
अथ हित्वा ययुः सर्वे वनमाहारकाङ्क्षिणः ॥ ६१६ ॥
तत· प्रचोदिता राज्ञा वनं गत्वाऽस्य मन्त्रिणः।
प्रचीयोदुम्बराणि स्म दातु तेषां प्रचक्रिरे ॥ ६१७ ॥
उदुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन्।
भृत्यास्तेषा ततस्तानि प्रग्राहितुमुपाद्रवन् ॥ ६१८ ॥
गुरूणीति विदित्वाथ न ग्राह्याण्यत्रिरब्रवीत्।
अत्रि०- इह ह्येतदुपादत्तं प्रेत्य स्यात्कटुकोदयम् ॥ ६१९ ॥
अप्रतिग्राह्यमेवैतत्प्रेत्येह च सुखेप्सुना।
ऋषय०-कुशलं सह दानेन तस्मै यस्य प्रजा इमाः।
फलान्युपधियुक्तानि य एवं नः प्रयच्छति ॥ ६२० ॥

इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि वै ।
ऋषयो जग्मुरन्यत्र सर्व एव धृतव्रता· ॥ ६२१ ॥

मन्त्रि०- उपधिं शङ्कमानास्ते हित्वा तानि फलानि वै ।
ततोऽन्येनैव गच्छन्ति विदितं तेऽस्तु पार्थिव ॥ ६२२ ॥

इत्युक्त· स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह ।
तेषा वै प्रतिकर्तुं च सर्वेषामगमद्गृहम् ॥ ६२३ ॥

स गत्वा हवनीयेऽग्नौ तीव्रं नियममास्थितः ।
जुहाव संस्कृतैर्मन्त्रैरेकैकामाहुतिं नृपः ॥ ६२४ ॥

तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयङ्करी ।
तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत् ॥ ६२५ ॥

सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता ।
वृषादर्भिं नरपतिं किं करोमीति चाब्रवीत् ॥ ६२६ ॥

वृषा०- ऋषीणा गच्छ सप्तानामरुन्धत्यास्तथैव च ।
दासीभर्तुश्च दास्याश्च मनसा नाम धारय ॥ ६२७ ॥

ज्ञात्वा नामानि चैवैषां सर्वानेतान्विनाशय ।
विनष्टेषु तथा स्वैरं गच्छ यत्रेप्सितं तव ॥ ६२८ ॥

सा तथेति प्रतिश्रुत्य यातुधानी स्वरूपिणी ।
जगाम तद्वनं यत्र विचेरुस्ते महर्षय· ॥ ६२९ ॥

अथात्रिप्रमुखा राजन् वने तस्मिन्महर्षय· ।
व्यचरन् भक्षयन्तो वै मूलानि च फलानि च ॥ ६३० ॥

अथापश्यन्सुपीनासपाणिपादमुखोदरम् ।
परिव्रजन्तं स्थूलाङ्गं परिव्राजं शुना सह ॥ ६३१ ॥

अथ दृष्ट्वा परिव्राट् स तान् महर्षीन् शुना सह ।
अभिगम्य यथान्यायं पाणिस्पर्शमथाचरत् ॥ ६३२ ॥

परिचर्यां वने तां तु क्षुत्प्रतीघातकारिकाम् ।
अन्योन्येन निवेद्याथ प्रातिष्ठन्त सहैव ते ॥ ६३३ ॥

एकनिश्चयकार्याश्च व्यचरन्त वनानि ते।
आददानाः समुद्धृत्य मूलानि च फलानि च ॥ ६३४ ॥

कदाचिद्विचरन्तस्ते वृक्षैरविरलैर्वृताम्।
शुचिवारिप्रसन्नोदां ददृशुः पद्मिनीं शुभाम् ॥ ६३५ ॥

वृषादर्भिप्रयुक्ता तु कृत्या विकृतदर्शना।
यातुधानीति विख्याता पद्मिनीं तामरक्षत ॥ ६३६ ॥

पशुसखसहायास्तु बिसार्थे ते महर्षय.।
पद्मिनीमभिजग्मुस्ते सर्वे कृत्याभिरक्षिताम् ॥ ६३७ ॥

शुन'सखा च हत्वा तां यातुधानी महाबलाम्।
भुवि त्रिदण्ड विष्टभ्य शाद्वले समुपाविशत् ॥ ६३८ ॥

ततस्ते मुनय. सर्वे पुष्कराणि बिसानि च।
यथाकाममुपादाय समुत्तस्थुर्मुदान्विता. ॥ ६३९ ॥

श्रमेण महता कृत्वा ते बिसानि कलापश.।
तीरे निक्षिप्य पद्मिन्यास्तर्पणं चक्रुरम्भसा ॥ ६४० ॥

अथोत्थाय जलात्तस्मात्सर्वे ते समुपागमन्।
नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभा. ॥ ६४१ ॥

ऋषय०–केन क्षुधा परीतानामस्माकं पापकर्मणा।
नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ॥ ६४२ ॥

शुनः०– मया ह्यन्तर्हितानीह बिसानीमानि पश्यत।
परीक्षार्थं भगवता कृतमेवं मयाऽनघाः ॥ ६४३ ॥

रक्षणार्थं च सर्वेषां भवतामहमागतः।
यातुधानी ह्यतिक्रूरा कृत्यैषा वो वधैषिणी।
वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः ॥ ६४४ ॥

दुष्टा हिंस्यादियं पापा युष्मान्प्रत्यग्निसंभवा।
तस्मादस्म्यागतो विप्रा वासवं मां निबोधत ॥ ६४५ ॥

अलोभादक्षया लोकाः प्राप्ता वै सार्वकामिका ।
उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ॥ ६४६ ॥

ततो महर्षय· प्रीतास्तथेत्युक्त्वा पुरन्दरम् ।
सहैव त्रिदशेन्द्रेण सर्वे जग्मुस्त्रिविष्टपम् ॥ ६४७ ॥

एवमेते महात्मानो भोगैर्बहुविधैरपि ।
क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभि ॥ ६४८ ॥

नैव लोभं तदा चक्रुस्तत· स्वर्गमवाप्नुवन् ।
तस्मात्सर्वास्ववस्थासु नरो लोभं विवर्जयेत् ॥ ६४९ ॥

## आयुष्याख्यानम् , मांसवर्जनम्

(अ.१०४) आयुष्मान्केन भवति अल्पायुर्वाऽपि मानव ।
युधि०- केन वा लभते कीर्तिं केन वा लभते श्रियम् ॥ ६५० ॥

तपसा ब्रह्मचर्येण जपहोमैस्तथौषधै· ।
कर्मणा मनसा वाचा तन्मे ब्रूहि पितामह ॥ ६५१ ॥

भीष्म०- आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥ ६५२ ॥

दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
तस्मात्कुर्यादिहाचारं यदिच्छेद्भूतिमात्मनः ॥ ६५३ ॥

आचारलक्षणो धर्म· सन्तश्चारित्रलक्षणा· ।
साधूनां च यथावृत्तमेतदाचारलक्षणम् ॥ ६५४ ॥

अप्यदृष्टं श्रवादेव पुरुषं धर्मचारिणम् ।
भूतिकर्माणि कुर्वाणं तं जना· कुर्वते प्रियम् ॥ ६५५ ॥

ये नास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुष·॥ ६५६ ॥

अक्रोधनः सत्यवादी भूतानामविहिंसक· ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ ६५७ ॥

लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः।
नित्योच्छिष्टः सङ्कुसुको नेहायुर्विन्दते महत् ॥ ६५८ ॥
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्।
उत्थायाचम्य तिष्ठेत पूर्वां सन्ध्यां कृताञ्जलिः।
एवमेवापरां सन्ध्यां समुपासीत वाग्यतः ॥ ६५९ ॥
नेक्षेतादित्यमुद्यन्त नास्तं यान्तं कदाचन।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥ ६६० ॥
ऋषयो नित्यसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन्।
तस्मात्तिष्ठेत्सदा पूर्वां पश्चिमा चैव वाग्यतः ॥ ६६१ ॥
ये न पूर्वामुपासन्ते द्विजाः सन्ध्यां न पश्चिमाम्।
सर्वास्तान् धार्मिको राजा शूद्रकर्माणि कारयेत् ॥ ६६२ ॥
परदारा न गन्तव्या सर्ववर्णेषु कर्हिचित्।
न हीदृशमनायुष्यं लोके किञ्चन विद्यते।
यादृशं पुरुषस्येह परदारोपसेवनम् ॥ ६६३ ॥
प्रसाधनं च केशानामञ्जनं दन्तधावनम्।
पूर्वाह्ण एव कार्याणि देवतानां च पूजनम् ॥ ६६४ ॥
पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन ॥ ६६५ ॥
नातिकल्यं नातिसायं न च मध्यन्दिने स्थिते।
नाज्ञातैः सह गच्छेत नैको न वृषलैः सह ॥ ६६६ ॥
पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ ६६७ ॥
मध्यन्दिने निशाकाले अर्धरात्रे च सर्वदा।
चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च ॥ ६६८ ॥
उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत्।
ब्रह्मचारी च नित्यं स्यात्पादं पादेन नाक्रमेत् ॥ ६६९ ॥
अमावास्यां पौर्णमास्यां चतुर्दश्यां च सर्वशः।
अष्टम्या सर्वपक्षाणां ब्रह्मचारी सदा भवेत् ॥ ६७० ॥

वृथा मांसं न खादेत पृष्ठमांसं तथैव च ।
आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ॥ ६७१ ॥
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषस्तम्भाभिमानं च तैक्ष्ण्यं च परिवर्जयेत् ॥ ६७२ ॥
परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत् ।
अन्यत्र पुत्राच्छिष्याच्च शिक्षार्थं ताडनं स्मृतम् ॥ ६७३ ॥
कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुन ।
पादप्रक्षालनं कुर्यात्स्वाध्याये भोजने तथा ॥ ६७४ ॥
संयाव कृसरं मांसं शष्कुली पायसं तथा ।
आत्मार्थं न प्रकर्तव्य देवार्थं तु प्रकल्पयेत् ॥ ६७५ ॥
मातापितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्यमथवाप्यन्य तथायुर्विन्दते महत् ॥ ६७६ ॥
न चाज्ञातां स्त्रियं गच्छेद्गर्भिणीं वा कदाचन ।
उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ॥ ६७७ ॥
प्राक्शिरास्तु स्वपेद्विद्वानथवा दक्षिणाशिरा ।
न भग्ने नावशीर्णे च शयने प्रस्वपीत च ।
नान्तर्धाने न संयुक्ते न च तिर्यक्कदाचन ॥ ६७८ ॥
न चापि गच्छेत्कार्येण समयाद्वापि नास्तिकै ।
आसनं तु पदाऽऽकृष्य न प्रसज्जेत्तथा नरः ॥ ६७९ ॥
न नग्नः कर्हिचित्स्नायान्न निशायां कदाचन ।
स्नात्वा च नावमृज्येत गात्राणि सुविचक्षण ॥ ६८० ॥
न चानुलिम्पेदस्नात्वा स्नात्वा वासो न निर्धुनेत् ।
न चैवार्द्राणि वासांसि नित्यं सेवेत मानव ॥ ६८१ ॥
उदक्यया च सम्भाषां न कुर्वीत कदाचन ।
नोत्सृजेत पुरीषं च क्षेत्रे ग्रामस्य चान्तिके ।
उभे मूत्रपुरीषे तु नाप्सु कुर्यात्कदाचन ॥ ६८२ ॥

प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ।
प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत् ॥ ६८३ ॥

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
धन्यं पश्चान्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥६८४

निषण्णश्चापि खादेत न तु गच्छन्कदाचन ।
मूत्र नोत्तिष्ठता कार्यं न भस्मनि न गोव्रजे ॥ ६८५ ॥

आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ॥ ६८६ ॥

त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कदाचन ।
अग्निं गां ब्राह्मणं चैव तथा ह्यायुर्न रिष्यते ॥ ६८७ ॥

त्रीणि तेजासि नोच्छिष्ट उदीक्षेत कदाचन ।
सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वश. ॥ ६८८ ॥

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्या पुनस्तान्प्रतिपद्यते ॥ ६८९ ॥

अभिवादयीत वृद्धांश्च दद्याच्चैवासनं स्वयम् ।
कृताञ्जलिरुपासीत गच्छन्त पृष्ठतोऽन्वियात् ॥ ६९० ॥

न चासीतासने भिन्ने भिन्नकास्यं च वर्जयेत् ।
नैकवस्त्रेण भोक्तव्य न नग्नः स्नातुमर्हति ॥ ६९१ ॥

स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ।
उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥ ६९२ ॥

केशग्रहं प्रहारांश्च शिरस्येतान्विवर्जयेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मन शिरः ।
न चाभीक्ष्णं शिर. स्नायात्तथास्यायुर्न रिष्यते ॥ ६९३ ॥

शिरस्नातस्तु तैलैश्च नाङ्गं किञ्चिदपि स्पृशेत् ।
तिलसृष्टं न चाश्नीयात्तथास्यायुर्न रिष्यते ॥ ६९४ ॥

नाध्यापयेत्तथोच्छिष्टो नाधीयीत कदाचन ।
वाते च पूतिगन्धे च मनसाऽपि न चिन्तयेत् ॥ ६९५ ॥

प्रत्यादित्यं प्रत्यनलं प्रति गां च प्रति द्विजान् ।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ॥ ६९६ ॥
त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषु. ।
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ॥ ६९७ ॥
गुरुणा चैव निर्बन्धो न कर्तव्य. कदाचन ।
अनुमान्य प्रसाद्यश्च गुरु. क्रुद्धो युधिष्ठिर ॥ ६९८ ॥
दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ॥ ६९९ ॥
विपर्ययं न कुर्वीत वाससो बुद्धिमान्नरः ।
तथा नान्यधृतं धार्यं न चापदशमेव च ॥ ७०० ॥
अन्यदेव भवेद्वास. शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥ ७०१ ॥
समानमेकपात्रे तु भुञ्जेन्नान्नं जनेश्वर ।
नालीढया परिहृतं भक्षयीत कदाचन ॥ ७०२ ॥
तथा नोद्धृतसाराणि प्रेक्षते नाप्रदाय च ।
न सन्निकृष्टे मेधावी नाशुचेर्न च सत्सु च ॥ ७०३ ॥
प्रतिषिद्धान्न धर्मेषु भक्ष्यान् भुञ्जीत पृष्ठत. ।
पिप्पलं च वटं चव शणशाकं तथैव च ॥ ७०४ ॥
उदुम्बरं न खादेच्च भवार्थी पुरुषोत्तमः ।
आजं गव्यं तथा मांसं मायूरं चैव वर्जयेत् ॥ ७०५ ॥
वर्जयेच्छुष्कमांसं च तथा पर्युषितं च यत् ।
न पाणौ लवणं विद्वान् प्राश्नीयान्न च रात्रिषु ॥ ७०६ ॥
दधिसक्तून्न भुञ्जीत वृथामांसं च वर्जयेत् ।
सायंप्रातश्च भुञ्जीत नान्तराले समाहित. ॥ ७०७ ॥
वालेन तु न भुञ्जीत परश्राद्धं तथैव च ।
वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन ।
भूमौ सदैव नाश्नीयान्नाऽनासीनो न शब्दवत् ॥ ७०८ ॥

समानमेकपङ्क्त्या तु भोज्यमन्नं नरेश्वर।
विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने ॥ ७०९ ॥
भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत्।
दधि चाप्यनुपानं वै न कर्तव्यं भवार्थिना ॥ ७१० ॥
परापवादं न ब्रूयान्नाप्रियं च कदाचन।
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना ॥ ७११ ॥
पतितैस्तु कथा नेच्छेद्दर्शनं च विवर्जयेत्।
संसर्गं च न गच्छेत तथाऽऽयुर्विन्दते महत् ॥ ७१२ ॥
न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम्।
न चास्नाता स्त्रियं गच्छेत् तथाऽयुर्विन्दते महत् ॥ ७१३ ॥
वृद्धो ज्ञातिस्तथा मित्रं दरिद्रो यो भवेदपि।
गृहे वासयितव्यास्ते धन्यमायुष्यमेव च ॥ ७१४ ॥
महात्मनोऽतिगुह्यानि न वक्तव्यानि कर्हिचित्।
सन्ध्यायां न स्वपेद्राजन्विद्या न च समाचरेत्।
न भुञ्जीत च मेधावी तथाऽऽयुर्विन्दते महत् ॥ ७१५ ॥
नक्तं न कुर्यात्पित्र्याणि भुक्त्वा चैव प्रसाधनम्।
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ॥ ७१६ ॥
प्राङ्मुखः श्मश्रुकर्माणि कारयेत्सुसमाहितः।
उदङ्मुखो वा राजेन्द्र तथाऽऽयुर्विन्दते महत् ॥ ७१७ ॥
वर्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम।
समार्षां व्यङ्गितां चैव मातुः स्वकुलजां तथा ॥ ७१८ ॥
वृद्धां प्रव्रजितां चैव तथैव च पतिव्रताम्।
तथा निकृष्टवर्णां च वर्णोत्कृष्टां च वर्जयेत् ॥ ७१९ ॥
अयोनिं च वियोनिं च न गच्छेत विचक्षणः।
पिङ्गलां कुष्ठिनीं नारीं न त्वमुद्वोढुमर्हसि ॥ ७२० ॥
अपस्मारिकुले जातां निहीनां चापि वर्जयेत्।
श्वित्रिणां च कुले जातां क्षयिणां मनुजेश्वर ॥ ७२१ ॥

लक्षणैरन्विता या च प्रशस्ता या च लक्षणै.।
मनोज्ञां दर्शनीयां च तां भवान्वोढुमर्हति ॥ ७२२ ॥

न चेर्ष्या स्त्रीषु कर्तव्या रक्ष्या दाराश्च सर्वश.।
अनायुष्या भवेदीर्ष्या तस्मादीर्षां विवर्जयेत् ॥ ७२३ ॥

पारदार्यमनायुष्यं नापितोच्छिष्टता तथा।
यत्नतो वै न कर्तव्यमभ्यासश्चैव भारत ॥ ७२४ ॥

अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत दर्शकः।
अनर्चिते ह्यनायुष्यं गमनं तत्र भारत ॥ ७२५ ॥

न चैकेन परिव्रज्यं न गन्तव्यं तथा निशि।
अनागतायां सन्ध्यायां पश्चिमाया गृहे वसेत् ॥ ७२६ ॥

मातु. पितुर्गुरूणां च कार्यमेवानुशासनम्।
हितं चाप्यहितं चापि न विचार्य नरर्षभ ॥ ७२७ ॥

धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप।
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव ह ॥ ७२८ ॥

यत्नवान्भव राजेन्द्र यत्नवान्सुखमेधते।
अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च ॥ ७२९ ॥

प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित्।
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ॥ ७३० ॥

गान्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप।
पुराणमितिहासाश्च तथाऽऽख्यानानि यानि च।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥ ७३१ ॥

पत्नी रजस्वला या च नाभिगच्छेन्न चाह्वयेत्।
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षण. ॥ ७३२ ॥

पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान्भवेत्।
एतेन विधिना पत्नीमुपगच्छेत पण्डित. ॥ ७३३ ॥

ज्ञातिसम्बन्धिमित्राणि पूजनीयानि सर्वश. ॥ ७३४ ॥

आचारो भूतिजनन आचार॰ कीर्तिवर्धनः ।
आचाराद्वर्धते ह्यायुराचारो हन्त्यलक्षणम् ॥ ७३५ ॥
एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
अनुकम्प्य सर्ववर्णान् ब्रह्मणा समुदाहृतम् ॥ ७३६ ॥
(अ १११)तयो॰ संवदतोरेवं पार्थगाङ्गेययोस्तदा ।
आजगाम विशुद्धात्मा नाकपृष्ठाद्बृहस्पतिः ॥ ७३७ ॥
ततो धर्मसुतो राजा भगवन्तं बृहस्पतिम् ।
उपगम्य यथान्यायं प्रश्नं पप्रच्छ तत्त्वतः ॥ ७३८ ॥
भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
मर्त्यस्य कः सहायो वै पिता माता सुतो गुरुः ॥ ७३९ ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं जनाः ।
गच्छन्त्यमुत्र लोकं वै क एनमनुगच्छति ॥ ७४० ॥
बृह०- एकः प्रसूयते राजन्नेक एव विनश्यति ।
एकस्तरति दुर्गाणि गच्छत्येकस्तु दुर्गतिम् ॥ ७४१ ॥
असहाय॰ पिता माता तथा भ्राता सुतो गुरु॰ ।
ज्ञातिसम्बन्धिवर्गश्च मित्रवर्गस्तथैव च ॥ ७४२ ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं जनाः ।
मुहूर्तमिव रोदित्वा ततो यान्ति पराङ्मुखाः ॥ ७४३ ॥
तैस्तच्छरीरमुत्सृष्टं धर्म एको ऽनुगच्छति ।
तस्माद्धर्मः सहायश्च सेवितव्य॰ सदा नृभिः ॥ ७४४ ॥
प्राणी धर्मसमायुक्तो गच्छेत्स्वर्गगतिं पराम् ।
तथैवाधर्मसंयुक्तो नरकं चोपपद्यते ॥ ७४५ ॥
तस्मान्न्यायागतैरर्थैर्धर्मं सेवेत पण्डितः ॥ ७४६ ॥
(अ.११२)कृत्वा पापानि कर्माणि अधर्मवशमागत॰ ।
मनसा विपरीतेन निरयं प्रतिपद्यते ॥ ७४७ ॥
मोहादधर्मं यः कृत्वा पुनः समनुतप्यते ।
मनःसमाधिसंयुक्तो न स सेवेत दुष्कृतम् ॥ ७४८ ॥

यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हते।
तथा तथा शरीरं तु तेनाधर्मेण मुच्यते ॥ ७४९ ॥
यथा यथा नरः सम्यगधर्ममनुभाषते।
समाहितेन मनसा विमुच्येत तथा तथा।
भुजङ्ग इव निर्मोकात्पूर्वभुक्ताऽज्जरान्वितात् ॥ ७५० ॥
(अ.११३)इत्युक्त्वा तं सुरगुरुर्धर्मराजं युधिष्ठिरम्।
दिवमाचक्रमे धीमान् पश्यतामेव नस्तदा ॥ ७५१ ॥
(अ.११४)ततो युधिष्ठिरो राजा शरतल्पे पितामहम्।
पुनरेव महातेजाः पप्रच्छ वदता वरः ॥ ७५२ ॥
कर्मणा मनुजः कुर्वन् हिंसां पार्थिवसत्तम।
वाचा च मनसा चैव कथं दुःखात् प्रमुच्यते ॥ ७५३ ॥
भीष्म०–चतुर्विधेयं निर्दिष्टा ह्यहिंसा ब्रह्मवादिभिः।
एकैकतोऽपि विभ्रष्टा न भवत्यरिसूदन ॥ ७५४ ॥
यथा सर्वश्चतुष्पाद्वै त्रिभिः पादैर्न तिष्ठति।
तथैवेयं महीपाल कारणैः प्रोच्यते त्रिभिः ॥ ७५५ ॥
यथा नागपदेऽन्यानि पदानि पदगामिनाम्।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे।
एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः पुरा ॥ ७५६ ॥
कर्मणा लिप्यते जन्तुर्वाचा च मनसापि च।
पूर्वं तु मनसा त्यक्त्वा तथा वाचाऽथ कर्मणा।
न भक्षयति यो मांसं त्रिविधं च विमुच्यते ॥ ७५७ ॥
(अ.११५)सप्तर्षयो वालखिल्यास्तथैव च मरीचिपाः।
अमांसभक्षणं राजन्प्रशंसन्ति मनीषिणः ॥ ७५८ ॥
न भक्षयति यो मांसं न च हन्यान्न घातयेत्।
तन्मित्रं सर्वभूतानां मनुः स्वायंभुवोऽब्रवीत् ॥ ७५९ ॥
यदि चेत्खादको न स्यान्न तदा घातको भवेत्।
घातकः खादकार्थाय तद्घातयति वै नरः ॥ ७६० ॥

यो हि खादति मासानि प्राणिनां जीवितैषिणाम्।
हताना वा मृतानां वा यथा हन्ता तथैव स. ॥ ७६१ ॥
धनेन क्रयिको हन्ति खादकश्चोपभोगत.।
घातको वधबन्धाभ्यामित्येष त्रिविधो वध. ॥ ७६२ ॥
अखादन्ननुमोदंश्च भावदोषेण मानवः।
योऽनुमोदति हन्यन्तं सोऽपि दोषेण लिप्यते ॥ ७६३ ॥
हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्वश.।
मांसस्याभक्षणे धर्मो विशिष्ट इति नः श्रुति. ॥ ७६४ ॥
प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया।
अल्पदोषमिह ज्ञेयं विपरीते तु लिप्यते ॥ ७६५ ॥
खादकस्य कृते जन्तून् यो हन्यात् पुरुषाधमः।
महादोषतरस्तत्र घातको न तु खादक. ॥ ७६६ ॥
भक्षयित्वापि यो मांसं पश्चादपि निवर्तते।
तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते ॥ ७६७ ॥
आहर्ता चानुमन्ता च विशस्ता क्रयविक्रयी।
संस्कर्ता चोपभोक्ता च खादकाः सर्व एव ते ॥ ७६८ ॥
(अ ११६) न मासात्परमं किञ्चिद्रसतो विद्यते भुवि।
क्षतक्षीणाभितप्ताना ग्राम्यधर्मरतात्मनाम्।
अध्वना कर्शितानां च न मांसाद्विद्यते परम् ॥ ७६९ ॥
सद्यो वर्धयति प्राणान्पुष्टिमग्र्यां दधाति च।
न भक्ष्योऽभ्यधिक. कश्चिन्मासादस्ति परन्तप ॥ ७७० ॥
विवर्जिते तु बहवो गुणाः कौरवनन्दन।
ये भवन्ति मनुष्याणां तान्मे निगदतः शृणु ॥ ७७१ ॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति।
नास्ति क्षुद्रतरस्तस्मात्स नृशंसतरो नरः ॥ ७७२ ॥
न हि प्राणात् प्रियतरं लोके किञ्चन विद्यते।
तस्माद्दयां नरः कुर्याद्यथाऽऽत्मनि तथा परे ॥ ७७३ ॥

शुक्राच्च तात संभूतिर्मांसस्येह न संशयः।
भक्षणे तु महान् दोषो निवृत्त्या पुण्यमुच्यते ॥ ७७४ ॥

विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति।
यज्ञार्थे पशव सृष्टा इत्यपि श्रूयते श्रुति ।
अतोऽन्यथा प्रवृत्ताना राक्षसो विधिरुच्यते ॥ ७७५ ॥

आरण्याः सर्वदैवत्या· सर्वश· प्रोक्षिता मृगा·।
अगस्त्येन पुरा राजन् मृगया येन पूज्यते ॥ ७७६ ॥

अतो राजर्षयः सर्वे मृगया यान्ति भारत।
न हि लिप्यन्ति पापेन न चैतत्पातकं विदुः ॥ ७७७ ॥

(अ.१३५)के भोज्या ब्राह्मणस्येह के भोज्या· क्षत्रियस्य ह॥
युधि०– तथा वैश्यस्य के भोज्या के शूद्रस्य च भारत ॥ ७७८ ॥

भीष्म०– ब्राह्मणा ब्राह्मणस्येह भोज्या ये चैव क्षत्रियाः।
वैश्याश्चापि तथा भोज्या· शूद्राश्च परिवर्जिता· ॥ ७७९ ॥

ब्राह्मणाः क्षत्रिया वैश्या भोज्या वै क्षत्रियस्य ह ।
वर्जनीयास्तु वै शूद्राः सर्वभक्षा विकर्मिणः ॥ ७८० ॥

वैश्यास्तु भोज्या विप्राणा क्षत्रियाणां तथैव च।
नित्याग्नयो विविक्ताश्च चातुर्मास्यरताश्च ये ॥ ७८१ ॥

शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम्।
मलं नृणां स पिबति मलं भुङ्क्ते जनस्य च ॥ ७८२ ॥

शुद्रकर्म तु य· कुर्यादवहाय स्वकर्म च।
स विज्ञेयो यथा शूद्रो न च भोज्य· कदाचन ॥ ७८३ ॥

गोघ्ने च ब्राह्मणघ्ने च सुरापे गुरुतल्पगे ।
भुक्त्वान्नं जायते विप्रो रक्षसां कुलवर्धन· ॥ ७८४ ॥

(अ.१३८)कथं केभ्यश्च धर्म्यं च दानं दातव्यमिष्यते।
युधि०– कै· कारणै कतिविधं श्रोतुमिच्छामि तत्त्वत· ॥ ७८५ ॥

भीष्म०– शृणु तत्त्वेन कौन्तेय दानं प्रति ममानघ।
यथा दानं प्रदातव्यं सर्ववर्णेषु भारत ॥ ७८६ ॥

धर्मादर्थाद्भयात्कामात्कारुण्यादिति भारत।
दानं पञ्चविधं ज्ञेयं कारणैर्यैर्निबोध तत् ॥ ७८७ ॥

इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्।
इति दानं प्रदातव्य ब्राह्मणेभ्योऽनसूयता ॥ ७८८ ॥

ददाति वा दास्यति वा मह्यं दत्तमनेन वा।
इत्यर्थिभ्यो निशम्यैव सर्वं दातव्यमर्थिने ॥ ७८९ ॥

नास्याहं न मदीयोऽयं पापं कुर्याद्विमानितः।
इति दद्याद्भयादेव दृढं मूढाय पण्डितः ॥ ७९० ॥

प्रियो मेऽयं प्रियोस्याऽऽहमिति संप्रेक्ष्य बुद्धिमान्।
वयस्यायैवमक्लिष्टं दानं दद्यादतन्द्रित· ॥ ७९१ ॥

दीनश्च याचते चायमल्पेनापि हि तुष्यति।
इति दद्याद्दरिद्राय कारुण्यादिति सर्वथा ॥ ७९२ ॥

इति पञ्चविधं दान पुण्यकीर्तिविवर्धनम्।
यथाशक्त्या प्रदातव्यमेवमाह प्रजापति ॥ ७९३ ॥

(अ १४१) दातव्यमसकृच्छक्त्या यष्टव्यमसकृत्तथा।
पुष्टिकर्मविधानं च कर्तव्यं भूतिमिच्छता ॥ ७९४ ॥

धर्मेणार्थः समाहार्यो धर्मलब्धं त्रिधा धनम्।
कर्तव्यं धर्मपरमं मानवेन प्रयत्नतः ॥ ७९५ ॥

एकेनांशेन धर्मार्थौ कर्तव्यौ भूतिमिच्छता।
एकेनांशेन कामार्थ एकमंशं विवर्धयेत् ॥ ७९६ ॥

निवृत्तिलक्षणस्त्वन्यो धर्मो मोक्षाय तिष्ठति।
सर्वभूतदया धर्मो न चैकग्रामवासिता ॥ ७९७ ॥

आशापाशविमोक्षश्च शस्यते मोक्षकाङ्क्षिणाम्।
न कुड्यां नोदके सङ्गो न वाससि न चासने।
न त्रिदण्डे न शयने नाग्नौ न शरणालये ॥ ७९८ ॥

अध्यात्मगतिचित्तो यस्तन्मनास्तत्परायणः।
आत्मन्येवात्मनो भावं समासज्जेत वै द्विजः।
एष मोक्षविदा धर्मो वेदोक्तः सत्पथः सताम् ॥ ७९९ ॥

चतुर्विधा भिक्षवस्ते कुटीचकबहूदकौ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः ॥ ८०० ॥

ज्ञानविज्ञानसंपन्नानूहापोहविशारदान्।
प्रवक्तॄन् पृच्छते योऽन्यान् स वै नापदमृच्छति ॥ ८०१ ॥

## धर्मप्रमाणकथनम्, धर्मप्रशंसा

(अ.१६२)प्रत्यक्षं लोकत: सिद्धिर्लोकश्चागमपूर्वकः।
युधि०- शिष्टाचारो बहुविधस्तन्मे ब्रूहि पितामह ॥ ८०२ ॥

भीष्म०- धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभि:।
संस्था यत्नैरपि कृता कालेन प्रतिभिद्यते ॥ ८०३ ॥

अधर्मो धर्मरूपेण तृणै: कूप इवावृतः।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ॥ ८०४ ॥

अवृत्ता ये तु भिन्दन्ति श्रुतित्यागपरायणाः।
धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः ॥ ८०५ ॥

अतृप्यन्तस्तु साधूनां य एवागमबुद्धयः।
परमित्येव सन्तुष्टास्तानुपास्व च पृच्छ च ॥ ८०६ ॥

कामार्थौ पृष्ठत: कृत्वा लोभमोहानुसारिणौ।
धर्म इत्येव सम्बुद्धास्तानुपास्व च पृच्छ च ॥ ८०७ ॥

न तेषां भिद्यते वृत्तं यज्ञाः स्वाध्यायकर्म च।
आचारः कारणं चैव धर्मश्चैकस्त्रयं पुनः ॥ ८०८ ॥

युधि०- वेदः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि।
पृथक्त्वं लभ्यते चैषां धर्मश्चैकस्त्रयं कथम् ॥ ८०९ ॥

भीष्म०- धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः।
यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा ॥ ८१० ॥

एक एवेति जानीहि त्रिधा धर्मस्य दर्शनम् ।
पृथक्त्वे च न मे बुद्धिस्त्रयाणामपि वै तथा ॥ ८११ ॥
उक्तो मार्गस्त्रयाणा च तत्तथैव समाचर ।
जिज्ञासा न तु कर्तव्या धर्मस्य परितर्कणात् ॥ ८१२ ॥
सदैव भरतश्रेष्ठ मा तेऽभूदत्र संशय. ।
अन्धो जड इवाशङ्की यद्ब्रवीमि तदाचर ॥ ८१३ ॥
अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् ।
अजातशत्रो सेवस्व धर्म एष सनातनः ॥ ८१४ ॥
ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता ।
तामन्वेहि महाबाहो धर्मस्यैते हि देशिकाः ॥ ८१५ ॥
प्रमाणमप्रमाणं वै यः कुर्यादबुधो जन. ।
न स प्रमाणतामर्हो विवादजननो हि स. ॥ ८१६ ॥
(अ १६३) नाभागधेय प्राप्नोति धनं सुबलवानपि ।
युधि०— भागधेयान्वितस्त्वर्थान् कृशो बालश्च विन्दति ॥ ८१७ ॥
नालाभकाले लभते प्रयत्नेऽपि कृते सति ।
लाभकालेऽप्रयत्नेन लभते विपुलं धनम् ॥ ८१८ ॥
यदि यत्नो भवेन्मर्त्य. स सर्वं फलमाप्नुयात् ।
नालभ्यं चोपलभ्येत नृणां भरतसत्तम ॥ ८१९ ॥
अकार्यमसकृत्कृत्वा दृश्यन्ते ह्यधना नरा. ।
धनयुक्ताः स्वकर्मस्था दृश्यन्ते चापरेऽधनाः ॥ ८२० ॥
यदि विद्यामुपाश्रित्य नर· सुखमवाप्नुयात् ।
न विद्वान्विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ॥ ८२१ ॥
यथा पिपासां जयति पुरुषः प्राप्य वै जलम् ।
दृष्टार्थो विद्यया ह्येव न विद्यां प्रजहेन्नरः ॥ ८२२ ॥
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ८२३ ॥

भीष्म०—ईहमानः समारम्भान् यदि नासादयेद्धनम् ।
उग्रं तपः समारोहेन्न ह्यनुप्तं प्ररोहति ॥ ८२४ ॥

दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥ ८२५ ॥

तस्माद्दद्यान्न याचेत पूजयेद्धार्मिकानपि ।
सुभाषी प्रियकृच्छान्तः सर्वसत्त्वाविहिंसकः ॥ ८२६ ॥

यदा प्रमाणं प्रसवः स्वभावश्च सुखासुखे ।
दंशकीटपिपीलानां स्थिरो भव युधिष्ठिर ॥ ८२७ ॥

(अ.११८)कार्यते यच्च क्रियते सच्चासच्च कृताकृतम् ।
तत्राश्वसीत सत्कृत्वा असत्कृत्वा न विश्वसेत् ॥ ८२८ ॥

काल एव सर्वकाले निग्रहानुग्रहौ ददत् ।
बुद्धिमाविश्य भूतानां धर्माधर्मौ प्रवर्तते ॥ ८२९ ॥

यदा त्वस्य भवेद्बुद्धिर्धर्मार्थस्य प्रदर्शनात् ।
तदाश्वसीत धर्मात्माऽदृढबुद्धिर्न विश्वसेत् ॥ ८३० ॥

एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणम् ।
कालयुक्तोप्युभयविच्छेषं युक्तं समाचरेत् ॥ ८३१ ॥

न ह्यधर्मतयाऽधर्मं दद्यात्कालः कथञ्चन ।
तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ॥ ८३२ ॥

स्प्रष्टुमप्यसमर्थो हि ज्वलन्तमिव पावकम् ।
अधर्मः सन्ततो धर्मं कालेन परिरक्षितम् ॥ ८३३ ॥

अध्रुवो हि कथं लोकः स्मृतो धर्मः कथं ध्रुवः ।
यत्र कालो ध्रुवस्तात तत्र धर्मः सनातनः ॥ ८३४ ॥

सर्वेषां तुल्यदेहानां सर्वेषां सदृशात्मनाम् ।
कालो धर्मेण संयुक्तः शेष एव स्वयं गुरुः ॥ ८३५ ॥

एवं सति न दोषोऽस्ति भूतानां धर्मसेवने ।
तिर्यग्योनावपि सतां लोक एव मतो गुरुः ॥ ८३६ ॥

(अ.१४८)एवं संभाषमाणे तु गाङ्गेये पुरुषर्षभे।
वैश०- तूष्णीं बभूव कौरव्यो मध्ये तेषां महात्मनाम् ॥ ८३७ ॥

## युधिष्ठिरस्य हस्तिनापुरगमनम्

(अ.१६६)अभून्मुहूर्तं स्तिमितं सर्वं तद्राजमण्डलम्।
तूष्णींभूते ततस्तस्मिन्पटे चित्रमिवार्पितम् ॥ ८३८ ॥
मुहूर्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः।
नृपं शयानं गाङ्गेयमिदमाह वचस्तदा ॥ ८३९ ॥
राजन्प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः।
सहितो भ्रातृभिः सर्वैः पार्थिवैश्चानुयायिभिः ॥ ८४० ॥
उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता।
तमिम पुरयानाय समनुज्ञातुमर्हसि ॥ ८४१ ॥
एवमुक्तो भगवता व्यासेन पृथिवीपतिः।
युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ॥ ८४२ ॥
उवाच चैनं मधुरं नृपं शान्तनवो नृप ।
प्रविशस्व पुरीं राजन् व्येतु ते मानसो ज्वरः ॥ ८४३ ॥
यजस्व विविधैर्यज्ञैर्बह्वन्नैः स्वाप्तदक्षिणैः।
ययातिरिव राजेन्द्र श्रद्धादमपुरःसरः ॥ ८४४ ॥
क्षत्रधर्मरतः पार्थ पितॄन्देवांश्च तर्पय।
श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः ॥ ८४५ ॥
रञ्जयस्व प्रजाः सर्वाः प्रकृतीः परिसान्त्वय।
सुहृदः फलसत्कारैरर्चयस्व यथार्हतः ॥ ८४६ ॥
अनु त्वा तात जीवन्तु मित्राणि सुहृदस्तथा।
चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ॥ ८४७ ॥
आगन्तव्यं च भवता समये मम पार्थिव।
विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ॥ ८४८ ॥
तथेत्युक्त्वा च कौन्तेयः सोऽभिवाद्य पितामहम्।
प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥ ८४९ ॥

धृतराष्ट्रं पुरस्कृत्य गान्धारीं च पतिव्रताम् ।
सह तैर्ऋषिभिः सर्वैर्भ्रातृभिः केशवेन च ॥ ८५० ॥
पौरजानपदैश्चैव मन्त्रिवृद्धैश्च पार्थिव ।
प्रविवेश कुरुश्रेष्ठः पुरं वारणसाह्वयम् ॥ ८५१ ॥

## युधिष्ठिरस्य भीष्मसमीपे गमनम्, भीष्मस्य स्वर्गारोहणम्

(अ.१६७)ततः कुन्तीसुतो राजा पौरजानपदं जनम् ।
पूजयित्वा यथान्यायमनुजज्ञे गृहान्प्रति ॥ ८५२ ॥
उषित्वा शर्वरीः श्रीमान् पञ्चाशन्नगरोत्तमे ।
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ॥ ८५३ ॥
स निर्ययौ गजपुराद्याजकैः परिवारितः ।
दृष्ट्वा निवृत्तमादित्यं प्रवृत्तं चोत्तरायणम् ॥ ८५४ ॥
घृतं माल्यं च गन्धांश्च क्षौमाणि च युधिष्ठिरः ।
चन्दनागुरुमुख्यानि तथा कालीयकान्यपि ॥ ८५५ ॥
प्रस्थाप्य पूर्वं कौन्तेयो भीष्मसंस्करणाय वै ।
माल्यानि च वरार्हाणि रत्नानि विविधानि च ॥ ८५६ ॥
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च यशस्विनीम् ।
मातरं च पृथां धीमान् भ्रातृंश्च पुरुषर्षभान् ॥ ८५७ ॥
जनार्दनेनानुगतो विदुरेण च धीमता ।
युयुत्सुना च कौरव्यो युयुधानेन वा विभो ॥ ८५८ ॥
महता राजभोगेन पारिबर्हेण संवृतः ।
स्तूयमानो महातेजा भीष्मस्याग्नीननुव्रजन् ॥ ८५९ ॥
निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा ।
आससाद कुरुक्षेत्रे ततः शान्तनवं नृपः ॥ ८६० ॥
उपास्यमानं व्यासेन पाराशर्येण धीमता ।
नारदेन च राजर्षे देवलेनासितेन च ।
शयानं वीरशयने ददर्श नृपतिस्ततः ॥ ८६१ ॥

ततो रथादवातीर्य भ्रातृभि॰ सह धर्मराट् ।
अभिवाद्याथ कौन्तेय॰ पितामहमरिन्दम ॥ ८६२ ॥
द्वैपायनादीन्विप्राश्च तैश्च प्रत्यभिनन्दित ।
अब्रवीद्भरतश्रेष्ठ धर्मराजो युधिष्ठिर॰ ।
भ्रातृभि सह कौरव्यः शयानं निम्नगासुतम् ॥ ८६३ ॥
युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत ।
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते ॥ ८६४ ॥
प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो ।
आचार्यान्ब्राह्मणाश्चैव ऋत्विजो भ्रातरश्च मे ॥ ८६५ ॥
पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः ।
उपस्थित॰ सहामात्यो वासुदेवश्च वीर्यवान् ॥ ८६६ ॥
हतशिष्टाश्च राजान॰ सर्वे च कुरुजाङ्गला॰ ।
तान्पश्य नरशार्दूल समुन्मीलय लोचने ॥ ८६७ ॥
यच्चेह किञ्चित्कर्तव्यं तत्सर्वं प्रापित मया ।
यथोक्तं भवता काले सर्वमेव च तत्कृतम् ॥ ८६८ ॥
एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता ।
ददर्श भारतान्सर्वान्स्थितान्संपरिवार्य ह ॥ ८६९ ॥
ततश्च तं वली भीष्म प्रगृह्य विपुलं भुजम् ।
उद्यन्मेघस्वरो वाग्मी काले वचनमब्रवीत् ॥ ८७० ॥
दिष्ट्या प्राप्तोऽसि कौन्तेय सहामात्यो युधिष्ठिर ।
परिवृत्तो हि भगवान् सहस्रांशुर्दिवाकर ॥ ८७१ ॥
अष्टपञ्चाशत रात्र्य॰ शयानस्याद्य मे गता॰ ।
शरेषु निशिताग्रेषु यथा वर्षशतं तथा ॥ ८७२ ॥
माघोऽयं समनुप्राप्तो मास॰ सौम्यो युधिष्ठिर ।
त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति ॥ ८७३ ॥
एवमुक्त्वा तु गाङ्गेयो धर्मपुत्र युधिष्ठिरम् ।
धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत् ॥ ८७४ ॥

राजन्विदितधर्मोऽसि सुनिर्णीतार्थसंशयः।
बहुश्रुता हि ते विप्रा बहवः पर्युपासिताः॥ ८७५ ॥
न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा।
श्रुतं देवरहस्यं ते कृष्णद्वैपायनादपि॥ ८७६ ॥
यथा पाण्डोः सुता राजंस्तथैव तव धर्मतः।
तान्पालय स्थितो धर्मे गुरुशुश्रूषणे रतान्॥ ८७७ ॥
धर्मराजो हि शुद्धात्मा निदेशे स्थास्यते तव।
आनृशंस्यपरं ह्येनं जानामि गुरुवत्सलम्॥ ८७८ ॥
तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः।
ईर्ष्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि॥ ८७९ ॥
एतावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणम्।
वासुदेवं महाबाहुमभ्यभाषत कौरवः॥ ८८० ॥
भगवन्देवदेवेश सुरासुरनमस्कृत।
त्रिविक्रम नमस्तुभ्यं शङ्खचक्रगदाधर॥ ८८१ ॥
त्रायस्व पुण्डरीकाक्ष पुरुषोत्तम नित्यशः।
अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम॥ ८८२ ॥
रक्ष्याश्च ते पाण्डवेया भवान् येषां परायणम्।
स मां त्वमनुजानीहि कृष्ण मोक्ष्ये कलेवरम्।
त्वयाऽहं समनुज्ञातो गच्छेयं परमां गतिम्॥ ८८३ ॥
वासु०– अनुजानामि भीष्म त्वां वसून्प्राप्नुहि पार्थिव।
न तेऽस्ति वृजिनं किञ्चिदिह लोके महाद्युते॥ ८८४ ॥
पितृभक्तोऽसि राजर्षे मार्कण्डेय इवापरः।
तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः॥ ८८५ ॥
एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत्।
धृतराष्ट्रमुखांश्चापि सर्वांश्च सुहृदस्तथा॥ ८८६ ॥
प्राणानुत्स्रष्टुमिच्छामि तत्रानुज्ञातुमर्हथ।
सत्येषु यतितव्यं वः सत्यं हि परमं बलम्॥ ८८७ ॥

आनृशंस्यपरैर्भाव्य सदैव नियतात्मभि.।
ब्रह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारता: ॥ ८८८ ॥

इत्युक्त्वा सुहृदः सर्वान्संपरिष्वज्य चैव ह।
पुनरेवाब्रवीद्धीमान्युधिष्ठिरमिदं वचः ॥ ८८९ ॥

ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषत.।
आचार्या ऋत्विजश्चैव पूजनीया जनाधिप ॥ ८९० ॥

(अ.१६८)एवमुक्त्वा कुरून् सर्वान् भीष्मः शान्तनवस्तदा।
तूष्णीं वभूव कौरव्य स मुहूर्तमरिन्दम ॥ ८९१ ॥

धारयामास चात्मानं धारणासु यथाक्रमम्।
तस्योर्ध्वमगमन्प्राणा. सन्निरुद्धा महात्मनः ॥ ८९२ ॥

यद्यन्मुञ्चति गात्रं हि स शान्तनुसुतस्तदा।
तत्तद्विशल्यं भवति योगयुक्तस्य तस्य वै ॥ ८९३ ॥

क्षणेन प्रेक्षतां तेपा विशल्यः सोऽभवत्तदा।
तद्दृष्ट्वा विस्मिता. सर्वे वासुदेवपुरोगमाः ॥ ८९४ ॥

सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च।
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात ह ॥ ८९५ ॥

देवदुन्दुभिनादश्च पुष्पवर्षै. सहाभवत्।
सिद्धा ब्रह्मर्षयश्चैव साधु साध्विति हर्षिताः ॥ ८९६ ॥

महोल्केव च भीष्मस्य मूर्धदेशाज्जनाधिप।
निःसृत्याकाशमाविश्य क्षणेनान्तरधीयत ॥ ८९७ ॥

एवं स राजशार्दूल नृपः शान्तनवस्तदा।
समयुज्यत कालेन भरतानां कुलोद्वहः ॥ ८९८ ॥

ततस्त्वादाय दारूणि गन्धांश्च विविधान्बहून्।
चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा।
युयुत्सुश्चापि कौरव्यं प्रेक्षकास्त्वितरेऽभवन् ॥ ८९९ ॥

युधिष्ठिरश्च गाङ्गेयं विदुरश्च महामतिः।
छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवम् ॥ ९०० ॥

धारयामास तस्याथ युयुत्सुः छत्रमुत्तमम् ।
चामरव्यजने शुभ्रे भीमसेनार्जुनावुभौ ।
उष्णीषे परिगृह्णीतां माद्रीपुत्रावुभौ तथा ॥ १०१ ॥

स्त्रियः कौरवनाथस्य भीष्मं कुरुकुलोद्वहम् ।
तालवृन्तान्युपादाय पर्यवीजन्त सर्वशः ॥ १०२ ॥

ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः ।
यजनं बहुशश्चाग्नौ जगुः सामानि सामगाः ॥ १०३ ॥

ततश्चन्दनकाष्ठैश्च तथा कालीयकैरपि ।
कालागुरुप्रभृतिभिर्गन्धैश्चोच्चावचैस्तथा ॥ १०४ ॥

समवच्छाद्य गाङ्गेयं संप्रज्वाल्य हुताशनम् ।
अपसव्यमकुर्वन्त धृतराष्ट्रमुखाश्चिताम् ॥ १०५ ॥

संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः ।
जग्मुर्भागीरथीं पुण्यामृषिजुष्टां कुरूद्वहाः ॥ १०६ ॥

अनुगम्यमाना व्यासेन नारदेनासितेन च ।
कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः ।
उदकं चक्रिरे चैव गाङ्गेयस्य महात्मनः ॥ १०७ ॥

शान्तिपर्वतः श्लोकाः ॥ ३५७९ ॥

आदिपर्वतः श्लोकाः ॥ १४३७५ ॥

॥ इति श्रीमहाभारतसारे अनुशासनपर्व समाप्तम् ॥

---

# महाभारतसारः

## १४. आश्वमेधिकपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

### धृतराष्ट्रादीना युधिष्ठिरायोपदेशः

(अ १) कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
वैश०– पुरस्कृत्य महाबाहुरुत्ततारकुलेन्द्रियः ॥ १ ॥

उत्तीर्य तु महाबाहुर्बाष्पव्याकुललोचनः ।
पपात तीरे गङ्गाया व्याधविद्ध इव द्विपः ॥ २ ॥

तं सीदमानं जग्राह भीमः कृष्णेन चोदितः ।
मैवमित्यब्रवीच्चैनं कृष्णः परबलार्दनः ॥ ३ ॥

तं दृष्ट्वा दीनमनसं गतसत्त्वं नरेश्वरम् ।
भूयः शोकसमाविष्टाः पाण्डवाः समुपाविशन् ॥ ४ ॥

राजा तु धृतराष्ट्रश्च पुत्रशोकाभिपीडितः ।
वाक्यमाह महाबुद्धिः प्रज्ञाचक्षुर्नरेश्वरम् ॥ ५ ॥

धृत०– उत्तिष्ठ कुरुशार्दूल कुरु कार्यमनन्तरम् ।
क्षत्रधर्मेण कौन्तेय जितेयमवनी त्वया ॥ ६ ॥

भुङ्क्ष्व भोगान्भ्रातृभिश्च सुहृद्भिश्च मनोऽनुगान् ।
शोचितव्यं न पश्यामि त्वया धर्मभृतां वर ॥ ७ ॥

शोचितव्यं मया चैव गान्धार्या च महीपते ।
ययोः पुत्रशतं नष्टं स्वप्नलब्धं यथा धनम् ॥ ८ ॥

अश्रुत्वा हितकामस्य विदुरस्य महात्मनः ।
वाक्यानि सुमहार्थानि परितप्यामि दुर्मतिः ॥ ९ ॥

वृद्धौ हि तेऽद्य पितरौ पश्य नौ दुःखितौ नृप।
न शोचितव्यं भवता पश्यामीह जनाधिप॥ १०॥

(अ. २) एवमुक्तस्तु राज्ञा स धृतराष्ट्रेण धीमता।
तूष्णीं बभूव मेधावी तमुवाचाथ केशवः॥ ११॥

वासु०– अतीव मनसा शोकः क्रियमाणो जनाधिप।
सन्तापयति चैतस्य पूर्वप्रेतान्पितामहान्॥ १२॥

यजस्व विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः॥ १३॥

देवास्तर्पय सोमेन स्वधया च पितॄनपि।
अतिथीनन्नपानेन कामैरन्यैरकिञ्चनान्॥ १४॥

श्रुताश्च राजधर्मास्ते भीष्माद्भागीरथीसुतात्।
नेमामर्हसि मूढानां वृत्तिं त्वमनुवर्तितुम्॥ १५॥

पितृपैतामहं वृत्तमास्थाय धुरमुद्वह।
त्यज शोकं महाराज भवितव्यं हि तत्तथा।
न शक्यास्ते पुनर्द्रष्टुं त्वया येऽस्मिन् रणे हताः॥ १६॥

एतावदुक्त्वा गोविन्दो धर्मराजं युधिष्ठिरम्।
विरराम महातेजास्तमुवाच युधिष्ठिरः॥ १७॥

युधि०– गोविन्द मयि या प्रीतिस्तव सा विदिता मम।
प्रियं तु मे स्यात्सुमहत्कृतं चक्रगदाधर।
यदिमामनुजानीयाद्भवान् गन्तुं तपोवनम्॥ १८॥

तमेवंवादिनं पार्थं व्यासः प्रोवाच धर्मवित्॥ १९॥

व्यास०– अकृता ते मतिस्तात पुनर्बाल्येन मुह्यसे।
किमाकाश वयं तात प्रलपामो मुहुर्मुहुः॥ २०॥

विदिताः क्षत्रधर्मास्ते येषां युद्धेन जीविका।
मोक्षधर्माश्च निखिला याथातथ्येन ते श्रुताः॥ २१॥

स कथं सर्वधर्मज्ञः सर्वागमविशारद।
परिमुह्यसि भूयस्त्वमज्ञानादिव भारत॥ २२॥

(अ. ३) युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मतिः।
नहि कश्चित्स्वयं मर्त्यः स्ववशः कुरुते क्रियाम्॥ २३॥

ईश्वरेण च युक्तोऽयं साध्वसाधु च मानव।
करोति पुरुषः कर्म तत्र का परिदेवना॥ २४॥

आत्मानं मन्यसे चाथ पापकर्माणमन्तत।
शृणु तत्र यथापापमपकृष्येत भारत॥ २५॥

यज्ञेन तपसा चैव दानेन च नराधिप।
पूयन्ते नरशार्दूल नरा दुष्कृतकारिणः॥ २६॥

यजस्व वाजिमेधेन विधिवद्दक्षिणावता।
बहुकामान्नवित्तेन रामो दाशरथिर्यथा॥ २७॥

युधि०– असंशयं वाजिमेधः पावयेत्पृथिवीमपि।
अभिप्रायस्तु मे कश्चित्तं त्वं श्रोतुमिहार्हसि॥ २८॥

इमं ज्ञातिवधं कृत्वा सुमहान्तं द्विजोत्तम।
दानमल्प न शक्नोमि दातुं वित्तं च नास्ति मे॥ २९॥

न तु बालानिमान्दीनानुत्सहे वसु याचितुम्।
तथैवार्द्रव्रणान् कृच्छ्रे वर्तमानान्नृपात्मजान्॥ ३०॥

स्वयं विनाश्य पृथिवीं यज्ञार्थं द्विजसत्तम।
करमाहारयिष्यामि कथं शोकपरायणः॥ ३१॥

दुर्योधनेन पृथिवी क्षयिता वित्तकारणात्।
कोशश्चापि विशीर्णोऽसौ धार्तराष्ट्रस्य दुर्मतेः॥ ३२॥

पृथिवी दक्षिणा चात्र विधिः प्रथमकल्पितः।
न च प्रतिनिधिं कर्तुं चिकीर्षामि तपोधन॥ ३३॥

अत्र मे भगवन् सम्यक्साचिव्यं कर्तुमर्हसि।

एवमुक्तस्तु पार्थेन कृष्णद्वैपायनस्तदा।
मुहूर्तमनुसञ्चिन्त्य धर्मराजानमब्रवीत्॥ ३४॥

व्यास०- कोशश्चापि विशीर्णोऽयं परिपूर्णो भविष्यति।
विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितम् ॥ ३५ ॥

उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महात्मनः।
तदानयस्व कौन्तेय पर्याप्तं तद्भविष्यति ॥ ३६ ॥

(अ. ११) इत्युक्ते नृपतौ तस्मिन्व्यासेनाद्भुतकर्मणा।
वासुदेवो महातेजास्ततो वचनमाददे ॥ ३७ ॥

वासु०- सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्।
एतावान् ज्ञानविषयः किं प्रलापः करिष्यति ॥ ३८ ॥

नैव ते निष्ठितं कर्म नैव ते शत्रवो जिताः।
कथं शत्रुं शरीरस्थमात्मनो नावबुध्यसे ॥ ३९ ॥

(अ. १२) द्विविधो जायते व्याधिः शारीरो मानसस्तथा।
परस्परं तयोर्जन्म निर्द्वन्द्वं नोपपद्यते ॥ ४० ॥

शीतोष्णे चैव वायुश्च गुणा राजन् शरीरजाः।
तेषां गुणानां साम्यं चेत्तदाहुः स्वस्थलक्षणम् ॥ ४१ ॥

उष्णेन बाध्यते शीतं शीतेनोष्णं च बाध्यते ॥ ४२ ॥

सत्त्वं रजस्तमश्चेति त्रय आत्मगुणाः स्मृताः।
तेषां गुणानां साम्यं चेत्तदाहुः स्वस्थलक्षणम् ॥ ४३ ॥

तेषामन्यतमोत्सेके विधानमुपदिश्यते।
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते ॥ ४४ ॥

कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति।
कश्चित्सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति ॥ ४५ ॥

स त्वं न दुःखी दुःखस्य न सुखी सुसुखस्य च।
स्मर्तुमिच्छसि कौन्तेय किमन्यद्दुःखविभ्रमात् ॥ ४६ ॥

(अ. १३) स त्वमिष्ट्वा महायज्ञैः समृद्धैराप्तदक्षिणैः।
कीर्तिं लोके परां प्राप्य गतिमग्र्यां गमिष्यसि ॥ ४७ ॥

## युधिष्ठिरस्य हस्तिनापुरगमनम्

(अ. १४) सोऽनुनीतो भगवता विष्टरश्रवसा स्वयम् ।
प्रशान्तचेताः कौरव्य. स्वराज्यं प्राप्य केवलम् ।
व्यासं च नारदं चैव तांश्चान्यानब्रवीन्नृप. ॥ ४८ ॥

युधि०– आश्वासितोऽहं प्राग्वृद्धैर्भवद्भिर्मुनिपुङ्गवै. ।
न सूक्ष्ममपि मे किञ्चिद्व्यलीकमिह विद्यते ॥ ४९ ॥

अर्थश्च सुमहान्प्राप्तो येन यक्ष्यामि देवता. ।
पुरस्कृत्याद्य भवतः समानेष्यामहे मखम् ॥ ५० ॥

हिमवन्तं त्वया गुप्ता गमिष्याम. पितामह ।
बह्वाश्चर्यो हि देशः स श्रूयते द्विजसत्तम ॥ ५१ ॥

नाभागधेय पुरुषः कश्चिदेवंविधान् गुरून् ।
लभते व्यसनं प्राप्य सुहृद. साधुसंमतान् ॥ ५२ ॥

एवमुक्तास्तु ते राज्ञा सर्वे एव महर्षयः ।
अभ्यनुज्ञाप्य राजान तथोभौ कृष्णफाल्गुनौ ।
पश्यतामेव सर्वेषां तत्रैवादर्शनं ययु. ॥ ५३ ॥

ततो धर्मसुतो राजा तत्रैवोपाविशत्प्रभुः ॥ ५४ ॥

एवं नातिमहान्कालः स तेषां संन्यवर्तत ।
कुर्वतां शौचकार्याणि भीष्मस्य निधने तदा ॥ ५५ ॥

ततो दत्वा बहुधनं विप्रेभ्यः पाण्डवर्षभः ।
धृतराष्ट्रं पुरस्कृत्य विवेश गजसाह्वयम् ॥ ५६ ॥

स समाश्वास्य पितरं प्रज्ञाचक्षुषमीश्वरम् ।
अन्वशाद्वै स धर्मात्मा पृथिवीं भ्रातृभिः सह ॥ ५७ ॥

(अ. १५) विजिते पाण्डवै राजन्प्रशान्ते च विशाम्पते ।
राष्ट्रे बभूवतुर्हृष्टौ वासुदेवधनञ्जयौ ॥ ५८ ॥

विजह्राते मुदा युक्तौ दिवि देवेश्वराविव ।
तौ वनेषु विचित्रेषु पर्वतेषु ससानुषु ॥ ५९ ॥

तीर्थेषु चैव पुण्येषु पल्वलेषु नदीषु च।
चङ्क्रम्यमाणौ संहृष्टावश्विनाविव नन्दने ॥ ६० ॥

इन्द्रप्रस्थे महात्मानौ रेमतुः कृष्णपाण्डवौ।
प्रविश्य तां सभां रम्यां विजह्राते च भारत ॥ ६१ ॥

तत्र युद्धकथाश्चित्राः परिक्लेशांश्च पार्थिव।
कथायोगे कथायोगे कथयामासतुः सदा ॥ ६२ ॥

ततः कथान्ते गोविन्दो गुडाकेशमुवाच ह।
सान्त्वयन् श्लक्ष्णया वाचा हेतुयुक्तमिदं वचः ॥ ६३ ॥

वासु०– विजितेयं धरा कृत्स्ना सव्यसाचिन् परन्तप।
त्वद्बाहुबलमाश्रित्य राज्ञा धर्मसुतेन ह ॥ ६४ ॥

असपत्नां महीं भुङ्क्ते धर्मराजो युधिष्ठिरः।
भीमसेनानुभावेन यमयोश्च नरोत्तम ॥ ६५ ॥

रमे चाहं त्वया सार्धमरण्येष्वपि पाण्डव।
किमु यत्र जनोऽयं वै पृथा चामित्रकर्षण ॥ ६६ ॥

यत्र धर्मसुतो राजा यत्र भीमो महाबलः।
यत्र माद्रवतीपुत्रौ रतिस्तत्र परा मम ॥ ६७ ॥

कालो महांस्त्वतीतो मे शूरसूनुमपश्यतः।
बलदेवं च कौरव्य तथाऽन्यान् वृष्णिपुङ्गवान् ॥ ६८ ॥

सोऽहं गन्तुमभीप्सामि पुरीं द्वारावतीं प्रति।
रोचतां गमनं मह्यं तवापि पुरुषर्षभ ॥ ६९ ॥

प्रयोजनं च निर्वृत्तमिह वासे ममार्जुन।
धार्तराष्ट्रो हतो राजा सबलः सपदानुगः ॥ ७० ॥

पृथिवी च वशे तात धर्मपुत्रस्य धीमतः।
स्थिता समुद्रवलया सशैलवनकानना ॥ ७१ ॥

तं मया सह गत्वाऽद्य राजानं कुरु वर्धनम्।
आपृच्छ कुरुशार्दूल गमनं द्वारकां प्रति ॥ ७२ ॥

## श्रीकृष्णस्य पुनर्गीतोपदेशे असमर्थता

(अ. १६) ततः प्रतीतः कृष्णेन सहितः पाण्डवोऽर्जुनः।
निरीक्ष्य तां सभां रम्यामिदं वचनमब्रवीत् ॥ ७३ ॥

अर्जुन०–विदितं मे महाबाहो सङ्ग्रामे समुपस्थिते।
माहात्म्यं देवकीमातस्तच्च ते रूपमैश्वरम् ॥ ७४ ॥

यत्तद्भगवता प्रोक्तं पुरा केशव सौहृदात्।
तत्सर्वं पुरुषव्याघ्र नष्टं मे भ्रष्टचेतसः ॥ ७५ ॥

मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः।
भवांस्तु द्वारकां गन्ता नचिरादिव माधव ॥ ७६ ॥

एवमुक्तस्तु तं कृष्णः फाल्गुनं प्रत्यभाषत।

वासु०– श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् ॥ ७७ ॥

धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान्।
अबुद्ध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियम् ॥ ७८ ॥

न च साऽद्य पुनर्भूयः स्मृतिर्मे संभविष्यति।
नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव ॥ ७९ ॥

न च शक्यं पुनर्वक्तुमशेषेण धनञ्जय।
स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने ॥ ८० ॥

न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः।
परं हि ब्रह्म कथितं योगयुक्तेन तन्मया ॥ ८१ ॥

## श्रीकृष्णस्य द्वारकागमनम्

(अ. ५२) ततोऽभ्यनोदयत्कृष्णो युज्यतामिति दारुकम्।
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः ॥ ८२ ॥

ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ।
विकुर्वाणौ कथाश्चित्राः प्राप्तौ वारणसाह्वयम् ॥ ८३ ॥

प्रभातायां तु शर्वर्यां कृत्वा पौर्वाह्णिकीं क्रियाम्।
धर्मराजस्य भवनं जग्मतुः परमार्चितौ ॥ ८४ ॥

ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ ।
प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ॥ ८५ ॥

युधि०- विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ ।
ब्रूतं कर्तास्मि सर्वं वा न चिरान्मा विचार्यताम् ॥ ८६ ॥

इत्युक्तः फाल्गुनस्तत्र धर्मराजानमब्रवीत् ।
विनीतवदुपागम्य वाक्यं वाक्यविशारदः ॥ ८७ ॥

अर्जुन०- अयं चिरोषितो राजन् वासुदेवः प्रतापवान् ।
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥ ८८ ॥

स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे ।
आनर्तनगरीं वीरस्तदनुज्ञातुमर्हसि ॥ ८९ ॥

युधि०- पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन ।
पुरीं द्वारावतीमद्य द्रष्टुं शूरसुतं प्रभो ॥ ९० ॥

आनर्तानवलोक्य त्वं पितरं च महाभुज ।
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥ ९१ ॥

स गच्छ रत्नान्यादाय विविधानि वसूनि च ।
यच्चाप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ॥ ९२ ॥

एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ९३ ॥

वासु०- तवैव रत्नानि धनं च केवलं
धरा तु कृत्स्ना तु महाभुजाद्य वै ।
यदस्ति चान्यद्द्रविणं गृहे मम
त्वमेव तस्येश्वर नित्यमीश्वरः ॥ ९४ ॥

तथेत्यथोक्तः प्रतिपूजितस्तदा
गदाग्रजो धर्मसुतेन वीर्यवान् ।
पितृष्वसारं त्ववदद्यथाविधि
संपूजितश्चाप्यगमत्प्रदक्षिणम् ॥ ९५ ॥

रथे सुभद्रामधिरोप्य भाविनीं
युधिष्ठिरस्यानुमते जनार्दनः।
पितृष्वसुश्चापि तथा महाभुजो
विनिर्ययौ पौरजनाभिसंवृतः॥ ९६॥

तमन्वयाद्वानरवर्यकेतनः
स सात्यकिर्माद्रवतीसुतावपि।
अगाधबुद्धिर्विदुरश्च माधवं
स्वयं च भीमो गजराजविक्रमः॥ ९७॥

निवर्तयित्वा कुरुराष्ट्रवर्धनां-
स्ततः स सर्वान्विदुरं च वीर्यवान्।
जनार्दनो दारुकमाह सत्वरः
प्रचोदयाश्वानिति सात्यकिं तथा॥ ९८॥

ततो ययौ शत्रुगणप्रमर्दनः
शिनिप्रवीरानुगतो जनार्दनः।
यथा निहत्यारिगणं शतक्रतु-
र्दिवं तथाऽऽनर्तपुरीं प्रतापवान्॥ ९९॥

## रैवतकपर्वते उत्सवः

(अ. ५९) वर्तमाने महाराज महे रैवतकस्य च।
उपायात्पुण्डरीकाक्षो युयुधानानुगस्तदा॥ १००॥

अलङ्कृतस्तु स गिरिर्नानारूपैर्विचित्रितैः।
बभौ रत्नमयैः कोशैः संवृतः पुरुषर्षभ॥ १०१॥

काञ्चनस्रग्भिरग्र्याभिः सुमनोभिस्तथैव च।
वासोभिश्च महाशैलः कल्पवृक्षैस्तथैव च॥ १०२॥

दीपवृक्षैश्च सौवर्णैरभीक्ष्णमुपशोभितः।
गुहानिर्झरदेशेषु दिवाभूतो बभूव ह॥ १०३॥

पताकाभिर्विचित्राभिः सघण्टाभिः समन्ततः।
पुम्भिः स्त्रीभिश्च सङ्घुष्ट: प्रगीत इव चाभवत् ॥ १०४ ॥

अतीव प्रेक्षणीयोऽभून्मेरुर्मुनिगणैरिव ॥ १०५ ॥

मत्तानां हृष्टरूपाणां स्त्रीणां पुंसां च भारत।
गायतां पर्वतेन्द्रस्य दिवस्पृगिव निःस्वनः।
प्रमत्तमत्तसंमत्तक्ष्वेडितोत्कृष्टसङ्कुल: ॥ १०६ ॥

तथा किलकिलाशब्दैर्भूधरोऽभून्मनोहरः ।
विपणापणवान् रम्यो भक्ष्यभोज्यविहारवान् ॥ १०७ ॥

वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान्।
सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव ह ॥ १०८ ॥

दीनान्धकृपणादिभ्यो दीयमानेन चानिशम्।
बभौ परमकल्याणो महस्तस्य महागिरे: ॥ १०९ ॥

पुण्यावसथवान्वीर पुण्यकृद्भिर्निषेवितः।
विहारो वृष्णिवीराणां महे रैवतकस्य ह।
स नगो वेश्मसङ्कीर्णो देवलोक इवाबभौ ॥ ११० ॥

तदा च कृष्णसान्निध्यमासाद्य भरतर्षभ।
शक्रसद्मप्रतीकाशो बभूव स हि शैलराट् ॥ १११ ॥

तत: संपूज्यमानः स विवेश भवनं शुभम् ॥ ११२ ॥

उपायान्तं तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तथा।
अभ्यगच्छन्महात्मानं देवा इव शतक्रतुम् ॥ ११३ ॥

स तानभ्यर्च्य मेधावी पृष्ट्वा च कुशलं तदा।
अभ्यवादयत प्रीतः पितरं मातरं तदा ॥ ११४ ॥

ताभ्यां स सम्परिष्वक्त: सान्त्वितश्च महाभुजः।
उपोपविष्टैः सर्वैस्तैर्वृष्णिभि: परिवारितः ॥ ११५ ॥

स विश्रान्तो महातेजाः कृतपादावनेजनः।
कथयामास तत् सर्वं पृष्टः पित्रा महाहवम् ॥ ११६ ॥

## वसुदेवाय अभिमन्युवधकथनम्

(अ. ६१) कथयन्नेव तु तदा वासुदेवः प्रतापवान् ।
महाभारतयुद्धं तत् कथान्ते पितुरग्रतः ॥ ११७ ॥
अभिमन्योर्वधं वीर सोऽत्यक्रामन्महामतिः ।
अप्रियं वसुदेवस्य मा भूदिति महामतिः ॥ ११८ ॥
सुभद्रा तु तमुत्क्रान्तमात्मजस्य वधं रणे ।
आचक्ष्व कृष्ण सौभद्रवधमित्यपतद्भुवि ॥ ११९ ॥
तामपश्यन्निपतितां वसुदेवः क्षितौ तदा ।
दृष्ट्वैव च पपातोर्व्यां सोऽपि दुःखेन मूर्च्छितः ॥ १२० ॥
ततः स दौहित्रवधदुःखशोकसमाहत ।
वसुदेवो महाराज कृष्णं वाक्यमथाऽब्रवीत् ॥ १२१ ॥

वसु०- ननु त्वं पुण्डरीकाक्ष सत्यवाग्भुवि विश्रुतः ।
यद्दौहित्रवधं मेऽद्य न ख्यापयसि शत्रुहन् ।
तद्भागिनेयनिधनं तत्त्वेनाऽऽचक्ष्व मे प्रभो ॥ १२२ ॥
आहवं पृष्ठतः कृत्वा कच्चिन्न निहतः परैः ।
कच्चिन्मुखं न गोविन्द तेनाऽऽजौ विकृतं कृतम् ॥ १२३ ॥
स हि कृष्ण महातेजाः श्लाघन्निव ममाग्रतः ।
बालभावेन विनयमात्मनोऽकथयत् प्रभुः ॥ १२४ ॥
स हि द्रोणं च भीष्मं च कर्णं च बलिनां वरम् ।
स्पर्धते स्म रणे नित्यं दुहितुः पुत्रको मम ॥ १२५ ॥
एवंविधं बहु तदा विलपन्तं सुदुःखितम् ।
पितरं दुःखिततरो गोविन्दो वाक्यमब्रवीत् ॥ १२६ ॥

वासु०- न तेन विकृतं वक्त्रं कृतं सङ्ग्राममूर्धनि ।
न पृष्ठतः कृतश्चापि सङ्ग्रामस्तेन दुस्तरः ॥ १२७ ॥
निहत्य पृथिवीपालान् सहस्रशतसङ्घशः ।
खेदितो द्रोणकर्णाभ्यां दौःशासनिवशं गतः ॥ १२८ ॥

एको ह्येकेन सततं युध्यमाने यदि प्रभो।
न स शक्येत सङ्ग्रामे निहन्तुमपि वज्रिणा ॥ १२९ ॥

समाहूते च सङ्ग्रामात्पार्थे संशप्तकैस्तदा।
पर्यवार्यत सङ्क्रुद्धैः स द्रोणादिभिराहवे ॥ १३० ॥

ततः शत्रुवधं कृत्वा सुमहान्तं रणे पितः।
दौहित्रस्तव वार्ष्णेय दौःशासनिवशं गतः ॥ १३१ ॥

नूनं च स गतः स्वर्गं जहि शोकं महामते।
न हि व्यसनमासाद्य सीदन्ति कृतबुद्धयः ॥ १३२ ॥
शस्त्रपूतां हि स गतिं गतः परपुरञ्जयः ॥ १३३ ॥

तस्मिंस्तु निहते वीरे सुभद्रेयं स्वसा मम।
दुःखार्ताऽथो सुतं प्राप्य कुररीव ननाद ह ॥ १३४ ॥

श्रुत्वा पृथा सुदुःखार्ता शनैर्वाक्यमथाब्रवीत्।
सुभद्रे वासुदेवेन तथा सात्यकिना रणे।
पित्रा च लालितो बालः स हतः कालधर्मणा ॥ १३५ ॥

ईदृशो मर्त्यधर्मोऽयं मा शुचो यदुनन्दिनि।
पुत्रो हि तव दुर्धर्षः संप्राप्तः परमां गतिम् ॥ १३६ ॥

कुले महति जातासि क्षत्रियाणां महात्मनाम्।
मा शुचश्चपलाक्षं त्वं पद्मपत्रनिभेक्षणे ॥ १३७ ॥

उत्तरां त्वमवेक्षस्व गुर्विणीं मा शुचः शुभे।
पुत्रमेषा हि तस्याशु जनयिष्यति भाविनी ॥ १३८ ॥

एवमाश्वासयित्वैनां कुन्ती यदुकुलोद्वह।
विहाय शोकं दुर्धर्षं श्राद्धमस्य ह्यकल्पयत् ॥ १३९ ॥

समनुज्ञाप्य धर्मज्ञं राजानं भीममेव च।
यमौ यमोपमौ चैव ददौ दानान्यनेकशः ॥ १४० ॥

ततः प्रदाय बह्वीर्गा ब्राह्मणाय यदूद्वह।
समाहृष्य तु वार्ष्णेयी वैराटीमब्रवीदिदम् ॥ १४१ ॥

वैराटि नेह सन्तापस्त्वया कार्यो ह्यनिन्दिते।
भर्तारं प्रति सुश्रोणि गर्भस्थं रक्ष वै शिशुम्॥ १४२॥

एवमुक्त्वा ततः कुन्ती विरराम महाद्युते।
तामनुज्ञाप्य चैवेमां सुभद्रां समुपानयम्॥ १४३॥

एवं स निधनं प्राप्तो दौहित्रस्तव मानद।
सन्तापं त्यज दुर्धर्ष मा च शोके मनः कृथाः॥ १४४॥

(अ. ६२) एतच्छ्रुत्वा तु पुत्रस्य वचः शूरात्मजस्तदा।
विहाय शोकं धर्मात्मा ददौ श्राद्धमनुत्तमम्॥ १४५॥

तथैव पाण्डवा वीरा नगरे नागसाह्वये।
नोपागच्छन्त वै शान्तिमभिमन्युविनाकृताः॥ १४६॥

सुबहूनि च राजेन्द्र दिवसानि विराटजा।
नाभुङ्क्त पतिदुःखार्ता तदभूत्करुणं महत्॥ १४७॥

कुक्षिस्थ एव तस्याथ गर्भो वै संप्रलीयत॥ १४८॥

आजगाम ततो व्यासो ज्ञात्वा दिव्येन चक्षुषा।
समागम्याब्रवीद्धीमान् पृथां पृथुललोचनाम्॥ १४९॥

उत्तरां च महातेजाः शोकः सन्त्यज्यतामयम्।
भविष्यति महातेजाः पुत्रस्तव यशस्विनी॥ १५०॥

धनञ्जयं च संप्रेक्ष्य धर्मराजस्य शृण्वतः।
व्यासो वाक्यमुवाचेदं हर्षयन्निव भारत॥ १५१॥

पौत्रस्तव महाभागो जनिष्यति महामनाः।
पृथ्वीं सागरपर्यन्तां पालयिष्यति धर्मतः॥ १५२॥

यच्चापि वृष्णिवीरेण कृष्णेन कुरुनन्दन।
पुरोक्तं तत्तथा भावि मा तेऽत्रास्तु विचारणा॥ १५३॥

एवं पितामहेनोक्तो धर्मात्मा सधनञ्जयः।
त्यक्त्वा शोकं महाराज हृष्टरूपोऽभवत्तदा॥ १५४॥

पितापि तव धर्मज्ञ गर्भे तस्मिन्महामने।
अवर्धत यथाकामं शुक्लपक्षे यथा शशी ॥ १५५ ॥

ततः सञ्चोदयामास व्यासो धर्मात्मजं नृपम्।
अश्वमेधं प्रति तदा ततः सोऽन्तर्हितोऽभवत् ॥ १५६ ॥

धर्मराजोऽपि मेधावी श्रुत्वा व्यासस्य तद्वचः।
वित्तस्यानयने तात चकार गमने मतिम् ॥ १५७ ॥

## अश्वमेधार्थं द्रव्यानयनम्

(अ. ६३) कृत्वा तु पाण्डवाः सर्वे रत्नाहरणनिश्चयम्।
सेनामाज्ञापयामासुर्नक्षत्रेऽहनि च ध्रुवे ॥ १५८ ॥

ततो ययुः पाण्डुसुता ब्राह्मणान् स्वस्ति वाच्य च।
अर्चयित्वा सुरश्रेष्ठं पूर्वमेव महेश्वरम् ॥ १५९ ॥

तेषां प्रयास्यतां तत्र मङ्गलानि शुभान्यथ।
प्राहुः प्रहृष्टमनसो द्विजाग्र्या नागराश्च ते ॥ १६० ॥

ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च।
ब्राह्मणानग्निसहितान्प्रययुः पाण्डुनन्दनाः ॥ १६१ ॥

समनुज्ञाप्य राजानं पुत्रशोकसमाहतम्।
धृतराष्ट्रं सभार्यं वै पृथां च पृथुलोचनाम् ॥ १६२ ॥

मूले निक्षिप्य कौरव्य युयुत्सुं धृतराष्ट्रजम्।
संपूज्यमानाः पौरैश्च ब्राह्मणैश्च मनीषिभिः ॥ १६३ ॥

(अ. ६४) ततस्ते प्रययुर्हृष्टाः प्रहृष्टनरवाहनाः।
रथघोषेण महता पूरयन्तो वसुन्धराम् ॥ १६४ ॥

संस्तूयमानाः स्तुतिभिः सूतमागधबन्दिभिः।
स्वेन सैन्येन संवीता यथादित्याः स्वरश्मिभिः ॥ १६५ ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि।
बभौ युधिष्ठिरस्तत्र पौर्णमास्यामिवोडुराट् ॥ १६६ ॥

जयाशिषः प्रहृष्टाना नराणां पथि पाण्डवः।
प्रत्यगृह्णाद्यथान्याय यथावत्पुरुषर्षभ.॥ १६७॥
सरासि सरितश्चैव वनान्युपवनानि च।
अत्यक्रामन्महाराजो गिरिं चाप्यन्वपद्यत॥ १६८॥
तस्मिन्देशे च राजेन्द्र यत्र तद्द्रव्यमुत्तमम्।
चक्रे निवेशनं राजा पाण्डव. सह सैनिकैः।
शिवे देशे समे चैव तदा भरतसत्तम॥ १६९॥
कृत्वा तु मध्ये राजानममात्याश्च यथाविधि।
षट्पदं नवसङ्ख्यान निवेशं चक्रिरे द्विजाः॥ १७०॥
मत्तानां वारणेन्द्राणां निवेशं च यथाविधि।
कारयित्वा स राजेन्द्रो ब्राह्मणानिदमब्रवीत्॥ १७१॥
अस्मिन्कार्ये द्विजश्रेष्ठा नक्षत्रे दिवसे शुभे।
यथा भवन्तो मन्यन्ते कर्तुमर्हन्ति तत्तथा॥ १७२॥
न न. कालात्ययो वै स्यादिहैव परिलम्बताम्।
इति निश्चित्य विप्रेन्द्रा. क्रियता यदनन्तरम्॥ १७३॥
श्रुत्वैतद्वचनं राज्ञो ब्राह्मणा सपुरोधस.।
इदमूचुर्वचो हृष्टा धर्मराजप्रियेप्सवः॥ १७४॥

अद्यैव नक्षत्रमहश्च पुण्यं
यतामहे श्रेष्ठतमक्रियासु।
अम्भोभिरद्येह वसाम राज-
न्नुपोष्यता चापि भवद्भिरद्य॥ १७५॥
श्रुत्वा तु तेषां द्विजसत्तमानां
कृतोपवासा रजनीं नरेन्द्राः।
ऊषुः प्रतीता. कुशसंस्तरेषु
यथाऽध्वरे प्रज्वलिता हुताशाः॥ १७६॥
ततो निशा सा व्यगमन्महात्मनां
संशृण्वतां विप्रसमीरिता गिरः।

तत प्रभाते विमले द्विजर्षभा
वचोऽब्रुवन्धर्मसुतं नराधिपम् ॥ १७७ ॥

(अ. ६५) क्रियतामुपहारोऽद्य त्र्यम्बकस्य महात्मन. ।
दत्त्वोपहारं नृपते ततः स्वार्थ यतामहे ॥ १७८ ॥

श्रुत्वा तु वचनं तेषा ब्राह्मणानां युधिष्ठिर. ।
गिरीशस्य यथान्यायमुपहारमुपाहरत् ॥ १७९ ॥

धूपगन्धनिरुद्धं तत्सुमनोभिश्च संवृतम् ।
शुशुभे स्थानमत्यर्थं देवदेवस्य पार्थिव ॥ १८० ॥

कृत्वा पूजां तु रुद्रस्य गणानां चैव सर्वशः ।
ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति ॥ १८१ ॥

पूजयित्वा धनाध्यक्षं प्रणिपत्याभिवाद्य च ।
सुमनोभिर्विचित्राभिरपूपै. कृसरेण च ॥ १८२ ॥

शङ्खादींश्च निधीन्सर्वान्निधिपालांश्च सर्वशः ।
अर्चयित्वा द्विजाग्र्यान्स स्वस्ति वाच्य च वीर्यवान् ॥१८३॥

तेषां पुण्याहघोषेण तेजसा समवस्थितः ।
प्रीतिमान्स कुरुश्रेष्ठ. खानयामास तद्धनम् ॥ १८४ ॥

तत. पात्री सकरका बहुरूपा मनोरमाः ।
भृङ्गाराणि कटाहानि कलशान्वर्धमानकान् ॥ १८५ ॥

बहूनि च विचित्राणि भाजनानि सहस्रश. ।
उद्धारयामास तदा धर्मराजो युधिष्ठिरः ॥ १८६ ॥
तेषा रक्षणमप्यासीन्महान्करपुटस्तथा ॥ १८७ ॥

षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः ।
वारणाश्च महाराज सहस्रशतसंमिता. ॥ १८८ ॥

शकटानि रथाश्चैव तावदेव करेणवः ।
खराणां पुरुषाणां च परिसङ्ख्या न विद्यते ॥ १८९ ॥

एतद्वित्तं तदभवद्यदुद्दध्रे युधिष्ठिरः ।
षोडशाष्टौ चतुर्विंशत्सहस्रं भारलक्षणम् ॥ १९० ॥

एतेष्वादाय तद्द्रव्यं पुनरभ्यर्च्य पाण्डवः।
महादेवं प्रति ययौ पुरं नागाह्वयं प्रति ॥ १९१ ॥

द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम्।
गोयुते गोयुते चैव न्यवसत्पुरुषर्षभः ॥ १९२ ॥

सा पुराभिमुखा राजन्नुवाह महती चमूः।
कृच्छ्राद्द्रविणभारार्ता हर्षयन्ती कुरूद्वहान् ॥ १९३ ॥

## श्रीकृष्णस्य हस्तिनापुरे पुनरागमनम्, परिक्षिज्जन्म

(अ. ६६) एतस्मिन्नेव काले तु वासुदेवोऽपि वीर्यवान्।
उपायाद्वृष्णिभिः सार्धं पुरं वारणसाह्वयम् ॥ १९४ ॥

समयं वाजिमेधस्य विदित्वा पुरुषर्षभः।
यथोक्तो धर्मपुत्रेण प्रव्रजन्स्वपुरीं प्रति ॥ १९५ ॥

रौक्मिणेयेन सहितो युयुधानेन चैव ह।
बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ॥ १९६ ॥

तानागतान्समीक्ष्यैव धृतराष्ट्रो महीपतिः।
प्रत्यगृह्णाद्यथान्यायं विदुरश्च महामनाः ॥ १९७ ॥

वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय।
जज्ञे तव पिता राजन्परिक्षित्परवीरहा ॥ १९८ ॥

स तु राजा महाराज ब्रह्मास्त्रेणावपीडितः।
शवो बभूव निश्चेष्टो हर्षशोकविवर्धनः ॥ १९९ ॥

हृष्टानां सिंहनादेन जनानां तत्र निःस्वनः।
प्रविश्य प्रदिशः सर्वाः पुनरेव व्युपारमत् ॥ २०० ॥

ततः सोऽतित्वरः कृष्णो विवेशान्तःपुरं तदा।
युयुधानद्वितीयो वै व्यथितेन्द्रियमानसः ॥ २०१ ॥

ततस्त्वरितमायान्तीं ददर्श स्वां पितृष्वसाम्।
क्रोशन्तीमभिधावेति वासुदेवं पुनः पुनः ॥ २०२ ॥

पृष्ठतो द्रौपदीं चैव सुभद्रां च यशस्विनीम् ।
सविक्रोशं सकरुणं बान्धवानां स्त्रियो नृप ॥ २०३ ॥

ततः कृष्णं समासाद्य कुन्ती भोजसुता तदा ।
प्रोवाच राजशार्दूल बाष्पगद्गदया गिरा ॥ २०४ ॥

वासुदेव महाबाहो सुप्रजा देवकी त्वया ।
त्वं नो गतिः प्रतिष्ठा च त्वदायत्तमिदं कुलम् ॥ २०५ ॥

यदुप्रवीर योऽयं ते स्वस्रीयस्यात्मजः प्रभो ।
अश्वत्थाम्ना हतो जातस्तमुज्जीवय केशव ॥ २०६ ॥

त्वया ह्येतत्प्रतिज्ञातमैषीके यदुनन्दन ।
अहं सञ्जीवयिष्यामि मृतं जातमिति प्रभो ॥ २०७ ॥

सोऽयं जातो मृतस्तात पश्यैनं पुरुषर्षभ ।
उत्तरां च सुभद्रां च द्रौपदीं मां च माधव ॥ २०८ ॥

धर्मपुत्रं च भीमं च फाल्गुनं नकुलं तथा ।
सहदेवं च दुर्धर्षं सर्वांन्नस्त्रातुमर्हसि ॥ २०९ ॥

अस्मिन्प्राणाः समायत्ताः पाण्डवानां ममैव च ।
पाण्डोश्च पिण्डो दाशार्ह तथैव श्वशुरस्य मे ॥ २१० ॥

अभिमन्योश्च भद्रं ते प्रियस्य सदृशस्य च ।
प्रियमुत्पादयाद्य त्वं प्रेतस्यापि जनार्दन ॥ २११ ॥

एवमुक्त्वा तु वार्ष्णेयं पृथा पृथुललोचना ।
उच्छ्रित्य बाहू दुःखार्ता ताश्चान्याः प्रापतन्भुवि ॥ २१२ ॥

अब्रुवंश्च महाराज सर्वाः सास्राविलेक्षणाः ।
स्वस्रीयो वासुदेवस्य मृतो जात इति प्रभो ॥ २१३ ॥

एवमुक्ते ततः कुन्तीं पर्यगृह्णाज्जनार्दनः ।
भूमौ निपतितां चैनां सान्त्वयामास भारत ॥ २१४ ॥

(अ ६७) उत्थितायां पृथायां तु सुभद्रा भ्रातरं तदा ।
दृष्ट्वा चुक्रोश दुःखार्ता वचनं चेदमब्रवीत् ॥ २१५ ॥

पुण्डरीकाक्ष पश्य त्व पौत्रं पार्थस्य धीमत. ।
परिक्षीणेषु कुरुषु परिक्षीणं गतायुषम् ॥ २१६ ॥

इषीका द्रोणपुत्रेण भीमसेनार्थमुद्यता ।
सोत्तरायां निपतिता विजये मयि चैव ह ॥ २१७ ॥

सेयं विदीर्णे हृदये मयि तिष्ठति केशव ।
यन्न पश्यामि दुर्धर्ष सहपुत्रं तु तं प्रभो ॥ २१८ ॥

अभिमन्योः सुतो वीर न सञ्जीवति यद्ययम् ।
जीवति त्वयि दुर्धर्ष किं करिष्याम्यहं त्वया ॥ २१९ ॥

स.ञ्जीवयैनं दुर्धर्ष मृतं त्वमभिमन्युजम् ।
सदृशाक्षसुत वीर सस्यं वर्षन्निवाम्बुदः ॥ २२० ॥

प्रभावज्ञास्मि ते कृष्ण तस्मात्त्वा याचयाम्यहम् ।
कुरुष्व पाण्डुपुत्राणामिमं परमनुग्रहम् ॥ २२१ ॥

स्वसेति वा महाबाहो हतपुत्रेति वा पुनः ।
प्रपन्ना मामियं चेति दयां कर्तुमिहार्हसि ॥ २२२ ॥

(अ. ६८) एवमुक्तस्तु राजेन्द्र केशिहा दुःखमूर्च्छित. ।
तथेति व्याजहारोच्चैर्ह्लादयन्निव तं जनम् ॥ २२३ ॥

ततः स प्राविशत्तूर्ण जन्मवेश्म पितुस्तव ।
अर्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ॥ २२४ ॥

अपां कुम्भैः सुपूर्णैश्च विन्यस्तैः सर्वतोदिशम् ।
घृतेन तिन्दुकालातैः सर्षपैश्च महाभुज ॥ २२५ ॥

ददर्श च स तेजस्वी रक्षोघ्नान्यपि सर्वश. ।
द्रव्याणि स्थापितानि स्म विधिवत्कुशलैर्जनैः ॥ २२६ ॥

तथायुक्तं च तद्दृष्ट्वा जन्मवेश्म पितुस्तव ।
हृष्टोऽभवद्धृषीकेशः साधु साध्विति चाब्रवीत् ॥ २२७ ॥

तथा ब्रुवति वार्ष्णेये प्रहृष्टवदने तदा ।
द्रौपदी त्वरिता गत्वा वैराटीं वाक्यमब्रवीत् ॥ २२८ ॥

अयमायाति ते भद्रे श्वशुरो मधुसूदनः।
पुराणर्षिरचिन्त्यात्मा समीपमपराजित॰ ॥ २२९ ॥
साऽपि बाष्पकला वाचं निगृह्याश्रूणि चैव ह।
सुसंवीताऽभवद्देवी देववत्कृष्णमीयुषी ॥ २३० ॥
सा तथा दूयमानेन हृदयेन तपस्विनी।
दृष्ट्वा गोविन्दमायान्तं कृपण पर्यदेवयत् ॥ २३१ ॥
पुण्डरीकाक्ष पश्यावा बालेन हि विनाकृतौ ॥
अभिमन्युं च मां चैव हतौ तुल्यं जनार्दन ॥ २३२ ॥
आसोन्मम मति॰ कृष्ण पुत्रोत्सङ्गा जनार्दन।
अभिवादयिष्ये दृष्टेति तदिदं वितथीकृतम् ॥ २३३ ॥
चपलाक्षस्य दायादे मृतेऽस्मिन्पुरुषर्षभ।
विफला मे कृताः कृष्ण हृदि सर्वे मनोरथाः ॥ २३४ ॥
चपलाक्षः किलातीव प्रियस्ते मधुसूदन।
सुतं पश्य त्वमस्यैनं ब्रह्मास्त्रेण निपातितम् ॥ २३५ ॥
कृतघ्नोऽयं नृशंसोऽयं यथाऽस्य जनकस्तथा।
यः पाण्डवीं श्रियं त्यक्त्वा गतोऽद्य यमसादनम् ॥ २३६ ॥
मया चैतत्प्रतिज्ञातं रणमूर्धनि केशव।
अभिमन्यौ हते वीर त्वामेष्याम्यचिरादिति ॥ २३७ ॥
तच्च नाकरवं कृष्ण नृशंसा जीवितप्रिया।
इदानी मा गतां तत्र किं नु वक्ष्यति फाल्गुनिः ॥ २३८ ॥

## परीक्षित्सञ्जीवनम्

(अ॰ ६९) सैवं विलप्य करुणं सोन्मादेव तपस्विनी।
उत्तरा न्यपतद्भूमौ कृपणा पुत्रगृद्धिनी ॥ २३९ ॥
तां तु दृष्ट्वा निपतिता हतपुत्रपरिच्छदाम्।
चुक्रोश कुन्ती दुःखार्ता सर्वाश्च भरतस्त्रियः ॥ २४० ॥
मुहूर्तमिव राजेन्द्र पाण्डवानां निवेशनम्।
अप्रेक्षणीयमभवदार्तस्वनविनादितम् ॥ २४१ ॥

सा मुहूर्तं च राजेन्द्र पुत्रशोकाभिपीडिता।
कश्मलाभिहता वीर वैराटी त्वभवत्तदा ॥ २४२ ॥

प्रतिलभ्य तु सा संज्ञामुत्तरा भरतर्षभ।
अङ्कमारोप्य तं पुत्रमिदं वचनमब्रवीत् ॥ २४३ ॥

धर्मज्ञस्य सुतः स त्वमधर्मं नावबुध्यसे।
यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनम् ॥ २४४ ॥

पुत्र गत्वा मम वचो ब्रूयास्त्वं पितरं त्विदम्।
दुर्मरं प्राणिनां वीर काले प्राप्ते कथञ्चन ॥ २४५ ॥

याहं त्वया विनाद्येह पत्या पुत्रेण चैव ह।
मर्तव्ये सति जीवामि हतस्वस्तिरकिञ्चना ॥ २४६ ॥

अथवा धर्मराज्ञाऽहमनुज्ञाता महाभुज।
भक्षयिष्ये विषं घोरं प्रवेक्ष्ये वा हुताशनम् ॥ २४७ ॥

अथवा दुर्मरं तात यदिदं मे सहस्रधा।
पतिपुत्रविहीनाया हृदयं न विदीर्यते ॥ २४८ ॥

उत्तिष्ठ पुत्र पश्येमां दुःखितां प्रपितामहीम्।
आर्तामुपप्लुतां दीनां निमग्नां शोकसागरे ॥ २४९ ॥

आर्यां च पश्य पाञ्चालीं सात्वतीं च तपस्विनीम्।
मां च पश्य सुदुःखार्तां व्याधविद्धां मृगीमिव ॥ २५० ॥

एवं विप्रलपन्तीं तु दृष्ट्वा निपतितां पुनः।
उत्तरां तां स्त्रियः सर्वाः पुनरुत्थापयंस्ततः ॥ २५१ ॥

उत्थाय च पुनर्धैर्यात्तदा मत्स्यपतेः सुता।
प्राञ्जलिः पुण्डरीकाक्षं भूमावेवाभ्यवादयत् ॥ २५२ ॥

श्रुत्वा स तस्या विपुलं विलापं पुरुषर्षभः।
उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं प्रत्यसंहरत् ॥ २५३ ॥

प्रतिजज्ञे च दाशार्हस्तस्य जीवितमच्युतः।
अब्रवीच्च विशुद्धात्मा सर्वं विश्रावयन् जगत् ॥ २५४ ॥

वासु०- न ब्रवीम्युत्तरे मिथ्या सत्यमेतद्भविष्यति।
एष सञ्जीवयाम्येनं पश्यतां सर्वदेहिनाम्॥ २५५॥
नोक्तपूर्वं मया मिथ्या स्वैरेष्वपि कदाचन।
न च युद्धात्परावृत्तस्तथा सञ्जीवनामयम्॥ २५६॥
यथा मे दयितो धर्मो ब्राह्मणश्च विशेषतः।
अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा॥ २५७॥
यथाहं नाभिजानामि विजये तु कदाचन।
विरोधं तेन सत्येन मृतो जीवत्वयं शिशुः॥ २५८॥
यथा सत्यं च धर्मश्च मयि नित्यं प्रतिष्ठितौ।
तथा मृतः शिशुरयं जीवतादभिमन्युजः॥ २५९॥
यथा कंसश्च केशी च धर्मेण निहतौ मया।
तेन सत्येन बालोऽय पुनः सञ्जीवतामयम्॥ २६०॥
इत्युक्तो वासुदेवेन स बालो भरतर्षभ।
शनैः शनैर्महाराज प्रास्पन्दत सचेतनः॥ २६१॥

(अ. ७०) तदस्त्रं ज्वलितं चापि पितामहमगात्तदा।
ततः प्राणान्पुनर्लेभे पिता तव नरेश्वर॥ २६२॥

व्यचेष्टत च बालोऽसौ यथोत्साहं यथाबलम्।
बभूवुर्मुदिता राजंस्ततस्ता भरतस्त्रियः॥ २६३॥
ब्राह्मणा वाचयामासुर्गोविन्दस्यैव शासनात्॥ २६४॥

ततस्ता मुदिताः सर्वाः प्रशशंसुर्जनार्दनम्।
स्त्रियो भरतसिंहानां नावं लब्ध्वेव पारगाः॥ २६५॥

उत्थाय तु यथाकालमुत्तरा यदुनन्दनम्।
अभ्यवादयत प्रीता सह पुत्रेण भारत॥ २६४॥

तस्य कृष्णो ददौ हृष्टो बहुरत्न विशेषत ।
तथान्ये वृष्णिशार्दूला नाम चास्याकरोत्प्रभुः।
पितुस्तव महाराज सत्यसन्धो जनार्दनः॥ २६५॥

परिक्षीणे कुले यस्माज्जातोऽयमभिमन्युजः।
परिक्षिदिति नामास्य भवत्वित्यब्रवीत्तदा ॥ २६६ ॥
मासजातस्तु ते वीर पिता भवति भारत।
अथाजग्मु सुबहुलं रत्नमादाय पाण्डवाः ॥ २६७ ॥
(अ ७१) तान्समीपगतान् श्रुत्वा पाण्डवान् शत्रुकर्शनः।
वासुदेवः सहामात्य॰ प्रययौ ससुहृद्गणः ॥ २६८ ॥
ते समेत्य यथाधर्म पाण्डवा वृष्णिभिः सह।
विविशु॰ सहिता राजन् पुरं वारणसाह्वयम् ॥ २६९ ॥
ततस्तत्परमाश्चर्यं विचित्रं महदद्भुतम्।
शुश्रुवुस्ते तदा वीरा पितुस्ते जन्म भारत ॥ २७० ॥
तदुपश्रुत्य तत्कर्म वासुदेवस्य धीमतः।
पूजार्हं पूजयामासु कृष्णं देवकिनन्दनम् ॥ २७१ ॥
तत॰ कतिपयाहस्य व्यास॰ सत्यवतीसुतः।
आजगाम महातेजा नगरं नागसाह्वयम्।
तस्य सर्वे यथान्यायं पूजाञ्चक्रुः कुरूद्वहा॰ ॥ २७२ ॥
तत्र नानाविधाकाराः कथा॰ समभिकीर्त्य वै।
युधिष्ठिरो धर्मसुतो व्यासं वचनमब्रवीत् ॥ २७३ ॥
भवत्प्रसादाद्भगवन् यदिदं रत्नमाहृतम्।
उपयोक्तुं तदिच्छामि वाजिमेधे महाक्रतौ ॥ २७४ ॥
तमनुज्ञातुमिच्छामि भवता मुनिसत्तम।
त्वदधीना वय सर्वे कृष्णस्य च महात्मनः ॥ २७५ ॥
व्यास०–अनुजानामि राजंस्त्वां क्रियतां यदनन्तरम्।
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ॥ २७६ ॥
अश्वमेधो हि राजेन्द्र पावनः सर्वपाप्मनाम्।
तेनेष्ट्वा त्वं विपाप्मा वै भविता नात्र संशयः ॥ २७७ ॥
इत्युक्तः स तु धर्मात्मा कुरुराजो युधिष्ठिरः।
वासुदेवमथाभ्येत्य वाग्मी वचनमब्रवीत् ॥ २७८ ॥

त्वत्प्रभावार्जितान्भोगानश्नीम यदुनन्दन।
पराक्रमेण बुद्ध्या च त्वयेयं निर्जिता मही॥ २७९॥
दीक्षयस्व त्वमात्मानं त्वं हि नः परमो गुरुः।
त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम्॥ २८०॥
वासु०- त्वं चाद्य कुरुवीराणां धर्मेण हि विराजसे।
गुणीभूताः स्म ते राजंस्त्वं नो राजा गुरुर्मतः॥ २८१॥
यजस्व मदनुज्ञातः प्राप्य एष क्रतुस्त्वया।
युनक्तु नो भवान्कार्ये यत्र वाञ्छसि भारत।
सत्यं ते प्रतिजानामि सर्वं कर्तास्मि तेऽनघ॥ २८२॥
भीमसेनार्जुनौ चैव तथा माद्रवतीसुतौ।
इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिवे॥ २८३॥

## यज्ञियाश्वस्य उत्सर्गः, अर्जुनस्य अश्वानुसरणम्

(अ. ७२) एवमुक्तस्तु कृष्णेन धर्मपुत्रो युधिष्ठिरः।
व्यासमामन्त्र्य मेधावी ततो वचनमब्रवीत्॥ २८४॥
यदा कालं भवान्वेत्ति हयमेधस्य तत्त्वतः।
दीक्षयस्व तदा मां त्वं त्वय्यायत्तो हि मे क्रतु॥ २८५॥
व्यास०-अहं पैलोऽथ कौन्तेय याज्ञवल्क्यस्तथैव च।
विधानं यद्यथाकालं तत्कर्तारो न संशयः॥ २८६॥
चैत्र्यां हि पौर्णमास्यां तु तव दीक्षा भविष्यति।
संभाराः संभ्रियन्तां च यज्ञार्थं पुरुषर्षभ॥ २८७॥
अश्वविद्याविदश्चैव सूता विप्राश्च तद्विद।
मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये॥ २८८॥
स्फ्यश्च कूर्चश्च सौवर्णो यच्चान्यदपि कौरव।
तत्र योग्यं भवेत्किञ्चिद्रौक्मं तत् क्रियतामिति॥ २८९॥
अश्वश्चोत्सृज्यतामद्य पृथ्व्यामथ यथाक्रमम्।
सुगुप्तं चरतां चापि यथाशास्त्रं यथाविधि॥ २९०॥

तत्तु सर्वं यथान्यायमुक्तः कुरुकुलोद्वह ।
चकार फाल्गुनं चापि सन्दिदेश हयं प्रति ॥ २९१ ॥

युधि०— एह्यर्जुन त्वया वीर हयोऽयं परिपाल्यताम् ।
त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः ॥ २९२ ॥

ये चापि त्वां महाबाहो प्रत्युद्यान्ति नराधिपाः ।
तैर्विग्रहो यथा न स्यात्तथा कार्यं त्वयानघ ॥ २९३ ॥

आख्यातव्यश्च भवता यज्ञोऽयं मम सर्वशः ।
पार्थिवेभ्यो महाबाहो समये गम्यतामिति ॥ २९४ ॥

एवमुक्त्वा स धर्मात्मा भ्रातरं सव्यसाचिनम् ।
भीमं च नकुलं चैव पुरगुप्तौ समादधत् ॥ २९५ ॥

कुटुम्बतन्त्रे च तदा सहदेवं युधां पतिम् ।
अनुमान्य महीपाल धृतराष्ट्रं युधिष्ठिरः ॥ २९६ ॥

(अ. ७३) दीक्षाकाले तु सम्प्राप्ते ततस्ते सुमहर्त्विजः ।
विधिवद्दीक्षयामासुरश्वमेधाय पार्थिवम् ॥ २९७ ॥

कृत्वा स पशुबन्धांश्च दीक्षितः पाण्डुनन्दनः ।
धर्मराजो महातेजाः सहर्त्विग्भिर्व्यरोचत ॥ २९८ ॥

हयश्च हयमेधार्थं स्वयं स ब्रह्मवादिना ।
उत्सृष्टः शास्त्रविधिना व्यासेनामिततेजसा ॥ २९९ ॥

श्वेताश्वः कृष्णसारं त ससाराश्वं धनञ्जयः ।
विधिवत् पृथिवीपाल धर्मराजस्य शासनात् ॥ ३०० ॥

पाण्डवैः पृथिवीमश्वो निर्जितामस्त्रतेजसा ।
चचार स महाराज यथादेशं च सत्तम ॥ ३०१ ॥

अवमृद्नन्स राष्ट्राणि पार्थिवानां हयोत्तमः ।
शनैस्तदा परिययौ श्वेताश्वश्च महारथः ॥ ३०२ ॥

किराता यवना राजन्बहवोऽसिधनुर्धराः ।
म्लेच्छाश्चान्ये बहुविधाः पूर्वं ये निकृता रणे ॥ ३०३ ॥

आर्याश्च पृथिवीपालाः प्रहृष्टनरवाहनाः ।
समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्मदाः ॥ ३०४ ॥

एवं वृत्तानि युद्धानि तत्र तत्र महीपते ।
अर्जुनस्य महीपालैर्नानादेशसमागतैः ॥ ३०५ ॥

यानि तूभयतो राजन्प्रततानि महान्ति च ।
तानि युद्धानि वक्ष्यामि कौन्तेयस्य तवाऽनघ ॥ ३०६ ॥

## त्रिगर्तपराभवः, वज्रदत्तपराजयः, सैन्धवपराजयः

(अ. ७४) त्रिगर्तैरभवद्युद्धं कृतवैरैः किरीटिनः ।
महारथसमाज्ञातैर्हतानां पुत्रनप्तृभिः ॥ ३०७ ॥

ते समाज्ञाय संप्राप्तं यज्ञियं तुरगोत्तमम् ।
विषयान्ते ततो वीरा दंशिताः पर्यवारयन् ॥ ३०८ ॥

रथिनो बद्धतूणीराः सदश्वैः समलङ्कृतैः ।
परिवार्य हयं राजन् ग्रहीतुं संप्रचक्रमुः ॥ ३०९ ॥

तानब्रवीत् ततो जिष्णुः प्रहसन्निव भारत ।
निवर्तध्वमधर्मज्ञाः श्रेयो जीवितमेव च ॥ ३१० ॥

स हि वीरः प्रयास्यन्वै धर्मराजेन वारितः ।
हतबान्धवा न ते पार्थ हन्तव्याः पार्थिवा इति ॥ ३११ ॥

स तदा तद्वचः श्रुत्वा धर्मराजस्य धीमतः ।
तान्निवर्तध्वमित्याह न न्यवर्तन्त चापि ते ॥ ३१२ ॥

ततस्त्रिगर्तराजानं सूर्यवर्माणमाहवे ।
विचित्य शरजालेन प्रजहास धनञ्जयः ॥ ३१३ ॥

ततो योधान् जघानाशु तेषां स दश चाष्ट च ।
महेन्द्रवज्रप्रतिमैरायसैर्बहुभिः शरैः ॥ ३१४ ॥

तान् सम्प्रभग्नान् सम्प्रेक्ष्य त्वरमाणो धनञ्जयः ।
शरैराशीविषाकारैर्जघान स्वनवद्धसन् ॥ ३१५ ॥

ते भग्नमनस. सर्वे त्रैगर्तकमहारथाः।
दिशोऽभिदुद्रुवू राजन् धनञ्जयशरार्दिता ॥ ३१६ ॥
(अ. ७५) प्राग्ज्योतिषमथाभ्येत्य व्यचरन्स हयोत्तमः।
भगदत्तात्मजस्तत्र वज्रदत्तो महीपति. ॥ ३१७ ॥
सोऽभिनिर्याय नगराद्भगदत्तसुतो नृपः।
अश्वमायान्तमुन्मथ्य नगराभिमुखो ययौ ॥ ३१८ ॥
ततो गाण्डीवनिर्मुक्तैरिपुभिर्मोहितो नृपः।
हयमुत्सृज्य त वीरस्तत. पार्थमुपाद्रवत् ॥ ३१९ ॥
स वारणं नगप्रख्यं प्रभिन्नकरटामुखम्।
प्रेषयामास सङ्क्रुद्धः श्वेताश्वं प्रति पार्थिवः ॥ ३२० ॥
तस्मै वाणास्ततो जिष्णुर्निर्मुक्ताशीविषोपमान्।
प्रेषयामास संक्रुद्धो ज्वलितज्वलनोपमान् ॥ ३२१ ॥
(अ. ७६) एवं त्रिरात्रमभवत्तद्युद्ध भरतर्षभ।
अर्जुनस्य नरेन्द्रेण वृत्रेणेव शतक्रतोः ॥ ३२२ ॥
ततश्चतुर्थे दिवसे वज्रदत्तो महाबल.।
प्रेषयामास नागेन्द्रं बलवत्पर्वतोपमम् ॥ ३२३ ॥
तमापतन्तं संप्रेक्ष्य वलवत्पाकशासनि।
नाराचमग्निसङ्काशं प्राहिणोद्वारणं प्रति ॥ ३२४ ॥
स तेन वारणो राजन्मर्मस्वभिहतो भृशम्।
पपात सहसा भूमौ वज्ररुग्ण इवाचलः ॥ ३२५ ॥
तस्मिन्निपतिते नागे वज्रदत्तस्य पाण्डवः।
तं न भेतव्यमित्याह ततो भूमिगतं नृपम् ॥ ३२६ ॥
उत्तिष्ठ न भयं तेऽस्ति स्वस्तिमान् गच्छ पार्थिव।
आगच्छेथा महाराज परां चैत्रीमुपस्थिताम्।
यदाऽश्वमेधो भविता धर्मराजस्य धीमतः ॥ ३२७ ॥
एवमुक्तः स राजा तु भगदत्तात्मजस्तदा।
तथेत्येवाब्रवीद्वाक्यं पाण्डवेनाभिनिर्जितः ॥ ३२८ ॥

(अ. ७७) सैन्धवैरभवद्युद्धं ततस्तस्य किरीटिनः।
हतशेषैर्महाराज हतानां च सुतैरपि ॥ ३२९ ॥
तेऽवतीर्णमुपश्रुत्य विषयं श्वेतवाहनम्।
प्रत्युद्ययुरमृष्यन्तो राजानः पाण्डवर्षभम ॥ ३३० ॥
अश्वं च तं परामृश्य विषयान्ते विषोपमाः।
न भयं चक्रिरे पार्थाद्भीमसेनादनन्तरात् ॥ ३३१ ॥
तेऽविदूराद्धनुष्पाणिं यज्ञियस्य हयस्य च।
बीभत्सुं प्रत्यपद्यन्त पदातिनमवस्थितम् ॥ ३३२ ॥
ते किरन्तः शरव्रातान्वारणप्रतिवारणान्।
रणे जयमभीप्सन्त कौन्तेय पर्यवारयन् ॥ ३३३ ॥
(अ. ७८) तेषां किरीटी सङ्कल्पं मोघं चक्रे महाबलः।
सर्वांस्तानन्तरा छित्त्वा तदा चुक्रोश पाण्डवः ॥ ३३४ ॥
तथैवापततां तेषां योधानां जयगृद्धिनाम्।
शिरांसि पातयामास भल्लैः सन्नतपर्वभिः ॥ ३३५ ॥
ते वध्यमानास्तु तदा पार्थेनामिततेजसा।
यथाप्राणं यथोत्साहं योधयामासुरर्जुनम् ॥ ३३६ ॥
ततस्ते फाल्गुनेनाजौ शरैः सन्नतपर्वभिः।
कृता विसंज्ञा भूयिष्ठाः क्लान्तवाहनसैनिकाः ॥ ३३७ ॥
तांस्तु सर्वान्परिग्लानान्विदित्वा धृतराष्ट्रजा।
दुःशला बालमादाय नप्तारं प्रययौ तदा ॥ ३३८ ॥
सुरथस्य सुतं वीरं रथेनाथागमत्तदा।
शान्त्यर्थं सर्वयोधानामभ्यगच्छत पाण्डवम् ॥ ३३९ ॥
सा धनञ्जयमासाद्य रुरोदार्तस्वरं तदा।
धनञ्जयोऽपि तां दृष्ट्वा धनुर्विससृजे प्रभुः ॥ ३४० ॥
समुत्सृज्य धनुः पार्थो विधिवद्भगिनीं तदा।
प्राह किं करवाणीति सा च तं प्रत्युवाच ह ॥ ३४१ ॥

एष ते भरतश्रेष्ठ स्वस्रीयस्यात्मजः शिशुः।
अभिवादयते पार्थ तं पश्य पुरुषर्षभ ॥ ३४२ ॥

इत्युक्तस्तस्य पितरं स पप्रच्छार्जुनस्तथा।
क्वासाविति ततो राजन् दुःशला वाक्यमब्रवीत् ॥ ३४३ ॥

स पूर्वं पितरं श्रुत्वा हतं युद्धे त्वयाऽनघ।
त्वामागतं च संश्रुत्य युद्धाय हयसारिणम्।
पितुश्च मृत्युदुःखार्तोऽजहात्प्राणान्धनञ्जय ॥ ३४४ ॥

प्राप्तो बीभत्सुरित्येव नाम श्रुत्वैव तेऽनघ।
विषादार्तः पपातोर्व्यां ममार च ममात्मजः ॥ ३४५ ॥

तं दृष्ट्वा पतितं तत्र ततस्तस्यात्मजं प्रभो।
गृहीत्वा समनुप्राप्ता त्वामद्य शरणैषिणी ॥ ३४६ ॥

अभिमन्योर्यथा जातः परिक्षित्परवीरहा।
तथाऽयं सुरथाज्जातो मम पौत्रो महाभुजः ॥ ३४७ ॥

तमनार्यं नृशंसं च विस्मृत्यास्य पितामहम्।
आगस्कारिणमत्यर्थं प्रसादं कर्तुमर्हसि ॥ ३४८ ॥

एवं ब्रुवत्यां करुणं दुःशलायां धनञ्जय।
संस्मृत्य देवी गान्धारीं धृतराष्ट्रं च पार्थिवम् ॥ ३४९ ॥

उवाच दुःखशोकार्तः क्षत्रधर्मं व्यगर्हयत्।
यत्कृते बान्धवाः सर्वे मया नीता यमक्षयम् ॥ ३५० ॥

इत्युक्त्वा बहु सान्त्वादिप्रसादमकरोज्जयः।
परिष्वज्य च तां प्रीतो विससर्ज गृहान्प्रति ॥ ३५१ ॥

दुःशला चापि तान् योधान् निवार्य महतो रणात्।
संपूज्य पार्थं प्रययौ गृहानेव शुभानना ॥ ३५२ ॥

एवं निर्जित्य तान्वीरान्सैन्धवान्स धनञ्जयः।
अन्वधावत धावन्तं हयं कामविचारिणम् ॥ ३५३ ॥

क्रमेण स हयस्त्वेवं विचरन्पुरुषर्षभ।
मणिपूरपतेर्देशमुपायात्सहपाण्डवः ॥ ३५४ ॥

## अर्जुनबभ्रुवाहनयुद्धम्, अर्जुनमृत्युः

(अ. ७९) श्रुत्वा तु नृपतिः प्राप्तं पितरं बभ्रुवाहनः।
निर्ययौ विनयेनाथ ब्राह्मणार्थपुरःसरः॥ ३५५॥

मणिपूरेश्वरं त्वेवमुपयातं धनञ्जयः।
नाभ्यनन्दत्स मेधावी क्षत्रधर्ममनुस्मरन्॥ ३५६॥

उवाच च स धर्मात्मा समन्युः फाल्गुनस्तदा।
प्रक्रियेयं न ते युक्ता बहिस्त्वं क्षत्रधर्मतः॥ ३५७॥

धिक् त्वामस्तु सुदुर्बुद्धिं क्षत्रधर्मबहिष्कृतम्।
यो मां युद्धाय सम्प्राप्तं साम्नैव प्रत्यगृह्णथा ॥ ३५८॥

यद्यहं न्यस्तशस्त्रस्त्वामागच्छेयं सुदुर्मते।
प्रक्रियेयं भवेद्युक्ता तावत्तव नराधम॥ ३५९॥

तमेवमुक्तं भर्त्रा तु विदित्वा पन्नगात्मजा।
अमृष्यमाणा भित्त्वोर्वीमुलूपी समुपागमत्॥ ३६०॥

सा ददर्श ततः पुत्रं विमृशन्तमधोमुखम्।
सन्तर्ज्यमानमसकृत्पित्रा युद्धार्थिना प्रभो॥ ३६१॥

ततः सा चारुसर्वाङ्गी समुपेत्योरगात्मजा।
उलूपी प्राह वचनं धर्म्यं धर्मविशारदम्॥ ३६२॥

युध्यस्वैनं कुरुश्रेष्ठं पितरं युद्धदुर्मदम्।
एवमेष हि ते प्रीतो भविष्यति न संशयः॥ ३६३॥

ततोऽभ्येत्य हयं वीरो यज्ञियं पार्थरक्षितम्।
ग्राहयामास पुरुषैर्हयशिक्षाविशारदैः॥ ३६४॥

गृहीतं वाजिनं दृष्ट्वा प्रीतात्मा स धनञ्जयः।
पुत्रं रथस्थं भूमिष्ठः संन्यवारयदाहवे॥ ३६५॥

स तत्र राजा तं वीरं शरसङ्घैरनेकशः।
अर्दयामास निशितैराशीविषविषोपमैः॥ ३६६॥

संप्रीयमाणः पार्थानामृषभः पुत्रविक्रमात् ।
नात्यर्थं पीडयामास पुत्रं वज्रधरात्मजः ॥ ३६७ ॥
ततः स बाल्यात्पितरं विव्याध हृदि पत्रिणा ।
निशितेन सुपुङ्खेन बलवद्बभ्रुवाहनः ॥ ३६८ ॥
स तेनातिभृशं विद्धः पुत्रेण कुरुनन्दनः ।
महीं जगाम मोहार्तस्ततो राजन् धनञ्जयः ॥ ३६९ ॥
तस्मिन्निपतिते वीरे कौरवाणां धुरन्धरे ।
सोऽपि मोहं जगामाथ ततश्चित्राङ्गदासुतः ॥ ३७० ॥
व्यायम्य संयुगे राजा दृष्ट्वा च पितरं हतम् ।
पूर्वमेव स बाणौघैर्गाढविद्धोऽर्जुनेन ह ।
पपात सोऽपि धरणीमालिङ्ग्य रणमूर्धनि ॥ ३७१ ॥
भर्तारं निहतं दृष्ट्वा पुत्रं च पतितं भुवि ।
चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरे ॥ ३७२ ॥

## अर्जुनस्य प्रत्युज्जीवनम्

(अ. ८०) ततो बहुतरं भीरुर्विलप्य कमलेक्षणा ।
मुमोह दुःखसन्तप्ता पपात च महीतले ॥ ३७३ ॥
प्रतिलभ्य च सा संज्ञां देवी दिव्यवपुर्धरा ।
उलूपीं पन्नगसुतां दृष्ट्वेदं वाक्यमब्रवीत् ॥ ३७४ ॥
ननु त्वमार्यधर्मज्ञा ननु चासि पतिव्रता ।
यत्त्वत्कृतेऽयं पतितः पतिस्ते निहतो रणे ॥ ३७५ ॥
किन्तु सर्वापराधोऽयं यदि तेऽद्य धनञ्जयः ।
क्षमस्व याच्यमाना वै जीवयस्व धनञ्जयम् ॥ ३७६ ॥
कामं स्वपितु बालोऽयं भूमौ मृत्युवशं गतः ।
लोहिताक्षो गुडाकेशो विजयः साधु जीवतु ॥ ३७७ ॥
नापराधोऽस्ति सुभगे नराणां बहुभार्यता ।
प्रमदानां भवत्येष मा तेऽभूद्बुद्धिरीदृशी ॥ ३७८ ॥

पुत्रेण घातयित्वैनं पतिं यदि न मेऽद्य वै।
जीवन्तं दर्शयस्यद्य परित्यक्ष्यामि जीवितम् ॥ ३७९ ॥

इत्युक्त्वा पन्नगसुतां सपत्नी चैत्रवाहनी।
ततः प्रायमुपासीना तूष्णीमासीज्जनाधिप ॥ ३८० ॥

ततः संज्ञां पुनर्लब्ध्वा स राजा बभ्रुवाहनः।
मातरं तामथालोक्य रणभूमावथाब्रवीत् ॥ ३८१ ॥

इतो दुःखतरं किं नु यन्मे माता सुखैधिता।
भूमौ निपतितं वीरमनुशेते मृतं पतिम् ॥ ३८२ ॥

यदि नोत्तिष्ठति जयः पिता मे नरसत्तमः।
अस्मिन्नेव रणोद्देशे शोषयिष्ये कलेवरम् ॥ ३८३ ॥

इत्येवमुक्त्वा नृपते धनञ्जयसुतो नृपः।
उपस्पृश्याभवत्तूष्णीं प्रायोपेतो महामतिः ॥ ३८४ ॥

प्रायोपविष्टे नृपतौ मणिपूरेश्वरे तदा।
पितृशोकसमाविष्टे सह मात्रा परन्तप ॥ ३८५ ॥

उलूपी चिन्तयामास तदा सञ्जीवनं मणिम्।
स चोपातिष्ठत तदा पन्नगानां परायणम् ॥ ३८६ ॥

तं गृहीत्वा तु कौरव्य नागराजपतेः सुता।
मनः प्रह्लादनीं वाचं सैनिकानामथाब्रवीत् ॥ ३८७ ॥

उत्तिष्ठ मा शुचः पुत्र नैव जिष्णुस्त्वया जितः।
अजेयः पुरुषैरेष तथा देवैः सवासवैः ॥ ३८८ ॥

मया तु मोहनी नाम मायैषा संप्रदर्शिता।
प्रियार्थं पुरुषेन्द्रस्य पितुस्तेऽद्य यशस्विनः ॥ ३८९ ॥

जिज्ञासुर्ह्येष पुत्रस्य बलस्य तव कौरव।
सङ्ग्रामे युद्धतो राजन्नागतः परवीरहा ॥ ३९० ॥

तस्मादसि मया पुत्र युद्धाय परिचोदितः।
मा पापमात्मनः पुत्र शङ्केथा ह्यण्वपि प्रभो ॥ ३९१ ॥

अथ तु मे मणिर्दिव्यः समानीतो विशाम्पते ।
मृतान्मृतान्पन्नगेन्द्रान् यो जीवयति नित्यदा ॥ ३९२ ॥

एनमस्योरसि त्वं च स्थापयस्व पितुः प्रभो ।
सञ्जीवितं तदा पार्थं स त्व द्रष्टाऽसि पाण्डवम् ॥ ३९३ ॥

इत्युक्तः स्थापयामास तस्योरसि मणिं तदा ।
पार्थस्यामिततेजाः स पितुः स्नेहादपापकृत् ॥ ३९४ ॥

तस्मिन्न्यस्ते मणौ वीरो जिष्णुरुज्जीवितः प्रभुः ।
चिरसुप्त इवोत्तस्थौ मृष्टलोहितलोचनः ॥ ३९५ ॥

उत्थाय च महाबाहुः पर्याश्वस्तो धनञ्जयः ।
बभ्रुवाहनमालिङ्ग्य समाजिघ्रत मूर्धनि ॥ ३९६ ॥

ददर्श चाऽपि दूरेऽस्य मातरं शोककर्शिताम् ।
उलूप्या सह तिष्ठन्तीं ततोऽपृच्छद्धनञ्जय ॥ ३९७ ॥

जानाम्यहमिदं युद्धं त्वया मद्वचनात् कृतम् ।
स्त्रीणामागमने हेतुमहमिच्छामि वेदितुम् ॥ ३९८ ॥

(अ. ८१) न[illegible]दिता प्रेष्यवत् स्थिता ।
त्वत्प्रियार्थं हि कौन्तेय कृतमेतन्मया विभो ॥ ३९९ ॥

महाभारतयुद्धे यत्त्वया शान्तनवो नृपः ।
अधर्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता ॥ ४०० ॥

तस्य शान्तिमकृत्वा त्वं त्यजेथा यदि जीवितम् ।
कर्मणा तेन पापेन पतेथा निरये ध्रुवम् ॥ ४०१ ॥

पुरा हि श्रुतमेतत्ते वसुभिः कथितं मया ।
गङ्गायास्तीरमाश्रित्य हते शान्तनवे नृप ॥ ४०२ ॥

आप्लुत्य देवा वसवः समेत्य च महानदीम् ।
इदमूचुर्वचो घोरं भागीरथ्या मते तदा ॥ ४०३ ॥

एष शान्तनवो भीष्मो निहतः सव्यसाचिना ।
अयुध्यमानः सङ्ग्रामे संसक्तोऽन्येन भाविनि ॥ ४०४ ॥

तदनेनानुषङ्गेण वयमद्य धनञ्जयम्।
शापेन योजयामेति तथास्त्विति च साऽब्रवीत् ॥ ४०५॥
तदहं पितुरावेद्य प्रविश्य व्यथितेन्द्रिया।
अभवं स च तच्छ्रुत्वा विषादमगमत् परम् ॥ ४०६॥
पिता तु मे वसून् गत्वा त्वदर्थे समयाचत।
पुनः पुनः प्रसाद्यैतांस्त एनमिदमब्रुवन् ॥ ४०७॥
पुत्रस्तस्य महाभाग मणिपूरेश्वरो युवा।
स एनं रणमध्यस्थः शरैः पातयिता भुवि ॥ ४०८॥
एवं कृते स नागेन्द्र मुक्तशापो भविष्यति।
गच्छेति वसुभिश्चोक्तो मम चेदं शशंस सः ॥ ४०९॥
तच्छ्रुत्वा त्वं मया तस्माच्छापादसि विमोक्षितः।
न हि त्वां देवराजोऽपि समरेषु पराजयेत् ॥ ४१०॥
आत्मा पुत्रः स्मृतस्तस्मात्तेनेहाऽसि पराजितः।
इत्येवमुक्तो विजयः प्रसन्नात्माऽब्रवीदिदम् ॥ ४११॥
युधिष्ठिरस्याश्वमेधः परिचैत्री भविष्यति।
तत्रागच्छेः सहामात्यो मातृभ्यां सहितो नृप ॥ ४१२॥
इत्येवमुक्तः पार्थेन स राजा बभ्रुवाहनः।
उवाच पितरं धीमानिदमस्राविलेक्षणः ॥ ४१३॥
उपयास्यामि धर्मज्ञ भवतः शासनादहम्।
अश्वमेधे महायज्ञे द्विजातिपरिवेषकः ॥ ४१४॥
स तत्र विधिवत्तेन पूजितः पाकशासनिः।
भार्याभ्यामभ्यनुज्ञातः प्रायाद्भरतसत्तमः ॥ ४१५॥

## मागधपराजयः, शकुनिपुत्रपराजयः

(अ. ८२) स तु वाजी समुद्रान्तां पर्येत्य वसुधामिमाम्।
निवृत्तोऽभिमुखो राजन् येन वारणसाह्वयम् ॥ ४१६॥
अनुगच्छंश्च तुरगं निवृत्तोऽथ किरीटभृत्।
यदृच्छया समापेदे पुरं राजगृहं तदा ॥ ४१७॥

तमभ्याशगतं दृष्ट्वा सहदेवात्मजः प्रभो।
क्षत्रधर्मे स्थितो वीरः समरायाजुहाव ह ॥ ४१८ ॥
आसाद्य च महातेजा मेघसन्धिर्धनञ्जयम्।
बालभावान्महाराज प्रोवाचेदं न कौशलात् ॥ ४१९ ॥
किमर्थं चार्यते वाजी स्त्रीमध्य इव भारत।
हयमेनं हरिष्यामि प्रयतस्व विमोक्षणे ॥ ४२० ॥
इत्युक्तः प्रत्युवाचैनं प्रहसन्निव पाण्डवः।
विघ्नकर्ता मया वार्य इति मे व्रतमाहितम्।
प्रहरस्व यथाशक्ति न मन्युर्विद्यते मम ॥ ४२१ ॥
इत्युक्तः प्राहरत्पूर्वं पाण्डवं मगधेश्वरः।
किरन् शरसहस्राणि वर्षाणीव सहस्रदृक् ॥ ४२२ ॥
ततो गाण्डीवभृच्छूरो गाण्डीवप्रहितैः शरैः।
हयांश्चकार निर्जीवान् सारथेश्च शिरोऽहरत्।
धनुश्चास्य महच्चित्रं क्षुरेण प्रचकर्त ह ॥ ४२३ ॥
स राजा व्यथितो व्यश्वो विधनुर्हतसारथिः।
गदामादाय कौन्तेयमभिदुद्राव वेगवान् ॥ ४२४ ॥
तस्यापतत एवाशु गदां हेमपरिष्कृताम्।
शरैश्चकर्त बहुधा बहुभिर्गृध्रवाजितैः ॥ ४२५ ॥
विरथं विधनुष्कं च गदया परिवर्जितम्।
सान्त्वपूर्वमिदं वाक्यमब्रवीत्कपिकेतनः ॥ ४२६ ॥
पर्याप्तः क्षत्रधर्मोऽयं दर्शितः पुत्र गम्यताम् ॥ ४२७ ॥
युधिष्ठिरस्य सन्देशो न हन्तव्या नृपा इति।
तेन जीवसि राजंस्त्वमपराद्धोऽपि मे रणे ॥ ४२८ ॥
इति मत्वा तदात्मानं प्रत्यादिष्टं स्म मागधः।
तथ्यमित्यभिगम्यैनं प्राञ्जलिः प्रत्यपूजयत् ॥ ४२९ ॥
तमर्जुनः समाश्वास्य पुनरेवेदमब्रवीत्।
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः ॥ ४३० ॥

इत्युक्तः स तथेत्युक्त्वा पूजयामास तं हयम्।
फाल्गुनं च युधि श्रेष्ठं विधिवत्सहदेवजः ॥ ४३१ ॥

(अ ८३) मागधेनार्चितो राजन् पाण्डवः श्वेतवाहनः।
दक्षिणां दिशमास्थाय चारयामास तं हयम् ॥ ४३२ ॥

तत्रापि द्रविडैरान्ध्रै रौद्रैर्माहिषकैरपि।
तथा कोल्लगिरेयैश्च युद्धमासीत्किरीटिनः ॥ ४३३ ॥

तांश्चापि विजयो जित्वा नातितीव्रेण कर्मणा।
तुरङ्गमवशेनाथ सुराष्ट्रानभितो ययौ ॥ ४३४ ॥

ततो द्वारवतीं रम्यां वृष्णिवीराभिपालिताम्।
आससाद हयः श्रीमान्कुरुराजस्य यज्ञियः ॥ ४३५ ॥

तमुन्मथ्य हयश्रेष्ठं यादवानां कुमारकाः।
प्रययुस्तांस्तदा राजन्नुग्रसेनो न्यवारयत् ॥ ४३६ ॥

तत पुराद्विनिष्क्रम्य वृष्ण्यन्धकपतिस्तदा।
सहितो वसुदेवेन मातुलेन किरीटिनः ॥ ४३७ ॥

तौ समेत्य कुरुश्रेष्ठं विधिवत्प्रीतिपूर्वकम्।
परया भारतश्रेष्ठं पूजया समवस्थितौ ॥ ४३८ ॥

तत॰ स पश्चिमं देश समुद्रस्य तदा हयः।
क्रमेण व्यचरत्स्फीतं ततः पञ्चनदं ययौ ॥ ४३९ ॥

तस्मादपि स कौरव्य गन्धारविषयं हयः।
विचचार यथाकामं कौन्तेयानुगतस्तदा ॥ ४४० ॥

(अ. ८४) शकुनेस्तनयो वीरो गान्धाराणां महारथः।
प्रत्युद्ययौ गुडाकेशं सैन्येन महता वृत॰ ॥ ४४१ ॥

अमृष्यमाणास्ते योधा नृपस्य शकुनेर्वधम्।
अभ्ययुः सहिताः पार्थं प्रगृहीतशरासनाः ॥ ४४२ ॥

स तानुवाच धर्मात्मा बीभत्सुरपराजितः।
युधिष्ठिरस्य वचनं न च ते जगृहुर्हितम् ॥ ४४३ ॥

वार्यमाणाऽपि पार्थेन सान्त्वपूर्वममर्षिताः ।
परिवार्य हयं जग्मुस्ततश्चुक्रोध पाण्डवः ॥ ४४४ ॥

ततः शिरांसि दीप्ताग्रैस्तेषां चिच्छेद पाण्डवः ॥
क्षुरैर्गाण्डीवनिर्मुक्तैर्नातियत्नादिवार्जुनः ॥ ४४५ ॥

ते वध्यमानाः पार्थेन हयमुत्सृज्य संभ्रमात् ॥
न्यवर्तन्त महाराज शरवर्षार्दिता भृशम् ॥ ४४६ ॥

गान्धारराजपुत्रस्तु पलायनकृतक्षणः ।
ययौ तैरेव सहितस्त्रस्तैः क्षुद्रमृगैरिव ॥ ४४७ ॥

ततो गान्धारराजस्य मन्त्रिवृद्धपुरःसरा ।
जननी निर्ययौ भीता पुरस्कृत्यार्घमुत्तमम् ॥ ४४८ ॥

सा न्यवारयदव्यग्रं तं पुत्रं युद्धदुर्मदम् ।
प्रसादयामास च तं जिष्णुमक्लिष्टकारिणम् ॥ ४४९ ॥

तां पूजयित्वा बीभत्सुः प्रसादमकरोत्प्रभुः ।
शकुनेश्चापि तनयं सान्त्वयन्निदमब्रवीत् ॥ ४५० ॥

न मे प्रियं महाबाहो यत्ते बुद्धिरियं कृता ।
प्रतियोद्धुममित्रघ्न भ्रातैव त्वं ममानघ ॥ ४५१ ॥

गान्धारीं मातरं स्मृत्वा धृतराष्ट्रकृतेन च ।
तेन जीवसि राजंस्त्वं निहतास्त्वनुगास्तव ॥ ४५२ ॥

मैवं भूः शाम्यतां वैरं मा ते भूद्बुद्धिरीदृशी ।
गच्छेथास्त्वं परां चैत्रीमश्वमेधे नृपस्य नः ॥ ४५३ ॥

## अश्वमेधारम्भः, अर्जुनस्य प्रत्यागमनम्

(अ. ८५) इत्युक्त्वानुययौ पार्थो हयं कामविहारिणम् ।
न्यवर्तत ततो वाजी येन नागाह्वयं पुरम् ॥ ४५४ ॥

तं निवृत्तं तु शुश्राव चारेणैव युधिष्ठिरः ।
श्रुत्वाऽर्जुनं कुशलिनं स च हृष्टमनाऽभवत् ॥ ४५५ ॥

विजयस्य च तत्कर्म गान्धारविषये तदा।
श्रुत्वा चान्येषु देशेषु स सुप्रीतोऽभवत्तदा ॥ ४५६ ॥

एतस्मिन्नेव काले तु द्वादशी माघमासिकीम्।
इष्टं गृहीत्वा नक्षत्रं धर्मराजो युधिष्ठिरः ॥ ४५७ ॥

प्रोवाचेदं वच. काले तदा धर्मभृतां वर. ।
आमन्त्र्य वदतां श्रेष्ठो भीमं प्रहरता वरम् ॥ ४५८ ॥

आयाति भीमसेनासौ सहाश्वेन तवानुजः।
यथा मे पुरुषा. प्राहुर्ये धनञ्जयसारिण. ॥ ४५९ ॥

तत्प्रस्थाप्यन्तु विद्वांसो ब्राह्मणा वेदपारगाः।
वाजिमेधार्थसिद्ध्यर्थ देशं पश्यन्तु यज्ञियम् ॥ ४६० ॥

ततो ययौ भीमसेनः प्राज्ञैः स्थपतिभि. सह।
ब्राह्मणानग्रत. कृत्वा कुशलान् यज्ञकर्मणि ॥ ४६१ ॥

तं सशालचयं श्रीमत्सप्रतोलीसुघट्टितम्।
मापयामास कौरव्यो यज्ञवाटं यथाविधि ॥ ४६२ ॥

प्रासादशतसम्बाधं मणिप्रवरकुट्टिमम्।
कारयामास विधिवद्धेमरत्नविभूषितम्॥ ४६३ ॥

स्तंभान्कनकचित्रांश्च तोरणानि बृहन्ति च।
यज्ञायतनदेशेषु दत्वा शुद्धं च काननम् ॥ ४६४ ॥

अन्तःपुराणां राज्ञां च नानादेशसमीयुषाम्।
कारयामास धर्मात्मा तत्र तत्र यथाविधि ॥ ४६५ ॥

ब्राह्मणानां च वेश्मानि नानादेशसमीयुषाम्।
कारयामास कौन्तेयो विधिवत्तान्यनेकशः ॥ ४६६ ॥

तथा संप्रेषयामास दूतान्नृपतिशासनात्।
भीमसेनो महाबाहो राज्ञामक्लिष्टकर्मणाम् ॥ ४६७ ॥

ते प्रियार्थं कुरुपतेराययुर्नृपसत्तम।
रत्नान्यनेकान्यादाय स्त्रियोऽश्वानायुधानि च ॥ ४६८ ॥

तेषामभ्यागतानां च स राजा कुरुवर्धनः।
व्यादिदेशान्नपानानि शय्याश्चाप्यतिमानुषाः ॥ ४६९ ॥
तथा तस्मिन् महायज्ञे धर्मराजस्य धीमतः।
समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः ॥ ४७० ॥
ये च द्विजातिप्रवरास्तत्रासन् पृथिवीपते।
समाजग्मुः सशिष्यांस्तान्प्रतिजग्राह कौरवः ॥ ४७१ ॥
पूर्णे शतसहस्रे तु विप्राणां तत्र भुञ्जताम्।
दुन्दुभिर्मेघनिर्घोषो मुहुर्मुहुरताड्यत ॥ ४७२ ॥
विननादासकृच्चापि दिवसे दिवसे गते ॥ ४७३ ॥
(अ ८६) युधिष्ठिरसमीपे तु कथान्ते मधुसूदनः।
अर्जुनं कथयामास बहुसङ्ग्रामकर्षितम् ॥ ४७४ ॥
स तं पप्रच्छ कौन्तेय पुनः पुनररिन्दमम् ॥ ४७५ ॥
(अ. ८७) बहूनि किल युद्धानि विजयस्य नराधिपैः।
युधि०- पुनरासन् हृषीकेश तत्र तत्र च मे श्रुतम् ॥ ४७६ ॥
किन्निमित्तं स नित्यं हि पार्थः सुखविवर्जितः।
अतीव विजयो धीमन्निति मे दूयते मनः ॥ ४७७ ॥
किं नु तस्य शरीरेऽस्ति सर्वलक्षणपूजिते।
अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते ॥ ४७८ ॥
इत्युक्तः स हृषीकेशो ध्यात्वा सुमहदुत्तरम्।
राजानं भोजराजन्यवर्धनो विष्णुरब्रवीत् ॥ ४७९ ॥
न ह्यस्य नृपते किञ्चित्संश्लिष्टमुपलक्षये।
ऋते पुरुषसिंहस्य पिण्डिकेऽस्याधिके यतः ॥ ४८० ॥
स ताभ्यां पुरुषव्याघ्रो नित्यमध्वसु वर्तते।
न चान्यदनुपश्यामि येनासौ दुःखभाजनम् ॥ ४८१ ॥
तेषां कथयतामेव पुरुषोऽर्जुनसङ्कथाः।
उपायाद्वचनाद्दूतो विजयस्य महात्मनः ॥ ४८२ ॥

सोऽभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् ।
उपायातं नरव्याघ्रं फाल्गुनं प्रत्यवेदयत् ॥ ४८३ ॥
तच्छ्रुत्वा नृपतिस्तस्य हर्षबाष्पाकुलेक्षण॰ ।
प्रियाख्याननिमित्तं वै ददौ बहुधनं तदा ॥ ४८४ ॥
ततो द्वितीये दिवसे महान् शब्दो व्यवर्धत ।
आगच्छति नरव्याघ्रे कौरवाणां धुरन्धरे ॥ ४८५ ॥
तत्र हर्षकरी वाचो नराणां शुश्रुवेऽर्जुन॰ ।
दिष्ट्यासि पार्थ कुशली धन्यो राजा युधिष्ठिरः ॥ ४८६ ॥
कोऽन्यो हि पृथिवीं कृत्स्नां जित्वा हि युधि पार्थिवान् ।
चारयित्वा हयश्रेष्ठमुपागच्छेदृतेऽर्जुनात् ॥ ४८७ ॥
नैतदन्ये करिष्यन्ति भविष्या वसुधाधिपा॰ ।
यस्त्वं कुरुकुलश्रेष्ठ दुष्करं कृतवानसि ॥ ४८८ ॥
इत्येवं वदतां तेषां पुंसां कर्णसुखा गिर॰ ।
शृण्वन्विवेश धर्मात्मा फाल्गुनो यज्ञसंस्तरम् ॥ ४८९ ॥
ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः ।
धृतराष्ट्रं पुरस्कृत्य तं प्रत्युद्ययतुस्तदा ॥ ४९० ॥
सोऽभिवाद्य पितुः पादौ धर्मराजस्य धीमतः ।
भीमादींश्चापि संपूज्य पर्यष्वजत केशवम् ॥ ४९१ ॥
तैः समेत्यार्चितस्तांश्च प्रत्यर्च्याथ यथाविधि ।
विशश्राम महाबाहुस्तीरं लब्ध्वेव पारग॰ ॥ ४९२ ॥
(अ. ८८) ततस्तृतीये दिवसे सत्यवत्यात्मजो मुनिः ।
युधिष्ठिरं समभ्येत्य वाग्मी वचनमब्रवीत् ॥ ४९३ ॥
अद्यप्रभृति कौन्तेय यजस्व समयो हि ते ।
मुहूर्तो यज्ञियः प्राप्तश्चोदयन्तीह याजकाः ॥ ४९४ ॥
अहीनो नाम राजेन्द्र क्रतुस्तेऽयं च कल्पताम् ।
बहुत्वात्काञ्चनाख्यस्य ख्यातो बहुसुवर्णकः ॥ ४९५ ॥

एवमत्र महाराज दक्षिणां त्रिगुणां कुरु।
त्रित्वं व्रजतु ते राजन् ब्राह्मणा ह्यत्र कारणम् ॥ ४९६ ॥
त्रीनश्वमेधानत्र त्वं संप्राप्य बहुदक्षिणान्।
ज्ञातिवध्याकृतं पापं प्रहास्यसि नराधिप ॥ ४९७ ॥
इत्युक्तः स तु तेजस्वी व्यासेनामितबुद्धिना।
दीक्षां विवेश धर्मात्मा वाजिमेधाप्तये ततः ॥ ४९८ ॥
तत्र वेदविदो राजंश्चक्रुः कर्माणि याजकाः।
परिक्रमन्तः सर्वज्ञा विधिवत्साधुशिक्षितम्।
न तेषां स्खलितं किञ्चिदासीच्चाप्यकृत तथा ॥ ४९९ ॥
कृत्वा प्रवर्ग्यं धर्माख्यं यथावद्द्विजसत्तमाः।
चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः ॥ ५०० ॥
अभिषूय ततो राजन् सोमं सोमपसत्तमाः।
सवनान्यानुपूर्व्येण चक्रुः शास्त्रानुसारिणः ॥ ५०१ ॥
न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह।
क्षुधितो दुःखितो वाऽपि प्राकृतो वाऽपि मानवः ॥ ५०२ ॥
भोजनं भोजनार्थिभ्यो दापयामास शत्रुहा।
भीमसेनो महातेजाः सततं राजशासनात् ॥ ५०३ ॥
संस्तरे कुशलाश्चापि सर्वकार्याणि याजकाः।
दिवसे दिवसे चक्रुर्यथाशास्त्रानुदर्शनात् ॥ ५०४ ॥
इष्टकाः काञ्चनीश्चात्र चयनार्थं कृताऽभवन्।
शुशुभे चयनं तच्च दक्षस्येव प्रजापतेः ॥ ५०५ ॥
यूपेषु नियता चासीत्पशूनां त्रिशती तथा।
अश्वरत्नोत्तरा यज्ञे कौन्तेयस्य महात्मनः ॥ ५०६ ॥
स यज्ञः शुशुभे तस्य साक्षाद्देवर्षिसङ्कुलः।
गन्धर्वगणसङ्गीतः प्रनृत्तोऽप्सरसां गणैः ॥ ५०७ ॥
गन्धर्वा गीतकुशला नृत्येषु च विशारदाः।
रमयन्ति स्म तान्विप्रान् यज्ञकर्मान्तरेषु वै ॥ ५०८ ॥

## अश्वमेधसमाप्तिः

(अ. ८९) श्रपयित्वा पशूनन्यान्विधिवद्द्विजसत्तमाः।
तं तुरङ्गं यथाशास्त्रमालभन्त द्विजातयः॥ ५०९॥

ततः संज्ञप्य तुरगं विधिवद्याजकास्तदा।
उपसंवेशयन् राजंस्ततस्तां द्रुपदात्मजाम्॥ ५१०॥

उद्धृत्य तु वपां तस्य यथाशास्त्रं द्विजातयः।
श्रपयामासुरव्यग्रा विधिवद्भरतर्षभ॥ ५११॥

तं वपाधूमगन्धं तु धर्मराजः सहानुजैः।
उपाजिघ्रद्यथाशास्त्रं सर्वपापापहं तदा॥ ५१२॥

शिष्टान्यङ्गानि यान्यासंस्तस्याश्वस्य नराधिप।
तान्यग्नौ जुहुवुर्धीराः समस्ताः षोडशर्त्विजः॥ ५१३॥

संस्थाप्यैवं तस्य राज्ञस्तं यज्ञं शक्रतेजसः।
व्यासः सशिष्यो भगवान् वर्धयामास तं नृपम्॥ ५१४॥

ततो युधिष्ठिरः प्रादाद्ब्राह्मणेभ्यो यथाविधि।
कोटीः सहस्रं निष्काणां व्यासाय तु वसुन्धराम्॥ ५१५॥

प्रतिगृह्य धरां राजन् व्यासः सत्यवतीसुतः।
अब्रवीद्भरतश्रेष्ठं धर्मराजं युधिष्ठिरम्॥ ५१६॥

वसुधा भवतस्त्वेषा संन्यस्ता राजसत्तम।
निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिनः॥ ५१७॥

इत्युक्तः स कुरुश्रेष्ठः प्रीतात्मा भ्रातृभिः सह।
कोटिकोटिकृतां प्रादाद्दक्षिणां त्रिगुणां क्रतोः॥ ५१८॥

प्रतिगृह्य तु तद्रत्नं कृष्णद्वैपायनो मुनिः।
ऋत्विग्भ्यः प्रददौ विद्वांश्चतुर्धा व्यभजंश्च ते॥ ५१९॥

धरण्या निष्क्रयं दत्वा तद्धिरण्यं युधिष्ठिरः।
धूतपापो जितस्वर्गो मुमुदे भ्रातृभिः सह॥ ५२०॥

ऋत्विजस्तमपर्यन्तं सुवर्णनिचयं तथा।
व्यभजन्त द्विजातिभ्यो यथोत्साहं यथासुखम् ॥ ५२१ ॥
यज्ञवाटे च यत्किञ्चिद्धिरण्य सविभूषणम्।
तोरणानि च यूपांश्च घटान्पात्रीस्तथेष्टकाः।
युधिष्ठिराभ्यनुज्ञाताः सर्वं तद्व्यभजन् द्विजाः ॥ ५२२ ॥
अनन्तरं द्विजातिभ्यः क्षत्रिया जह्रिरे वसु।
तथा विट्शूद्रसङ्घाश्च तथान्ये म्लेच्छजातयः ॥ ५२३ ॥
ततस्ते ब्राह्मणाः सर्वे मुदिता जग्मुरालयान्।
तर्पिता वसुना तेन धर्मराजेन धीमता ॥ ५२४ ॥
स्वमंशं भगवान् व्यासः कुन्त्यै साक्षाद्धि मानतः।
प्रददौ तस्य महतो हिरण्यस्य महाद्युतिः ॥ ५२५ ॥
श्वशुरात्प्रीतिदायं तं प्राप्य सा प्रीतमानसा।
चकार पुण्यकं तेन सुमहत्सङ्घशः पृथा ॥ ५२६ ॥
गत्वा त्ववभृथं राजा विपाप्मा भ्रातृभिः सह।
सभाज्यमानः शुशुभे महेन्द्रस्त्रिदशैरिव ॥ ५२७ ॥
नृपतींश्चैव तान् सर्वान् सुविभक्तान् सुपूजितान्।
प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः ॥ ५२८ ॥
गोविन्दं च महात्मानं बलदेव महाबलम्।
तथाऽन्यान् वृष्णिवीरांश्च प्रद्युम्नाद्यान् सहस्रशः ॥ ५२९ ॥
पूजयित्वा महाराज यथाविधि महाद्युतिः।
भ्रातृभिः सहितो राजा प्रास्थापयदरिन्दमः ॥ ५३० ॥
एवं बभूव यज्ञः स धर्मराजस्य धीमतः।
बह्वन्नधनरत्नौघः सुरामैरेयसागरः ॥ ५३१ ॥
सर्पिःपङ्का ह्रदा यत्र बभूवुश्चान्नपर्वताः।
रसालाकर्दमा नद्यो बभूवुर्भरतर्षभ ॥ ५३२ ॥
भक्ष्यखाण्डवरागाणां क्रियतां भुज्यतां तथा।
पशूनां वध्यतां चैव नान्तं ददृशिरे जनाः ॥ ५३३ ॥

मत्तप्रमत्तमुदितं सुप्रीतयुवतीजनम्।
मृदङ्गशङ्खनादैश्च मनोरममभूत्तदा॥ ५३४॥
दीयतां भुज्यतां चेष्टं दिवारात्रमवारितम्।
तं महोत्सवसङ्काशं हृष्टपुष्टजनाकुलम्।
कथयन्ति स्म पुरुषा नानादेशनिवासिनः॥ ५३५॥
वर्षित्वा धनधाराभिः कामै रत्नै रसैस्तथा।
विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत्पुरम्॥ ५३६॥

## नकुलाख्यानम्

(अ ९०) पितामहस्य मे यज्ञे धर्मराजस्य धीमतः।
जन०— यदाश्चर्यमभूत्किञ्चित्तद्भवान् वक्तुमर्हति॥ ५३७॥
वैश०— श्रूयतां राजशार्दूल महदाश्चर्यमुत्तमम्।
अश्वमेधे महायज्ञे निवृत्ते यदभूत्प्रभो॥ ५३८॥
तर्पितेषु द्विजाग्र्येषु ज्ञातिसम्बन्धिबन्धुषु।
दीनान्धकृपणे वापि तदा भरतसत्तम॥ ५३९॥
घुष्यमाणे महादाने दिक्षु सर्वासु भारत।
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्धनि॥ ५४०॥
नीलाक्षस्तत्र नकुलो रुक्मपार्श्वस्तदाऽनघ।
वज्राशनिसमं नादममुञ्चद्वसुधाधिप॥ ५४१॥
सकृदुत्सृज्य तन्नादं त्रासयानो मृगद्विजान्।
मानुषं वचनं प्राह धृष्टो बिलशयो महान्॥ ५४२॥
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः॥ ५४३॥
तस्य तद्वचनं श्रुत्वा नकुलस्य विशाम्पते।
विस्मयं परमं जग्मुः सर्वे ते ब्राह्मणर्षभाः॥ ५४४॥
ततः समेत्य नकुलं पर्यपृच्छन्त ते द्विजाः।
यदत्र तथ्यं तद्ब्रूहि सत्यं सत्यं द्विजातिषु॥ ५४५॥

यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया।
इति पृष्टो द्विजैस्तैः स प्रहसन्नकुलोऽब्रवीत् ॥ ५४६ ॥
धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते।
उञ्छवृत्तिर्द्विज कश्चित्कापोतिरभवत्तदा ॥ ५४७ ॥
सभार्यः सह पुत्रेण सस्नुषस्तपसि स्थितः।
बभूव शुक्लवृत्तः स धर्मात्मा नियतेन्द्रियः ॥ ५४८ ॥
षष्ठे काले सदा विप्रो भुङ्क्ते तैः सह सुव्रतः।
षष्ठे काले कदाचित्तु तस्याहारो न विद्यते ॥ ५४९ ॥
काले कालेऽस्य संप्राप्ते नैव विद्येत भोजनम्।
क्षुधापरिगताः सर्वे प्रातिष्ठन्त तदा तु ते ॥ ५५० ॥
अथ षष्ठे गते काले यवप्रस्थमुपार्जयन्।
यवप्रस्थं तु तं सक्तूनकुर्वन्त तपस्विनः ॥ ५५१ ॥
कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि।
कुडव कुडवं सर्वे व्यभजन्त तपस्विनः ॥ ५५२ ॥
अथागच्छद्द्विजः कश्चिदतिथिर्भुञ्जतां तदा।
कुटीं प्रवेशयामासु क्षुधार्तमतिथिं तदा ॥ ५५३ ॥
इदमर्घ्यं च पाद्यं च बृसी चेयं तवानघ।
शुचयः सक्तवश्चेमे नियमोपार्जिताः प्रभो।
प्रतिगृह्णीष्व भद्रं ते मया दत्ता द्विजर्षभ ॥ ५५४ ॥
इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः।
भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः ॥ ५५५ ॥
स उञ्छवृत्तिस्तं प्रेक्ष्य क्षुधापरिगतं द्विजम्।
आहारं चिन्तयामास कथं तुष्टो भवेदिति ॥ ५५६ ॥
तस्य भार्याऽब्रवीद्वाक्यं मद्भागो दीयतामिति।
गच्छत्वेष यथाकामं परितुष्टो द्विजोत्तमः ॥ ५५७ ॥
इति ब्रुवन्तीं तां साध्वीं भार्यां स द्विजसत्तमः।
क्षुधापरिगतां ज्ञात्वा तान्सक्तून्नाभ्यनन्दत ॥ ५५८ ॥

आत्मानुमानतो विद्वान् स तु विप्रर्षभस्तदा ।
जानन् वृद्धां क्षुधार्तां च श्रान्तां ग्लानां तपस्विनीम् ।
त्वगस्थिभूतां वेपन्तीं ततो भार्यामुवाच ह ॥ ५५९ ॥
अपि कीटपतङ्गानां मृगाणां चैव शोभने ।
स्त्रियो रक्ष्याश्च पोष्याश्च न त्वेवं वक्तुमर्हसि ॥ ५६० ॥
अनुकम्प्यो नरः पत्न्या पुष्टो रक्षित एव च ।
प्रपतेद्यशसो दीप्तात्स च लोकान्न चाप्नुयात् ॥ ५६१ ॥
धर्मकामार्थकार्याणि शुश्रूषा कुलसन्ततिः ।
दारेष्वधीनो धर्मश्च पितृणामात्मनस्तथा ॥ ५६२ ॥
न वेत्ति कर्मतो भार्यारक्षणे योऽक्षमः पुमान् ।
अयशो महदाप्नोति नरकांश्चैव गच्छति ॥ ५६३ ॥
इत्युक्ता सा ततः प्राह धर्मार्थौ नौ समौ द्विज ।
सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे ॥ ५६४ ॥
सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः ।
स्त्रीणां पतिसमाधीनं काङ्क्षितं च द्विजर्षभ ॥ ५६५ ॥
ऋतुर्मातुः पितुर्बीजं दैवतं परमं पतिः ।
भर्तुः प्रसादान्नारीणां रतिपुत्रफलं तथा ॥ ५६६ ॥
पालनाद्धि पतिस्त्वं मे भर्तासि भरणाच्च मे ।
पुत्रप्रदानाद्वरदस्तस्मात्सक्तून् प्रयच्छ मे ॥ ५६७ ॥
जरापरिगतो वृद्धः क्षुधार्तो दुर्बलो भृशम् ।
उपवासपरिश्रान्तो यदा त्वमपि कर्शितः ॥ ५६८ ॥
इत्युक्तः स तया सक्तून्प्रगृह्येदं वचोऽब्रवीत् ।
द्विज सक्तूनिमान् भूयः प्रतिगृह्णीष्व सत्तम ॥ ५६९ ॥
स तान्प्रगृह्य भुक्त्वा च न तुष्टिमगमद्द्विजः ।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥ ५७० ॥
सक्तूनिमान्प्रगृह्य त्वं देहि विप्राय सत्तमः ।
इत्येव सुकृतं मन्ये तस्मादेतत्करोम्यहम् ॥ ५७१ ॥

भवान्हि परिपाल्यो मे सर्वदैव प्रयत्नतः ।
साधूना काङ्क्षितं यस्मात्पितुर्वृद्धस्य पालनम् ॥ ५७२ ॥

पुत्रार्थो विहितो ह्येष वार्धके परिपालनम् ।
श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु शाश्वती ॥ ५७३ ॥

प्राणधारणमात्रेण शक्यं कर्तुं तपस्त्वया ।
प्राणो हि परमो धर्मः स्थितो देहेषु देहिनाम् ॥ ५७४ ॥

पिता०— अपि वर्षसहस्री त्वं बाल एव मतो मम ।
उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवेत्सुतात् ॥ ५७५ ॥

बालानां क्षुद्बलवती जानाम्येतदहं प्रभो ।
वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥ ५७६ ॥

जीर्णेन वयसा पुत्र न मां क्षुद्बाधतेऽपि च ।
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥ ५७७ ॥

पुत्र०— अपत्यमस्मि ते पुंसस्त्राणात्पुत्र इति स्मृतः ।
आत्मा पुत्रः स्मृतस्तस्मात्त्राह्यात्मानमिहात्मना ॥ ५७८ ॥

पिता०— रूपेण सदृशस्त्वं मे शीलेन च दमेन च ।
परीक्षितश्च बहुधा सक्तूनादद्मि ते सुत ॥ ५७९ ॥

इत्युक्त्वाऽऽदाय तान्सक्तून् प्रीतात्मा द्विजसत्तमः ।
प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ ५८० ॥

भुक्त्वा तानपि सक्तून्स नैव तुष्टो बभूव ह ।
उञ्छवृत्तिस्तु धर्मात्मा व्रीडामनुजगाम ह ॥ ५८१ ॥

तं वै वधूः स्थिता साध्वी ब्राह्मणप्रियकाम्यया ।
सक्तूनादाय संहृष्टा श्वशुरं वाक्यमब्रवीत् ॥ ५८२ ॥

सन्तानात्तव सन्तानं मम विप्र भविष्यति ।
सक्तूनिमानतिथये गृहीत्वा संप्रयच्छ मे ॥ ५८३ ॥

तव प्रसादान्निर्वृत्ता मम लोकाः किलाक्षयाः ।
पुत्रेण तानवाप्नोति यत्र गत्वा न शोचति ॥ ५८४ ॥

धर्माद्या हि यथा त्रेता वह्नित्रेता तथैव च।
तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः॥ ५८५॥

पितॄन् ऋणात्तारयति पुत्र इत्यनुशुश्रुम।
पुत्रपौत्रैश्च नियतं साधुलोकानुपाश्नुते॥ ५८६॥

श्वशुर०-वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै।
कर्षितां सुव्रताचारे क्षुधाविह्वलचेतसम्।
कथं सक्तून् ग्रहीष्यामि भूत्वा धर्मोपघातकः॥ ५८७॥
कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि॥ ५८८॥

षष्ठे काले व्रतवती शौचशीलतपोऽन्विताम्।
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वा कथं शुभे॥ ५८९॥
बाला क्षुधार्ता नारी च रक्ष्या त्वं सततं मया।
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी॥ ५९०॥

स्नुषा०- गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतम्।
देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो॥ ५९१॥

देहः प्राणश्च धर्मश्च शुश्रूषार्थमिदं गुरोः।
तव विप्र प्रसादेन लोकान्प्राप्स्यामहे शुभान्॥ ५९२॥

अवेक्ष्या इति कृत्वाहं दृढभक्तेति वा द्विज।
चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि॥ ५९३॥

श्वशुर०-अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे।
या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे॥ ५९४॥

तस्मात्सक्तून् ग्रहीष्यामि वधु नार्हसि वञ्चनाम्।
गणयित्वा महाभागे त्वां हि धर्मभृतां वरे॥ ५९५॥

इत्युक्त्वा तानुपादाय सक्तून्प्रादाद्द्विजातये।
ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः॥ ५९६॥

प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम्।
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः॥ ५९७॥

शुद्धेन तव दानेन न्यायोपात्तेन धर्मतः।
यथाशक्ति विसृष्टेन प्रीतोऽस्मि द्विजसत्तम ॥ ५९८ ॥

अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः।
गगनात्पुष्पवर्षं च पश्येदं पतितं भुवि ॥ ५९९ ॥

क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति।
क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह ॥ ६०० ॥

बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम्।
यदा दानरुचिः स्याद्वै तदा धर्मो न सीदति ॥ ६०१ ॥

अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च।
धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ॥ ६०२ ॥

द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम्।
कालः परतरो दानात् श्रद्धा चैव ततः परा ॥ ६०३ ॥

स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते ॥ ६०४ ॥

सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च।
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ॥ ६०५ ॥

सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाऽक्षयः।
विरजो ब्रह्मसदनं गच्छ विप्र यथासुखम् ॥ ६०६ ॥

सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम्।
आरोहत यथाकामं धर्मोऽस्मि द्विज पश्य माम् ॥ ६०७ ॥

तारितो हि त्वया देहो लोके कीर्तिः स्थिरा च ते।
सभार्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज ॥ ६०८ ॥

इत्युक्तवाक्ये धर्मे तु यानमारुह्य स द्विजः।
सदारःससुतश्चैव सस्नुषश्च दिवं गतः ॥ ६०९ ॥

तस्मिन्विप्रे गते स्वर्गं ससुते सस्नुषे तदा।
भार्याचतुर्थे धर्मज्ञे ततोऽहं निःसृतो बिलात् ॥ ६१० ॥

ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च।
दिव्यपुष्पविमर्दाच्च साधोर्दानलवैश्च तैः।
विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम् ॥ ६११ ॥

तस्य सत्याभिसन्धस्य सक्तुदानेन चैव ह।
शरीरार्धं च मे विप्राः शातकुम्भमयं कृतम् ॥ ६१२ ॥

पश्यतेमं सुविपुलं तपसा तस्य धीमतः ॥ ६१३ ॥

कथमेवंविधं स्याद्वै पार्श्वमन्यदिति द्विजा ।
तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनः पुनः ॥ ६१४ ॥

यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः।
आशया परया प्राप्तो न चाहं काञ्चनीकृत ॥ ६१५ ॥

ततो मयोक्तं तद्वाक्यं प्रहस्य ब्राह्मणर्षभाः।
सक्तुप्रस्थेन यज्ञोऽयं सम्मितो नेति सर्वथा ॥ ६१६ ॥

सक्तुप्रस्थलवैस्तैर्हि तदाहं काञ्चनीकृत ।
न हि यज्ञो महानेष सदृशस्तैर्मतो मम ॥ ६१७ ॥

इत्युक्त्वा नकुलः सर्वान्यज्ञे द्विजवरास्तदा।
जगामादर्शनं तेषां विप्रास्ते च ययुर्गृहान् ॥ ६१८ ॥

## हिंसामिश्रधर्मनिन्दा

(अ. ९१) यज्ञैरिष्ट्वा तु बहवो राजानो द्विजसत्तमाः।
जनमे०— इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्नुयुः ॥ ६१९ ॥

अथ कस्मात्स नकुलो गर्हयामास तं क्रतुम्।
अश्वमेधं महायज्ञं राज्ञस्तस्य महात्मनः ॥ ६२० ॥

वैश०— यज्ञस्य विधिमग्र्यं वै फलं चापि नराधिप।
गदतः श्रृणु मे राजन्यथावदिह भारत ॥ ६२१ ॥

पुरा शक्रस्य यजतः सर्व ऊचुर्महर्षयः।
ऋत्विक्षु कर्मव्यग्रेषु वितते यज्ञकर्मणि ॥ ६२२ ॥

आलंभसमये तस्मिन् गृहीतेषु पशुष्वथ।
महर्षयो महाराज बभूवुः कृपयान्विताः ॥ ६२३ ॥

ततो दीनान् पशून्दृष्ट्वा ऋषयस्ते तपोधनाः।
ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः ॥ ६२४ ॥

अपरिज्ञानमेतत्ते महान्तं धर्ममिच्छतः।
न हि यज्ञे पशुगणा विधिदृष्टाः पुरन्दर ॥ ६२५ ॥

धर्मोपघातकस्त्वेष समारंभस्तव प्रभो।
नायं धर्मकृतो यज्ञो न हिंसा धर्म उच्यते ॥ ६२६ ॥

विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान् भवेत्।
यज बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः।
एष धर्मो महान् शक्र महागुणफलोदयः ॥ ६२७ ॥

शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः।
उक्तं न प्रतिजग्राह मानान्मोहवशं गतः ॥ ६२८ ॥

तेषां विवादः सुमहान् शक्रयज्ञे तपस्विनाम्।
जङ्गमैः स्थावरैर्वाऽपि यष्टव्यमिति भारत ॥ ६२९ ॥

ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः।
तदा सन्धाय शक्रेण पप्रच्छुर्नृपतिं वसुम् ॥ ६३० ॥

धर्मसंशयमापन्नान् सत्यं ब्रूहि महामते ॥ ६३१ ॥

महाभाग कथं यज्ञेष्वागमो नृपसत्तम।
यष्टव्यं पशुभिर्मुख्यैरथो बीजै रसैरिति ॥ ६३२ ॥

तच्छ्रुत्वा तु वसुस्तेषामविचार्य बलाबलम्।
यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः ॥ ६३३ ॥

एवमुक्त्वा स नृपतिः प्रविवेश रसातलम्।
उक्त्वाऽथ वितथं प्रश्नं चेदीनामीश्वरः प्रभुः ॥ ६३४ ॥

तस्मान्न वाच्यं ह्येकेन बहुज्ञेनापि संशये।
प्रजापतिमपाहाय स्वयंभुक्मृते प्रभुम् ॥ ६३५ ॥

उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः।
दानं विभवतो दत्वा नरा स्वर्यान्ति धार्मिकाः ॥ ६३६ ॥

एष धर्मो महायोगो दानं भूतदया तथा ।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृति क्षमा ॥ ६३७ ॥

सनातनस्य धर्मस्य मूलमेतत्सनातनम् ॥ ६३८ ॥

ब्राह्मणा क्षत्रिया वैश्या· शूद्रा ये चाश्रितास्तपः।
दानधर्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ॥ ६३९ ॥

(अ. ९२) कथं हि सर्वयज्ञेषु निश्चय परमोऽभवत्।
जनमे०– एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ॥ ६४० ॥

वैश०– अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
अगस्त्यस्य महायज्ञे पुरा वृत्तमरिन्दम ॥ ६४१ ॥

पुराऽगस्त्यो महातेजा दीक्षां द्वादशवार्षिकीम्।
प्रविवेश महाराज सर्वभूतहिते रतः ॥ ६४२ ॥

तत्राग्निकल्पा होतार आसन्सत्रे महात्मनः।
मूलाहाराः फलाहारा साश्मकुट्टा मरीचिपा· ॥ ६४३ ॥

परिपृष्टिका वैघसिकाः प्रसङ्ख्यानास्तथैव च।
यतयो भिक्षवश्चात्र बभूवुः पर्यवस्थिताः ॥ ६४४ ॥

एवंविधे त्वगस्त्यस्य वर्तमाने तथाऽध्वरे।
न ववर्ष सहस्राक्षस्तदा भरतसत्तम ॥ ६४५ ॥

ततः कर्मान्तरे राजन्नगस्त्यस्य महात्मनः।
कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनाम् ॥ ६४६ ॥

अगस्त्यो यजमानोऽसौ ददात्यन्नं विमत्सरः।
न च वर्षति पर्जन्य· कथमन्नं भविष्यति ॥ ६४७ ॥

इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान् ।
प्रोवाच वाक्यं स तदा प्रसाद्य शिरसा मुनीन् ॥ ६४८ ॥

यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
चिन्तायज्ञं करिष्यामि विधिरेष सनातनः ॥ ६४९ ॥

यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
स्पर्शयज्ञं करिष्यामि विधिरेष सनातनः ॥ ६५० ॥

यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
ध्येयात्मना हरिष्यामि यज्ञानेतान्यतव्रतः ॥ ६५१ ॥

अथवाभ्यर्थनामिन्द्रो न करिष्यति कामतः ।
स्वयमिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः ॥ ६५२ ॥

अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु किञ्चन ।
त्रिषु लोकेषु यच्चास्ति तदिहागम्यतां स्वयम् ॥ ६५३ ॥

उत्तरेभ्यः कुरुभ्यश्च यत्किञ्चिद्वसु विद्यते ।
सर्वं तदिह यज्ञेषु स्वयमेवोपतिष्ठतु ॥ ६५४ ॥

स्वर्गः स्वर्गसदश्चैव धर्मश्च स्वयमेव तु ।
इत्युक्ते सर्वमेवैतदभवत्तपसा मुनेः ॥ ६५५ ॥

तथा कथयतां तेषां देवराजः पुरन्दरः ।
ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलम् ॥ ६५६ ॥

आसमाप्तेश्च यज्ञस्य तस्यामितपराक्रमः ।
निकामवर्षी पर्जन्यो बभूव जनमेजय ॥ ६५७ ॥

प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः ।
स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिम् ॥ ६५८ ॥

ततो यज्ञसमाप्तौ तान्विससर्ज महामुनीन् ।
अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ॥ ६५९ ॥

## नकुलशापकथा

जनमे०- कोऽसौ नकुलरूपेण शिरसा काञ्चनेन वै।
प्राह मानुषवद्वाचमेतत्पृष्टो वदस्व मे ॥ ६६० ॥

वैश०- एतत्पूर्वं न पृष्टोऽहं न चास्माभिः प्रभाषितम्।
श्रूयतां नकुलो योऽसौ यथा वाक् तस्य मानुषी ॥ ६६१ ॥

श्राद्धं सङ्कल्पयामास जमदग्निः पुरा किल।
होमधेनुस्तमागाच्च स्वयमेव दुदोह ताम् ॥ ६६२ ॥

तत्पयः स्थापयामास नवे भाण्डे दृढे शुचौ।
तच्च क्रोधस्वरूपेण पिठरं धर्म आविशत् ॥ ६६३ ॥

जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्याद्विप्रिये कृते।
इति सञ्चिन्त्य धर्मः स धर्षयामास तत्पयः ॥ ६६४ ॥

तमाज्ञाय मुनिः क्रोधं नैवास्य स चुकोप ह ॥ ६६५ ॥

स तु क्रोधस्ततो राजन् ब्राह्मणीं मूर्तिमास्थितः।
जिते तस्मिन् भृगुश्रेष्ठमभ्यभाषदमर्षणः ॥ ६६६ ॥

जितोऽस्मीति भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः।
लोके मिथ्या प्रवादोऽयं यत्त्वयास्मि विनिर्जितः ॥ ६६७ ॥

वशे स्थितोऽहं त्वय्यद्य क्षमावति महात्मनि।
बिभेमि तपसः साधो प्रसादं कुरु मे प्रभो ॥ ६६८ ॥

जमद०- साक्षाद्दृष्टोऽसि मे क्रोध गच्छ त्वं विगतज्वरः।
न त्वयापकृतं मेऽद्य न च मे मन्युरस्ति वै ॥ ६६९ ॥

यान्समुद्दिश्य सङ्कल्पः पयसोऽस्य कृतो मया।
पितरस्ते महाभागास्तेभ्यो बुद्ध्यस्व गम्यताम् ॥ ६७० ॥

इत्युक्तो जातसन्त्रासस्तत्रैवान्तरधीयत।
पितॄणामभिषङ्गाच्च नकुलत्वमुपागतः ॥ ६७१ ॥

स तान्प्रसादयामास शापस्यान्तो भवेदिति ।
तैश्चाप्युक्तः क्षिपन्धर्मं शापस्यान्तमवाप्स्यसि ॥ ६७२ ॥

तैश्चोक्तो यज्ञियान्देशान्धर्मारण्यं तथैव च ।
जुगुप्समानो धावन् स तं यज्ञं समुपासदत् ॥ ६७३ ॥

धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः ।
मुक्तः शापात्ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिरः ॥ ६७४ ॥

एवमेतत्तदा वृत्ते यज्ञे तस्य महात्मनः ।
पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा ॥ ६७५ ॥

शान्तिपर्वतः श्लोकाः ॥ ४२५४ ॥

आदिपर्वतः श्लोकाः ॥ १५०५० ॥

॥ इति श्रीमहाभारतसारे आश्वमेधिकपर्व समाप्तम् ॥

---

# महाभारतसारः

## १५. आश्रमवासिकपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### युधिष्ठिरस्य धृतराष्ट्रे वर्तनम्

(अ. १) प्राप्य राज्यं महात्मानः पाण्डवा मे पितामहाः।
जनमे०— कथमासन्महाराज्ञि धृतराष्ट्रे महात्मनि॥ १॥
कियन्तं चैव कालं ते मम पूर्वपितामहाः।
स्थिता राज्ये महात्मानस्तन्मे व्याख्यातुमर्हसि॥ २॥

वैश०— प्राप्य राज्यं महात्मानः पाण्डवा हतशत्रवः।
धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्यपालयन्॥ ३॥
पाण्डवाः सर्वकार्याणि संपृच्छन्ति स्म तं नृपम्।
चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च च॥ ४॥
विहारयात्रासु पुनः कुरुराजो युधिष्ठिरः।
सर्वान्कामान्महातेजाः प्रददावम्बिकासुते॥ ५॥
आरालिकाः सूपकारा रागखाण्डविकास्तथा।
उपातिष्ठन्त राजानं धृतराष्ट्रं यथा पुरा॥ ६॥
वासांसि च महार्हाणि माल्यानि विविधानि च।
उपाजह्रुर्यथान्यायं धृतराष्ट्रस्य पाण्डवाः॥ ७॥
मैरेयमत्स्यमांसानि पानकानि मधूनि च।
चित्रान्भक्ष्यविकारांश्च चक्रुस्तस्य यथा पुरा॥ ८॥
यथा पुत्रवियुक्तोऽयं न किञ्चिद्दुःखमाप्नुयात्।
इति तानन्वशाद्भ्रातॄन्नित्यमेव युधिष्ठिरः॥ ९॥
एवं ते धर्मराजस्य श्रुत्वा वचनमर्थवत्।
सविशेषमवर्तन्त भीममेकं तदा विना॥ १०॥

न हि तत्तस्य वीरस्य हृदयादपसर्पति।
धृतराष्ट्रस्य दुर्बुद्धया यद्वृत्तं द्यूतकारितम्॥ ११॥
(अ. २) एवं संपूजितो राजा पाण्डवैरम्बिकासुतः।
विजहार यथापूर्वमृषिभिः पर्युपासित.॥ १२॥
ब्रह्मदेयाग्रहारांश्च प्रददौ स कुरूद्वहः।
तच्च कुन्तीसुतो राजा सर्वमेवान्वपद्यत॥ १३॥
आनृशंस्यपरो राजा प्रीयमाणो युधिष्ठिरः।
उवाच स तदा भ्रातॄनमात्यांश्च महीपति.॥ १४॥
निदेशे धृतराष्ट्रस्य यस्तिष्ठति स मे सुहृत्।
विपरीतश्च मे शत्रुर्नियम्यश्च भवेन्नर'॥ १५॥
स राजा सुमहातेजा वृद्ध. कुरुकुलोद्वह.।
न ददर्श तदा किञ्चिदप्रियं पाण्डुनन्दने॥ १६॥
यद्यद्ब्रूते च किञ्चित्स धृतराष्ट्रो जनाधिपः।
गुरु वा लघु वा कार्यं गान्धारी च तपस्विनी॥ १७॥
तं स राजा महाराज पाण्डवानां धुरन्धर.।
पूजयित्वा वचस्तत्तदकार्षीत्परवीरहा॥ १८॥
तेन तस्याभवत्प्रीतो वृत्तेन स नराधिपः।
अन्वतप्यत संस्मृत्य पुत्रं त मन्दचेतसम्॥ १९॥
सदा च प्रातरुत्थाय कृतजप्यः शुचिर्नृप.।
आशास्ते पाण्डुपुत्राणा समरेष्वपराजयम्॥ २०॥
ब्राह्मणान्स्वस्ति वाच्याथ हुत्वा चैव हुताशनम्।
आयूंषि पाण्डुपुत्राणामाशंसत नराधिपः॥ २१॥
न तां प्रीतिं परामाप पुत्रेभ्यः स कुरूद्वहः।
यां प्रीतिं पाण्डुपुत्रेभ्य. सदाऽवाप नराधिपः॥ २२॥
अन्ववर्तत भीमोऽपि निश्चितो धर्मजं नृपम्।
धृतराष्ट्रं च संप्रेक्ष्य सदा भवति दुर्मनाः॥ २३॥

## भीमभाषणेन धृतराष्ट्रस्य निर्वेदः सुहृज्जनप्रार्थना च

(अ. ३) यदा तु कौरवो राजा पुत्र सस्मार दुर्मतिम्।
तदा भीमं हृदा राजन्नपध्याति स पार्थिव.॥ २४॥

तथैव भीमसेनोऽपि धृतराष्ट्रं जनाधिपम्।
नामर्षयत राजेन्द्र सदैव दुष्टवद्धृदा॥ २५॥

अप्रकाशान्यप्रियाणि चकारास्य वृकोदरः।
आज्ञां प्रत्यहरच्चापि कृतज्ञैः पुरुषै. सदा॥ २६॥

स्मरन्दुर्मन्त्रित तस्य वृत्तान्यप्यस्य कानिचित्।
अथ भीमः सुहृन्मध्ये बाहुशब्दं तथाऽकरोत्॥ २७॥

संश्रवे धृतराष्ट्रस्य गान्धार्याश्चाप्यमर्षण.।
स्मृत्वा दुर्योधन शत्रु कर्णदु शासनावपि।
प्रोवाचेदं सुसंरब्धो भीमः स परुषं वच.॥ २८॥

अन्धस्य नृपतेः पुत्रा मया परिघबाहुना।
नीता लोकममुं सर्वे नानाशस्त्रास्त्रयोधिनः॥ २९॥

इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ।
ययोरन्तरमासाद्य धार्तराष्ट्राः क्षयं गताः॥ ३०॥

एताश्चान्याश्च विविधा. शल्यभूता नराधिपः।
वृकोदरस्य ता वाच. श्रुत्वा निर्वेदमागमत्॥ ३१॥

सा च बुद्धिमती देवी कालपर्यायवेदिनी।
गान्धारी सर्वधर्मज्ञा तान्यलीकानि शुश्रुवे॥ ३२॥

तत. पञ्चदशे वर्षे समतीते नराधिप.।
राजा निर्वेदमापेदे भीमवाग्बाणपीडितः॥ ३३॥

नान्वबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः॥ ३४॥

ततः समानयामास धृतराष्ट्र सुहृज्जनम्।
बाष्पसन्दिग्धमत्यर्थमिदमाह च तान्भृशम्॥ ३५॥

धृत०- विदितं भवतामेतद्यथा वृत्तः कुरुक्षयः।
ममापराधात्तत्सर्वमनुज्ञातं च कौरवैः॥ ३६॥
योऽहं दुष्टमतिं मन्दो ज्ञातीनां भयवर्धनम्।
दुर्योधनं कौरवाणामाधिपत्येऽभ्यषेचयम्॥ ३७॥
यच्चाहं वासुदेवस्य नाश्रौषं वाक्यमर्थवत्।
वध्यतां साध्वयं पापः सामात्य इति दुर्मतिः॥ ३८॥
पुत्रस्नेहाभिभूतस्तु हितमुक्तो मनीषिभिः।
विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च॥ ३९॥
पदे पदे भगवता व्यासेन च महात्मना।
सञ्जयेनाथ गान्धार्या तदिदं तप्यते च माम्॥ ४०॥
यच्चाहं पाण्डुपुत्रेषु गुणवत्सु महात्मसु।
न दत्तवान् श्रियं दीप्तां पितृपैतामहीमिमाम्॥ ४१॥
सोऽहमेतान्यलीकानि निवृत्तान्यात्मनस्तदा।
हृदये शल्यभूतानि धारयामि सहस्रशः॥ ४२॥
विशेषतस्तु पश्यामि वर्षे पञ्चदशेऽद्य वै।
अस्य पापस्य शुद्ध्यर्थं नियतोऽस्मि सुदुर्मतिः॥ ४३॥
चतुर्थे नियते काले कदाचिदपि चाष्टमे।
तृष्णाविनयनं भुञ्जे गान्धारी वेद तन्मम॥ ४४॥
करोत्याहारमिति मा सर्वः परिजनः सदा।
युधिष्ठिरभयादेति भृशं तप्यति पाण्डवः॥ ४५॥
भूमौ शये जप्यपरो दर्भेष्वजिनसंवृतः।
नियमव्यपदेशेन गान्धारी च यशस्विनी॥ ४६॥
इत्युक्त्वा धर्मराजानमभ्यभाषत कौरवः।
भद्रं ते यादवीमातर्वचश्चेद निबोध मे॥ ४७॥
सुखमस्म्युषितः पुत्र त्वया सुपरिपालितः।
महादानानि दत्तानि श्राद्धानि च पुनः पुनः॥ ४८॥

प्रकृष्टं च यया पुत्र पुण्यं चीर्णं यथाबलम्।
गान्धारी हतपुत्रेयं धैर्येणोदीक्षते च माम्॥ ४९॥
द्रौपद्या ह्यपकर्तारस्तव चैश्वर्यहारिणः।
समतीता नृशंसास्ते स्वधर्मेण हता युधि॥ ५०॥
न तेषु प्रतिकर्तव्यं पश्यामि कुरुनन्दन।
सर्वे शस्त्रभृतां लोकान् गतास्तेऽभिमुखं हताः॥ ५१॥
आत्मनस्तु हितं पुण्यं प्रतिकर्तव्यमद्य वै।
गान्धार्याश्चैव राजेन्द्र तदनुज्ञातुमर्हसि॥ ५२॥
त्वं तु शस्त्रभृतां श्रेष्ठः सततं धर्मवत्सलः।
राजा गुरुः प्राणभृतां तस्मादेतद्ब्रवीम्यहम्॥ ५३॥
अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहम्।
चीरवल्कलभृद्राजन् गान्धार्या सहितोऽनया।
तवाशिषः प्रयुञ्जानो भविष्यामि वनेचरः॥ ५४॥
तत्राहं वायुभक्षो वा निराहारोऽपि वा वसन्।
पत्न्या सहानया वीर चरिष्यामि तपः परम्॥ ५५॥
त्वं चापि फलभाक्तात तपसः पार्थिवो ह्यसि।
फलभाजो हि राजानः कल्याणस्येतरस्य वा॥ ५६॥
युधि०— न मां प्रीणयते राज्यं त्वय्येवं दुःखिते नृप।
धिङ्मामस्तु सुदुर्बुद्धिं राज्यसक्तं प्रमादिनम्॥ ५७॥
योऽहं भवन्तं दुःखार्तमुपवासकृशं भृशम्।
जिताहारं क्षितिशयं न विन्दे भ्रातृभिः सह॥ ५८॥
अहोऽस्मि वञ्चितो मूढो भवता गूढबुद्धिना।
विश्वासयित्वा पूर्वं मा यदिदं दुःखमश्नुथाः॥ ५९॥
भवान्पिता भवान्माता भवान्नः परमो गुरुः।
भवता विप्रहीणा वै क्व नु तिष्ठामहे वयम्॥ ६०॥
औरसो भवतः पुत्रो युयुत्सुर्नृपसत्तम।
अस्तु राजा महाराज यमन्यं मन्यते भवान्॥ ६१॥

अहं वने गमिष्यामि भवान् राज्यं प्रशासतु ।
न मामयशसा दग्धं भूयस्त्वं दग्धुमर्हसि ॥ ६२ ॥

नाहं राजा भवान् राजा भवतः परवानहम् ।
कथं गुरुं त्वां धर्मज्ञमनुज्ञातुमिहोत्सहे ॥ ६३ ॥

न मन्युर्हृदि न॰ कश्चित्सुयोधनकृतेऽनघ ।
भवितव्य तथा तद्धि वयं चान्ये च मोहिताः ॥ ६४ ॥

वयं पुत्रा हि भवतो यथा दुर्योधनादयः ।
गान्धारी चैव कुन्ती च निर्विशेषे मते मम ॥ ६५ ॥

स मां त्वं यदि राजेन्द्र परित्यज्य गमिष्यसि ।
पृष्ठतस्त्वनुयास्यामि सत्यमात्मानमालभे ॥ ६६ ॥

भवदीयमिदं सर्वं शिरसा त्वां प्रसादये ।
त्वदधीना॰ स्म राजेन्द्र व्येतु ते मानसो ज्वरः ॥ ६७ ॥

धृत०- तापस्ये मे मनस्तात वर्तते कुरुनन्दन ।
उचितं च कुलेऽस्माकमरण्यगमनं प्रभो ॥ ६८ ॥

चिरमस्म्युषितः पुत्र चिरं शुश्रूषितस्त्वया ।
वृद्धं मामप्यनुज्ञातुमर्हसि त्व नराधिप ॥ ६९ ॥

इति ब्रुवति राजेन्द्रे धृतराष्ट्रे युधिष्ठिरम् ।
ऋषि॰ सत्यवतीपुत्रो व्यासोऽभ्येत्य वचोऽब्रवीत् ॥ ७० ॥

( अ ४ ) युधिष्ठिर महाबाहो यथाह कुरुनन्दनः ।
व्यास०- धृतराष्ट्रो महातेजास्तत्कुरुष्वाविचारयन् ॥ ७१ ॥

अयं हि वृद्धो नृपतिर्हतपुत्रो विशेषत॰ ।
नेदं कृच्छ्रं चिरतरं सहेदिति मतिर्मम ॥ ७२ ॥

सोऽयं मयाऽभ्यनुज्ञातस्त्वया च पृथिवीपतिः ।
करोतु स्वमभिप्रायं माऽस्य विघ्नकरो भव ॥ ७३ ॥

एष एव परो धर्मो राजर्षीणा युधिष्ठिर ।
समरे वा भवेन्मृत्युर्वने वा विधिपूर्वकम् ॥ ७४ ॥

पित्रा तु तव राजेन्द्र पाण्डुना पृथिवीक्षिता।
शिष्यवृत्तेन राजायं गुरुवत्पर्युपासित ॥ ७५ ॥

त्वया चायं नरव्याघ्र गुरुशुश्रूषयाऽनघ।
आराधितः सभृत्येन गान्धारी च यशस्विनी ॥ ७६ ॥

अनुजानीहि पितरं समयोऽस्य तपोविधौ।
न मन्युर्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर ॥ ७७ ॥

एतावदुक्त्वा वचनमनुमान्य च पार्थिवम्।
तथाऽस्त्विति च तेनोक्तः कौन्तेयेन ययौ वनम् ॥ ७८ ॥

गते भगवति व्यासे राजा पाण्डुसुतस्तदा।
प्रोवाच पितरं वृद्धं मन्दं मन्दमिवानतः ॥ ७९ ॥

यदाह भगवान् व्यासो तत्कर्तास्म्यहमञ्जसा ॥ ८० ॥

इदं तु याचे नृपते त्वामहं शिरसा नतः।
क्रियतां तावदाहारस्ततो गच्छाश्रमं प्रति ॥ ८१ ॥

## धृतराष्ट्रस्य युधिष्ठिरायोपदेशः

(अ. ५) ततो राज्ञाऽभ्यनुज्ञातो धृतराष्ट्रः प्रतापवान्।
ययौ स्वभवनं राजा गान्धार्याऽनुगतस्तदा ॥ ८२ ॥

स प्रविश्य गृहं राजन् कृतपूर्वाह्णिकक्रियः।
तर्पयित्वा द्विजश्रेष्ठानाहारमकरोत्तदा ॥ ८३ ॥

कृताहारं कृताहाराः सर्वे ते विदुरादयः।
पाण्डवाश्च कुरुश्रेष्ठमुपातिष्ठन्त तं नृपम् ॥ ८४ ॥

ततोऽब्रवीन्महाराज कुन्तीपुत्रमुपह्वरे।
निषण्णं पाणिना पृष्ठे संस्पृशन्नम्बिकासुतः ॥ ८५ ॥

अप्रमादस्त्वया कार्यः सर्वथा कुरुनन्दन।
अष्टाङ्गे राजशार्दूल राज्ये धर्मपुरस्कृते ॥ ८६ ॥

विद्यावृद्धान् सदैव त्वमुपासीथा युधिष्ठिर।
शृणुयास्ते च यद्ब्रूयुः कुर्याश्चैवाविचारयन् ॥ ८७ ॥
इन्द्रियाणि च सर्वाणि वाजिवत्परिपालय।
हितायैव भविष्यन्ति रक्षितं द्रविणं यथा ॥ ८८ ॥
मन्त्रिणश्चैव कुर्वीथा द्विजान्विद्याविशारदान्।
विनीतांश्च कुलीनांश्च धर्मार्थकुशलानृजून् ॥ ८९ ॥
तैः सार्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिः सह।
समस्तैरपि च व्यस्तैर्व्यपदेशेन केनचित् ॥ ९० ॥
सुसंवृतं मन्त्रगृहं स्थलं चारुह्य मन्त्रयेः।
अरण्ये निःशलाके वा न च रात्रौ कथञ्चन ॥ ९१ ॥
वानराः पक्षिणश्चैव ये मनुष्यानुसारिणः।
सर्वे मन्त्रगृहे वर्ज्या ये चापि जडपङ्गवः ॥ ९२ ॥
मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीक्षिताम्।
न ते शक्याः समाधातुं कथञ्चिदिति मे मतिः ॥ ९३ ॥
कोशस्य निचये यत्नं कुर्वीथा न्यायतः सदा ॥ ९४ ॥
चारैर्विदित्वा शत्रूंश्च ये राज्ञामन्तरैषिणः।
तानाप्तैः पुरुषैर्दूराद्घातयेथा नराधिप ॥ ९५ ॥
स्वरन्ध्रं पररन्ध्रं च स्वेषु चैव परेषु च।
उपलक्षयितव्यं ते नित्यमेव युधिष्ठिर ॥ ९६ ॥
(अ. ७) एवं त्वया कुरुश्रेष्ठ वर्तितव्यं प्रजाहितम्।
उभयोर्लोकयोस्तात प्राप्तये नित्यमेव हि ॥ ९७ ॥
भीष्मेण सर्वमुक्तोऽसि कृष्णेन विदुरेण च।
मयाऽप्यवश्यं वक्तव्यं प्रीत्या ते नृपसत्तम ॥ ९८ ॥
एतत्सर्वं यथान्यायं कुर्वीथा भूरिदक्षिण।
प्रियस्तथा प्रजानां त्वं स्वर्गे सुखमवाप्स्यसि ॥ ९९ ॥
अश्वमेधसहस्रेण यो यजेत्पृथिवीपतिः।
पालयेद्वापि धर्मेण प्रजास्तुल्यं फलं लभेत् ॥ १०० ॥

(अ ८) एवमेतत्करिष्यामि यथाऽऽत्थ पृथिवीपते ।
युधि०— भूयश्चैवानुशास्योऽहं भवता पार्थिवर्षभ ॥ १०१ ॥
एवमुक्तः स राजर्षिर्धर्मराजेन धीमता ।
कौन्तेयं समनुज्ञातुमियेष भरतर्षभ ॥ १०२ ॥
पुत्र संशाम्यतां तावन्ममापि बलवान् श्रम· ।
इत्युक्त्वा प्राविशद्राजा गान्धार्या भवनं तदा ॥ १०३ ॥
तमासनगतं देवी गान्धारी धर्मचारिणी ।
उवाच काले कालज्ञा प्रजापतिसमं पतिम् ॥ १०४ ॥
अनुज्ञातः स्वयं तेन व्यासेन त्वं महर्षिणा ।
युधिष्ठिरस्यानुमते कदाऽरण्यं गमिष्यसि ॥ १०५ ॥
धृत०— गान्धार्यहमनुज्ञातः स्वयं पित्रा महात्मना ।
युधिष्ठिरस्यानुमते गन्ताऽस्मि न चिराद्वनम् ॥ १०६ ॥
अहं हि तावत्सर्वेषां तेषा दुर्द्यूतदेविनाम् ।
पुत्राणां दातुमिच्छामि प्रेतभावानुगं वसु ।
सर्वप्रकृतिसान्निध्यं कारयित्वा स्ववेश्मनि ॥ १०७ ॥
इत्युक्त्वा धर्मराजाय प्रेषयामास वै तदा ।
स च तद्वचनात्सर्वं समानिन्ये महीपति· ॥ १०८ ॥

## धृतराष्ट्रकृतं पौरजानपदसान्त्वनम्

ततः प्रतीतमनसो ब्राह्मणाः कुरुजाङ्गलाः ।
क्षत्रियाश्चैव वैश्याश्च शूद्राश्चैव समाययुः ॥ १०९ ॥
ततो निष्क्रम्य नृपतिस्तस्मादन्तःपुरात्तदा ।
ददृशे तं जनं सर्वं सर्वाश्च प्रकृतीस्तथा ॥ ११० ॥
तानागतानभिप्रेक्ष्य समस्तं च सुहृज्जनम् ।
उवाच मतिमान् राजा धृतराष्ट्रोऽम्बिकासुत· ॥ १११ ॥
भवन्तः कुरवश्चैव चिरकालं सहोषिता· ।
परस्परस्य सुहृदः परस्परहिते रताः ॥ ११२ ॥

यदिदानीमहं ब्रूयामस्मिन्काल उपस्थिते ।
तथा भवद्भिः कर्तव्यमविचार्य वचो मम ॥ ११३ ॥

अरण्यगमने बुद्धिर्गान्धारीसहितस्य मे ।
व्यासस्यानुमते राज्ञस्तथा कुन्तीसुतस्य मे ।
भवन्तोऽप्यनुजानन्तु मा च वोऽभूद्विचारणा ॥ ११४ ॥

अस्माकं भवतां चैव येयं प्रीतिर्हि शाश्वती ।
न च साऽन्येषु देशेषु राज्ञामिति मतिर्मम ॥ ११५ ॥

युधिष्ठिरगते राज्ये प्राप्तश्चास्मि सुखं महत् ।
मन्ये दुर्योधनैश्वर्याद्विशिष्टमिति सत्तमाः ॥ ११६ ॥

मम चान्धस्य वृद्धस्य हतपुत्रस्य का गतिः ।
ऋते वनं महाभागास्तन्माऽनुज्ञातुमर्हथ ॥ ११७ ॥

(अ. ९) शान्तनुः पालयामास यथावद्वसुधामिमाम् ।
तथा विचित्रवीर्यश्च भीष्मेण परिपालितः ।
पालयामास नस्तातो विदितार्थो न संशयः ॥ ११८ ॥

यथा च पाण्डुर्भ्राता मे दयितो भवतामभूत् ।
स चापि पालयामास यथावत्तच्च वेत्थ ह ॥ ११९ ॥

मया च भवतां सम्यक् शुश्रूषा या कृताऽनघाः ।
असम्यग्वा महाभागास्तत्क्षन्तव्यमतन्द्रितैः ॥ १२० ॥

यथा दुर्योधनेनेदं भुक्तं राज्यमकण्टकम् ।
अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान् ॥ १२१ ॥

तस्यापराधाद्दुर्बुद्धेरभिमानान्महीक्षिताम् ।
विमर्दः सुमहानासीदनयात्स्वकृतादथ ॥ १२२ ॥

तन्मया साधु वाऽपीद यदि वाऽसाधु वै कृतम् ।
तद्वो हृदि न कर्तव्यं मया बद्धोऽयमञ्जलिः ॥ १२३ ॥

वृद्धोऽयं हतपुत्रोऽयं दुःखितोऽयं नराधिपः ।
पूर्वराज्ञां च पुत्रोऽयमिति कृत्वाऽनुजानथ ॥ १२४ ॥

अयं च कौरवो राजा कुन्तीपुत्रो युधिष्ठिरः।
सर्वैर्भवद्भिर्द्रष्टव्यः समेषु विषमेषु च ॥ १२५ ॥

ब्रह्मेव भगवानेष सर्वभूतजगत्पतिः।
युधिष्ठिरो महातेजा भवतः पालयिष्यति ॥ १२६ ॥

अवश्यमेव वक्तव्यमिति कृत्वा ब्रवीमि वः।
एष न्यासो मया दत्तः सर्वेषां वो युधिष्ठिरः ॥ १२७ ॥

भवन्तोऽस्य च वीरस्य न्यासभूताः कृता मया।
भवद्भिर्न हि मे मन्युः कृतपूर्वः कथञ्चन।
अत्यन्तगुरुभक्तानामेषोऽञ्जलिरिदं नमः ॥ १२८ ॥

इत्युक्तास्तेन ते सर्वे पौरजानपदा जनाः।
नोचुर्बाष्पकलाः किञ्चिद्वीक्षाञ्चक्रुः परस्परम् ॥ १२९ ॥

(अ. १०) हृदयैः शून्यभूतैस्ते धृतराष्ट्रप्रवासजम्।
दुःखं सन्धारयन्तो हि नष्टसंज्ञा इवाभवन् ॥ १३० ॥

ते विनीय तमायासं धृतराष्ट्रवियोगजम्।
शनैः शनैस्तदाऽन्योन्यमब्रुवन्सम्मतान्युत ॥ १३१ ॥

ततः सन्धाय ते सर्वे वाक्यान्यथ समासतः।
एकस्मिन्ब्राह्मणे राजन्निवेश्योचुर्नराधिपम् ॥ १३२ ॥

ततः स्वाचरणो विप्रः संमतोऽर्थविशारदः।
साम्बाख्यो बह्वृचो राजन् वक्तुं समुपचक्रमे ॥ १३३ ॥

राजन् वाक्यं जनस्यास्य मयि सर्वं समर्पितम्।
वक्ष्यामि तदहं वीर तज्जुषस्व नराधिप ॥ १३४ ॥

यथा वदसि राजेन्द्र सर्वमेतत्तथा विभो।
नात्र मिथ्या वचः किञ्चित्सुहृत्त्वं नः प्ररस्परम् ॥ १३५ ॥

न जात्वस्य च वंशस्य राज्ञां कश्चित्कदाचन।
राजाऽऽसीद्यः प्रजापालः प्रजानामप्रियोऽभवत् ॥ १३६ ॥

यथा ब्रवीति धर्मात्मा मुनिः सत्यवतीसुतः ।
तथा कुरु महाराज स हि नः परमो गुरुः ॥ १३७ ॥

उषिताः स्म सुखं नित्यं भवता परिपालिताः ।
सुसूक्ष्मं च व्यलीकं ते सपुत्रस्य न विद्यते ॥ १३८ ॥

यत्तु ज्ञातिविमर्देऽस्मिन्नात्थ दुर्योधनं प्रति ।
न तद्दुर्योधनकृतं न च तद्भवता कृतम् ॥ १३९ ॥

न कर्णसौबलाभ्यां च कुरवो यत् क्षयं गताः ।
दैवं तत्तु विजानीमो यन्न शक्यं प्रबाधितुम् ॥ १४० ॥

भवत्कृतमिमं स्नेहं युधिष्ठिरविवर्धितम् ।
न पृष्ठतः करिष्यन्ति पौरा जानपदा जनाः ॥ १४१ ॥

स राजन्मानसं दुःखमपनीय युधिष्ठिरात् ।
कुरु कार्याणि धर्म्याणि नमस्ते पुरुषर्षभ ॥ १४२ ॥

तस्य तद्वचनं धर्म्यमनुमान्य गुणोत्तरम् ।
साधु साध्विति सर्वः स जनः प्रतिगृहीतवान् ॥ १४३ ॥

धृतराष्ट्रश्च तद्वाक्यमभिपूज्य पुनः पुनः ।
विसर्जयामास तदा प्रकृतीस्तु शनैः शनैः ॥ १४४ ॥

ततो विवेश भवनं गान्धार्या सहितो निजम् ।
व्युष्टायां चैव शर्वर्यां यच्चकार निबोध तत् ॥ १४५ ॥

## धृतराष्ट्रस्य दानयज्ञः

(अ. ११) ततो रजन्यां व्युष्टायां धृतराष्ट्रोऽम्बिकासुतः ।
विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् ॥ १४६ ॥

स गत्वा राजवचनादुवाचाच्युतमीश्वरम् ।
युधिष्ठिरं महातेजाः सर्वबुद्धिमतां वरः ॥ १४७ ॥

धृतराष्ट्रो महाराजो वनवासाय दीक्षितः।
गमिष्यति वनं राजन्नागतां कार्तिकीमिमाम् ॥ १४८ ॥
स त्वां कुरुकुलश्रेष्ठ किञ्चिदर्थमभीप्सति।
श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः।
पुत्राणा चैव सर्वेषां ये चान्ये सुहृदो हताः ॥ १४९ ॥
एतच्छ्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः।
हृष्टः संपूजयामास गुडाकेशश्च पाण्डवः ॥ १५० ॥
न च भीमो दृढक्रोधस्तद्वचो जगृहे तदा ॥ १५१ ॥
अभिप्रायं विदित्वा तु भीमसेनस्य फाल्गुनः।
किरीटी किञ्चिदानस्य तमुवाच नरर्षभम् ॥ १५२ ॥
अर्जुन०- भीम राजा पिता वृद्धो वनवासाय दीक्षित.।
दातुमिच्छति सर्वेषां सुहृदामौर्ध्वदेहिकम्।
भीष्मादीनां महाबाहो तदनुज्ञातुमर्हसि ॥ १५३ ॥
दिष्ट्या त्वद्य महाबाहो धृतराष्ट्रः प्रयाचते।
याचितो य. पुराऽस्माभि पश्य कालस्य पर्ययम् ॥ १५४ ॥
मा तेऽन्यत्पुरुषव्याघ्र दानाद्भवतु दर्शनम्।
अयशस्यमतोऽन्यत्स्यादधर्मश्च महाभुज ॥ १५५ ॥
एवं ब्रुवाणं बीभत्सुं धर्मराजोऽप्यपूजयत्।
भीमसेनस्तु सक्रोध. प्रोवाचेदं वचस्तदा ॥ १५६ ॥
भीम०- वयं भीष्मस्य दास्याम. प्रेतकार्य तु फाल्गुन।
अन्येषां चैव सर्वेषा कुन्ती कर्णाय दास्यति ॥ १५७ ॥
श्राद्धानि पुरुषव्याघ्र मा प्रादात्कौरवो नृपः।
इति मे वर्तते बुद्धिर्मा नो नन्दन्तु शत्रवः ॥ १५८ ॥
कष्टात्कष्टतरं यान्तु सर्वे दुर्योधनादयः ॥ १५९ ॥
यत्र त्रयोदशसमा वने वन्येन जीवथ।
न तदा त्वां पिता ज्येष्ठः पितृत्वेनाभिवीक्षते ॥ १६० ॥

किं ते तद्विस्मृतं पार्थ यदेष कुलपासनः।
दुर्बुद्धिर्विदुरं प्राह द्यूते किं जितमित्युत ॥ १६१ ॥

(अ १२) भीम ज्येष्ठो गुरुर्मे त्वं नातोऽन्यद्वक्तुमुत्सहे।
अर्जुन०- धृतराष्ट्रस्तु राजर्षि सर्वथा मानमर्हति ॥ १६२ ॥

न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतान्यपि।
असंभिन्नार्यमर्यादाः साधवः पुरुषोत्तमाः ॥ १६३ ॥

इति तस्य वचः श्रुत्वा फाल्गुनस्य महात्मन.।
विदुरं प्राह धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः ॥ १६४ ॥

इदं मद्वचनात्क्षत्त कौरवं ब्रूहि पार्थिवम्।
यावदिच्छति पुत्राणां श्राद्धं तावद्ददाम्यहम् ॥ १६५ ॥

भीमसेने न कोपं स नृपतिः कर्तुमर्हति।
परिक्लिष्टो हि भीमोऽपि हिमवृष्ट्यातपादिभिः।
दु.खैर्बहुविधैर्धीमानरण्ये विदितं तव ॥ १६६ ॥

यन्ममास्ति धनं किञ्चिदर्जुनस्य च वेश्मनि।
तस्य स्वामी महाराज इति वाच्य. स पार्थिवः ॥ १६७ ॥

ददातु राजा विप्रेभ्यो यथेष्टं क्रियतां व्यय.।
पुत्राणा सुहृदां चैव गच्छत्वानृण्यमद्य स ॥ १६८ ॥

(अ. १३) एवमुक्तस्तु राज्ञा स विदुरो बुद्धिसत्तमः।
धृतराष्ट्रमुपेत्यैवं वाक्यमाह महार्थवत् ॥ १६९ ॥

उक्तो युधिष्ठिरो राजा भवद्वचनमादितः।
स च संश्रुत्य वाक्यं ते प्रशशंस महाद्युतिः ॥ १७० ॥

बीभत्सुश्च महातेजा निवेदयति ते गृहान्।
वसु तस्य गृहे यच्च प्राणानपि च केवलान् ॥ १७१ ॥

भीमश्च सर्वदुःखानि संस्मृत्य बहुलान्युत।
कृच्छ्रादिव महाबाहुरनुजज्ञे विनिःश्वसन् ॥ १७२ ॥

न च मन्युस्त्वया कार्य इति त्वां प्राह धर्मराट् ।
संस्मृत्य भीमस्तद्वैरं यदन्यायवदाचरत् ॥ १७३ ॥

तद्ददातु भवान्वित्तं यावदिच्छसि पार्थिव ।
त्वमीश्वरोऽस्य राज्यस्य प्राणानामपि भारत ॥ १७४ ॥

इति मामब्रवीद्राजा पार्थश्चैव धनञ्जयः ।
यदत्रानन्तरं कार्यं तद्भवान्वक्तुमर्हति ॥ १७५ ॥

(अ १४) विदुरेणैवमुक्तस्तु धृतराष्ट्रो जनाधिपः ।
प्रीतिमानभवद्राजन् राज्ञो जिष्णोश्च कर्मणि ॥ १७६ ॥

ततोऽभिरूपान् भीष्माय ब्राह्मणानृषिसत्तमान् ।
पुत्रार्थे सुहृदश्चैव स समीक्ष्य सहस्रशः ॥ १७७ ॥

कारयित्वान्नपानानि यानान्याच्छादनानि च ।
सुवर्णमणिरत्नानि दासीदासमजाविकम् ।
उद्दिश्योद्दिश्य सर्वेभ्यो ददौ स नृपसत्तमः ॥ १७८ ॥

स श्राद्धयज्ञो ववृते बहुशो धनदक्षिणः ।
अनेकधनरत्नौघो युधिष्ठिरमते तदा ॥ १७९ ॥

शतदेये दशशतं सहस्रे चायुतं तथा ।
दीयते वचनाद्राज्ञः कुन्तीपुत्रस्य धीमतः ॥ १८० ॥

एवं स वसुधाराभिर्वर्षमाणो नृपाम्बुदः ।
तर्पयामास विप्रांस्तान्वर्षन् सस्यमिवाम्बुदः ॥ १८१ ॥

ततोऽनन्तरमेवात्र सर्ववर्णान्महामते ।
अन्नपानरसौघेन प्लावयामास पार्थिवः ॥ १८२ ॥

एवं स पुत्रपौत्राणां पितॄणामात्मनस्तथा ।
गान्धार्याश्च महाराज प्रददावौर्ध्वदेहिकम् ॥ १८३ ॥

दशाहमेवं दानानि दत्वा राजाम्बिकासुत ।
बभूव पुत्रपौत्राणामनृणो भरतर्षभ ॥ १८४ ॥

## धृतराष्ट्रस्य पुरान्निर्गमनम्, कुन्त्या वनप्रस्थानम्

(अ १५) ततः प्रभाते राजा स धृतराष्ट्रोऽम्बिकासुतः।
आहूय पाण्डवान् वीरान् वनवासे कृतक्षणः।
गान्धारीसहितो धीमानभ्यनन्दद्यथाविधि ॥ १८५ ॥
कार्तिक्यां कारयित्वेष्टिं ब्राह्मणैर्वेदपारगैः।
अग्निहोत्रं पुरस्कृत्य वल्कलाजिनसवृतः।
वधूजनवृतो राजा निर्ययौ भवनात्ततः ॥ १८६ ॥
ततो लाजैः सुमनोभिश्च राजा
विचित्राभिस्तद्गृहं पूजयित्वा।
संपूज्यार्थैर्भृत्यवर्गं च सर्वं
ततः समुत्सृज्य ययौ नरेन्द्रः ॥ १८७ ॥
कुन्ती गान्धारीं बद्धनेत्रां व्रजन्ती
स्कन्धासक्तं हस्तमथोद्वहन्ती।
राजा गान्धार्याः स्कन्धदेशेऽवसज्य
पाणिं ययौ धृतराष्ट्रः प्रतीतः ॥ १८८ ॥
या नापश्यश्चन्द्रमसं न सूर्यं
रामाः कदाचिदपि तस्मिन्नरेन्द्रे।
महावनं गच्छति कौरवेन्द्रे
शोकेनार्ता राजमार्गं प्रपेदुः ॥ १८९ ॥
(अ. १६) ततः प्रासादहर्म्येषु वसुधायां च पार्थिव।
नारीणां च नराणां च निःस्वनः सुमहानभूत् ॥ १९० ॥
स राजा राजमार्गेण नृनारीसङ्कुलेन च।
कथञ्चिन्निर्ययौ धीमान् वेपमानः कृताञ्जलिः ॥ १९१ ॥
स वर्द्धमानद्वारेण निर्ययौ गजसाह्वयात्।
विसर्जयामास च तं जनौघं स मुहुर्मुहुः ॥ १९२ ॥
वनं गन्तुं च विदुरो राज्ञा सह कृतक्षणः।
सञ्जयश्च महामात्रः सूतो गावल्गणिस्तथा ॥ १९३ ॥

कृपं निवर्तयामास युयुत्सुं च महारथम्।
धृतराष्ट्रो महीपाल· परिदाप्य युधिष्ठिरे ॥ १९४ ॥

निवृत्ते पौरवर्गे च राजा सान्तःपुरस्तदा।
धृतराष्ट्राभ्यनुज्ञातो निवर्तितुमियेष ह ॥ १९५ ॥

सोऽब्रवीन्मातरं कुन्तीं वनं तमनुजग्मुषीम्।
अहं राजानमन्विष्ये भवती विनिवर्तताम् ॥ १९६ ॥

वधूपरिवृता राज्ञि नगरं गन्तुमर्हसि।
राजा यात्वेष धर्मात्मा तापस्ये कृतनिश्चयः ॥ १९७ ॥

कुन्ती०– सहदेवे महाराज माऽप्रसादं कृथाः क्वचित्।
एष मामनुरक्तो हि राजंस्त्वां चैव सर्वदा ॥ १९८ ॥

कर्णं स्मरेथाः सततं सङ्ग्रामेष्वपलायिनम्।
तन्निमित्तं महाबाहो दानं दद्यास्त्वमुत्तमम् ॥ १९९ ॥

द्रौपद्याश्च प्रिये नित्यं स्थातव्यमरिकर्शन ॥ २०० ॥

भीमसेनोऽर्जुनश्चैव नकुलश्च कुरूद्वह।
समाधेयास्त्वया राजंस्त्वय्यद्य कुलधूर्गता ॥ २०१ ॥

श्वश्रूश्वशुरयोः पादान् शुश्रूषन्ती वने त्वहम्।
गान्धारीसहिता वत्स्ये तापसी मलपङ्किनी ॥ २०२ ॥

एवमुक्तः स धर्मात्मा धर्मराजो युधिष्ठिरः।
उवाच मातरं दीनश्चिन्ताशोकपरायणः ॥ २०३ ॥

युधि०– किमिदं ते व्यवसितं नैवं त्वं वक्तुमर्हसि।
न त्वामभ्यनुजानामि प्रसादं कर्तुमर्हसि ॥ २०४ ॥

पुरोद्यतान्पुरा ह्यस्मानुत्साह्य प्रियदर्शने।
विदुलाया वचोभिस्त्वं नास्मान्सन्त्यक्तुमर्हसि ॥ २०५ ॥

इति बाष्पकला वाचः कुन्ती पुत्रस्य शृण्वती।
सा जगामाश्रुपूर्णाक्षी भीमस्तामिदमब्रवीत् ॥ २०६ ॥

भीम०— यदा राज्यमिदं कुन्ति भोक्तव्यं पुत्रनिर्जितम् ।
प्राप्तव्या राजधर्माश्च तदेयं ते कुतो मतिः ॥ २०७ ॥
किं वयं कारिताः पूर्वं भवत्या पृथिवीक्षयम् ।
कस्य हेतोः परित्यज्य वनं गन्तुमभीप्ससि ॥ २०८ ॥
वनाच्चापि किमानीता भवत्या बालका वयम् ।
प्रसीद मातर्मा गास्त्व वनमद्य यशस्विनि ।
श्रियं यौधिष्ठिरीं मातर्भुङ्क्ष्व तावद्बलार्जिताम् ॥ २०९ ॥
इति सा निश्चितैवाशु वनवासाय भाविनी ।
लालप्यतां बहुविधं पुत्राणां नाकरोद्वचः ॥ २१० ॥
सा पुत्रान् रुदतः सर्वान् मुहुर्मुहुरवेक्षती ।
जगामैव महाप्राज्ञा वनाय कृतनिश्चया ॥ २११ ॥
अन्वयुः पाण्डवास्तां तु सभृत्यान्तःपुरास्तथा ।
ततः प्रमृज्य साऽश्रूणि पुत्रान्वचनमब्रवीत् ॥ २१२ ॥
(अ. १७) एवमेतन्महाबाहो यथा वदसि पाण्डव ।
कृतमुद्धर्षणं पूर्वं मया वः सीदता नृपाः ॥ २१३ ॥
द्यूतापहृतराज्यानां पतितानां सुखादपि ।
ज्ञातिभिः परिभूतानां कृतमुद्धर्षणं मया ॥ २१४ ॥
कथं पाण्डोर्न नश्येत सन्ततिः पुरुषर्षभाः ।
यशश्च वो न नश्येत इति चोद्धर्षणं कृतम् ॥ २१५ ॥
यूयमिन्द्रसमाः सर्वे देवतुल्यपराक्रमाः ।
मा परेषां मुखप्रेक्षाः स्थेत्येवं तत्कृतं मया ॥ २१६ ॥
भुक्तं राज्यफलं पुत्रा भर्तुर्मे विपुलं पुरा ।
महादानानि दत्तानि पीतः सोमो यथाविधि ॥ २१७ ॥
नाहं राज्यफलं पुत्राः कामये पुत्रनिर्जितम् ।
पतिलोकानहं पुण्यान्कामये तपसा विभो ॥ २१८ ॥
श्वश्रूश्वशुरयोः कृत्वा शुश्रूषां वनवासिनोः ।
तपसा शोषयिष्यामि युधिष्ठिर कलेवरम् ॥ २१९ ॥

निवर्तस्व कुरुश्रेष्ठ भीमसेनादिभिः सह।
धर्मे ते धीयतां बुद्धिर्मनस्तु महदस्तु च ॥ २२० ॥

## पाण्डवानां हस्तिनापुरागमनम्

(अ. १८) कुन्त्यास्तु वचनं श्रुत्वा पाण्डवा राजसत्तम।
अभिवाद्य न्यवर्तन्त पृथां तामनिवर्त्य वै ॥ २२१ ॥

उपावृत्तेषु पार्थेषु सर्वास्वेव वधूषु च।
ययौ राजा महाप्राज्ञो धृतराष्ट्रो वनं तदा ॥ २२२ ॥

पाण्डवाश्चातिदीनास्ते दुःखशोकपरायणाः।
यानैः स्त्रीसहिताः सर्वे पुरं प्रविविशुस्तदा ॥ २२३ ॥

तदहृष्टमनानन्दं गतोत्सवमिवाभवत्।
नगरं हास्तिनपुरं सस्त्रीवृद्धकुमारकम् ॥ २२४ ॥

सर्वे चासन्निरुत्साहाः पाण्डवा जातमन्यवः।
कुन्त्या हीनाः सुदुःखार्ता वत्सा इव विनाकृताः ॥ २२५ ॥

धृतराष्ट्रस्तु तेनाह्ना गत्वा सुमहदन्तरम्।
ततो भागीरथीतीरे निवासमकरोत्प्रभुः ॥ २२६ ॥

स राजाऽग्नीन् पर्युपास्य हुत्वा च विधिवत्तदा।
सन्ध्यागतं सहस्रांशुमुपातिष्ठत भारत ॥ २२७ ॥

विदुरः सञ्जयश्चैव राज्ञः शय्यां कुशैस्ततः।
चक्रतुः कुरुवीरस्य गान्धार्याश्चाविदूरतः ॥ २२८ ॥

गान्धार्याः सन्निकर्षे तु निषसाद कुशे सुखम्।
युधिष्ठिरस्य जननी कुन्ती साधुव्रते स्थिता ॥ २२९ ॥

तेषां संश्रवणे चापि निषेदुर्विदुरादयः ॥ २३० ॥

(अ. १९) ततो भागीरथीतीरात्कुरुक्षेत्रं जगाम सः।
सानुगो नृपतिर्वृद्धो नियतः संयतेन्द्रियः ॥ २३१ ॥

तत्राश्रमपदं धीमानभिगम्य स पार्थिवः।
आससादाथ राजर्षि शतयूप मनीषिणम् ॥ २३२ ॥

स हि राजा महानासीत्केकयेषु परंतपः।
स्वपुत्रं मनुजैश्वर्ये निवेश्य वनमाविशत् ॥ २३३ ॥

तेनासौ सहितो राजा ययौ व्यासाश्रमं प्रति।
तत्रैनं विधिवद्राजा प्रत्यगृह्णात्कुरूद्वहः ॥ २३४ ॥

स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः।
शतयूपाश्रमे तस्मिन्निवासमकरोत्तदा ॥ २३५ ॥

तस्मै सर्व विधिं राज्ञे राजाऽऽचख्यौ महामतिः।
आरण्यकं महाराज व्यासस्यानुमते तदा ॥ २३६ ॥

एवं स तपसा राजन् धृतराष्ट्रो महामनाः।
योजयामास चात्मान ताश्चाप्यनुचरांस्तदा ॥ २३७ ॥

तथैव देवी गान्धारी वल्कलाजिनधारिणी।
कुन्त्या सह महाराज समानव्रतचारिणी ॥ २३८ ॥

कर्मणा मनसा वाचा चक्षुषा चैव ते नृप।
सन्नियम्येन्द्रियग्राममास्थिते परमं तपः ॥ २३९ ॥

त्वगस्थिभूत परिशुष्कमांसो
जटाजिनी वल्कलसंवृताङ्गः।
स पार्थिवस्तत्र तपश्चचार
महार्षिवत्तीव्रमपेतमोहः ॥ २४० ॥

(अ. २०) ततस्तत्र मुनिश्रेष्ठा राजान द्रष्टुमभ्ययुः।
नारदः पर्वतश्चैव देवलश्च महातपाः ॥ २४१ ॥

द्वैपायनः सशिष्यश्च सिद्धाश्चान्ये मनीषिणः।
तेषां कुन्ती महाराज पूजां चक्रे यथाविधि।
ते चापि तुतुषुस्तस्यास्तापसाः परिचर्यया ॥ २४२ ॥

तत्र धर्म्या· कथास्तात चक्रुस्ते परमर्षयः ।
रमयन्तो महात्मानं धृतराष्ट्रं जनाधिपम् ॥ २४३ ॥

कथान्तरे तु कस्मिंश्चिद्देवर्षिर्नारदस्तत· ।
कथामिमामकथयत्सर्वप्रत्यक्षदर्शिवान् ॥ २४४ ॥

नारद०–यदृच्छया शक्रसदो गत्वा शक्रं शचीपतिम् ।
दृष्टवानस्मि राजर्षे तत्र पाण्डुं नराधिपम् ॥ २४५ ॥

तत्रेयं धृतराष्ट्रस्य कथा समभवन्नृप ।
तपसो दुष्करस्यास्य यदयं तपते नृपः ॥ २४६ ॥

तत्राहमिदमश्रौषं शक्रस्य वदत· स्वयम् ।
वर्षाणि त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः ॥ २४७ ॥

ततः कुबेरभवनं गान्धारीसहितो नृप ।
प्रयाता धृतराष्ट्रोऽयं राजराजाभिसत्कृत· ॥ २४८ ॥

इति ते तस्य तच्छ्रुत्वा देवर्षेर्मधुरं वचः ।
सर्वे सुमनस· प्रीता बभूवु· स च पार्थिवः ॥ २४९ ॥

एवं कथाभिरन्वास्य धृतराष्ट्रं मनीषिण· ।
विप्रजग्मुर्यथाकामं ते सिद्धगतिमास्थिताः ॥ २५० ॥

(अ. २१) वनं गते कौरवेन्द्रे दु खशोकसमन्विताः ।
बभूवुः पाण्डवा राजन्मातृशोकेन चान्विताः ॥ २५१ ॥

नैषां बभूव संप्रीतिस्तान्विचिन्तयतां तदा ।
न राज्ये न च नारीषु न वेदाध्ययनेषु च ॥ २५२ ॥

परं निर्वेदमगमंश्चिन्तयन्तो नराधिपम् ।
तं च ज्ञातिवधं घोरं संस्मरन्त पुनः पुन· ॥ २५३ ॥

वैराट्यास्तनयं दृष्ट्वा पितरं ते परीक्षितम् ।
धारयन्ति स्म ते प्राणांस्तव पूर्वपितामहाः ॥ २५४ ॥

## पाण्डवानां धृतराष्ट्राश्रमागमनम्

(अ. २२) एवं ते पुरुषव्याघ्रा• पाण्डवा मातृनन्दनाः ।
स्मरन्तो मातरं वीरा बभूवुर्भृशदु खिता• ॥ २५५ ॥

ये राजकार्येषु पुरा व्यासक्ता नित्यशोऽभवन् ।
ते राजकार्याणि तदा नाकार्षुः सर्वतः पुरे ॥ २५६ ॥

प्रविष्टा इव शोकेन नाभ्यनन्दन्त किञ्चन ।
संभाष्यमाणा अपि ते न किञ्चित्प्रत्यपूजयन् ॥ २५७ ॥

ते स्म वीरा दुराधर्षा गाभीर्ये सागरोपमा• ।
शोकोपहतविज्ञाना नष्टसंज्ञा इवाभवन् ॥ २५८ ॥

अचिन्तयंश्च जननीं ततस्ते पाण्डुनन्दना• ।
कथं नु वृद्धमिथुनं वहत्यतिकृशा पृथा ॥ २५९ ॥

कथं च स महीपालो हतपुत्रो निराश्रय• ।
पत्न्या सह वसत्येको वने श्वापदसेविते ॥ २६० ॥

सा च देवी महाभागा गान्धारी हतबान्धवा ।
पतिमन्ध कथं वृद्धमन्वेति विजने वने ॥ २६१ ॥

एवं तेषां कथयतामौत्सुक्यमभवत्तदा ।
गमने चाभवद्बुद्धिर्धृतराष्ट्रदिदृक्षया ॥ २६२ ॥

सहदेवस्तु राजानं प्रणिपत्येदमब्रवीत् ।
अहो मे भवतो दृष्टं हृदय गमनं प्रति ॥ २६३ ॥

न हि त्वा गौरवेणाहमशकं वक्तुमञ्जसा ।
गमनं प्रति राजेन्द्र तदिद समुपस्थितम् ॥ २६४ ॥

प्रासादहर्म्यसंवृद्धामत्यन्तसुखभागिनीम् ।
कदा तु जननीं श्रान्तां द्रक्ष्यामि भृशदु खिताम् ॥ २६५ ॥

अनित्याः खलु मर्त्यानां गतयो भरतर्षभ ।
कुन्ती राजसुता यत्र वसत्यसुखिता वने ॥ २६६ ॥

सहदेववचः श्रुत्वा द्रौपदी योषितां वरा।
उवाच देवी राजानमभिपूज्याभिनन्द्य च ॥ २६७ ॥
कदा द्रक्ष्यामि तां देवीं यदि जीवति सा पृथा।
जीवन्त्या ह्यद्य मे प्रीतिर्भविष्यति जनाधिप ॥ २६८ ॥
अग्रपादस्थितं चेमं विद्धि राजन्वधूजनम्।
काङ्क्षन्तं दर्शनं कुन्त्या गान्धार्याः श्वशुरस्य च ॥ २६९ ॥
इत्युक्तः स नृपो देव्या द्रौपद्या भरतर्षभ।
सेनाध्यक्षान् समानाय्य सर्वानिदमुवाच ह ॥ २७० ॥
निर्यातयत मे सेना प्रभूतरथकुञ्जराम्।
द्रक्ष्यामि वनसंस्थं च धृतराष्ट्रं महीपतिम् ॥ २७१ ॥
यश्च पौरजनः कश्चिद्द्रष्टुमिच्छति पार्थिवम्।
अनावृतः सुविहितः स च यातु सुरक्षितः ॥ २७२ ॥
प्रयाणं घुष्यता चैव श्वोभूत इति मा चिरम्।
क्रियतां पथि चाप्यद्य वेश्मानि विविधानि च ॥ २७३ ॥
एवमाज्ञाप्य राजा स भ्रातृभिः सह पाण्डवः।
श्वोभूते निर्ययौ राजन् सस्त्रीवृद्धपुरःसरः ॥ २७४ ॥
(अ २३) नदीतीरेषु रम्येषु सरःसु च विशां पते।
वासान् कृत्वा क्रमेणाथ जग्मुस्ते कुरुपुङ्गवाः ॥ २७५ ॥
युयुत्सुश्च महातेजा धौम्यश्चैव पुरोहितः।
युधिष्ठिरस्य वचनात्पुरगुप्तिं प्रचक्रतुः ॥ २७६ ॥
ततो युधिष्ठिरो राजा कुरुक्षेत्रमवातरत्।
क्रमेणोत्तीर्य यमुनां नदीं परमपाविनीम् ॥ २७७ ॥
स ददर्शाश्रमं दूराद्राजर्षेस्तस्य धीमतः।
शतयूपस्य कौरव्य धृतराष्ट्रस्य चैव ह ॥ २७८ ॥
ततः प्रमुदितः सर्वो जनस्तद्वनमञ्जसा।
विवेश सुमहानादैरापूर्य भरतर्षभ ॥ २७९ ॥

(अ. २४) ततस्ते पाण्डवा दूरादवतीर्य पदातयः।
अभिजग्मुर्नरपतेराश्रमं विनयानता.॥ २८०॥

स च योधजन. सर्वो ये च राष्ट्रनिवासिनः।
स्त्रियश्च कुरुमुख्यानां पद्भिरेवान्वयुस्तदा ॥ २८१ ॥

आश्रमं ते ततो जग्मुर्धृतराष्ट्रस्य पाण्डवाः।
शून्य मृगगणाकीर्णं कदलीवनशोभितम्॥ २८२ ॥

ततस्तत्र समाजग्मुस्तापसा नियतव्रताः।
पाण्डवानागतान् द्रष्टुं कौतूहलसमन्विताः॥ २८३॥

तानपृच्छत्ततो राजा क्वासौ कौरववंशभृत्।
पिता ज्येष्ठो गतोऽस्माकमिति बाष्पपरिप्लुत ॥ २८४॥

ते तमूचुस्ततो वाक्यं यमुनामवगाहितुम्।
पुष्पाणामुदकुंभस्य चार्थे गत इति प्रभो ॥ २८५॥

तैराख्यातेन मार्गेण ततस्ते जग्मुरञ्जसा।
ददृशुश्चाविदूरे तान्सर्वानथ पदातय.॥ २८६॥

ततस्ते सत्वरा जग्मु. पितुर्दर्शनकाङ्क्षिणः।
सहदेवस्तु वेगेन प्राधावद्यत्र सा पृथा॥ २८७॥

सुस्वरं रुरुदे धीमान्मातुः पादावुपस्पृशन्।
सा च बाष्पाकुलमुखी ददर्श दयितं सुतम्॥ २८८॥

बाहुभ्यां संपरिष्वज्य समुन्नाम्य च पुत्रकम्।
गान्धार्या. कथयामास सहदेवमुपस्थितम्॥ २८९ ॥

अनन्तरं च राजानं भीमसेनमथार्जुनम्।
नकुलं च पृथा दृष्ट्वा त्वरमाणोपचक्रमे ॥ २९० ॥

सा ह्यग्रे गच्छति तयोर्दम्पत्योर्हतपुत्रयोः।
कर्षन्ती तौ ततस्ते तां दृष्ट्वा संन्यपतन्भुवि॥ २९१ ॥

राजा तान्स्वरयोगेन स्पर्शेन च महामनाः ।
प्रत्यभिज्ञाय मेधावी समाश्वासयत प्रभु· ॥ २९२ ॥

ततस्ते बाष्पमुत्सृज्य गान्धारीसहितं नृपम् ।
उपतस्थुर्महात्मानो मातरं च यथाविधि ॥ २९३ ॥

सर्वेषां तोयकलशान् जगृहुस्ते स्वयं तदा ।
पाण्डवा लब्धसंज्ञास्ते मात्रा चाश्वासिता· पुनः ॥ २९४ ॥

तथा नार्यो नृसिंहानां सोऽवरोधजनस्तदा ।
पौरजानपदाश्चैव ददृशुस्तं जनाधिपम् ॥ २९५ ॥

निवेदयामास तदा जनं तन्नामगोत्रत· ।
युधिष्ठिरो नरपति· स चैनं प्रत्यपूजयत् ॥ २९६ ॥

स तैः परिवृतो मेने हर्षबाष्पाविलेक्षणः ।
राजाऽऽत्मानं गृहगतं पुरेव गजसाह्वये ॥ २९७ ॥

अभिवादितो वधूभिश्च कृष्णाद्याभिः स पार्थिव· ।
गान्धार्या सहितो धीमान् कुन्त्या च प्रत्यनन्दत ॥ २९८ ॥

ततश्चाश्रममागच्छत्सिद्धचारणसेवितम् ।
दिदृक्षुभिः समाकीर्णं नभस्तारागणैरिव ॥ २९९ ॥

(अ.२५) स तै सह नरव्याघ्रैर्भ्रातृभिर्भरतर्षभ ।
राजा रुचिरपद्माक्षैरासाञ्चक्रे तदाश्रमे ॥ ३०० ॥

तापसैश्च महाभागैर्नानादेशसमागतैः ।
द्रष्टुं कुरुपतेः पुत्रान् पाण्डवान्पृथुवक्षसः ॥ ३०१ ॥

तेऽब्रुवन् ज्ञातुमिच्छामः कतमोऽत्र युधिष्ठिरः ।
भीमार्जुनौ यमौ चैव द्रौपदी च यशस्विनी ॥ ३०२ ॥

तानाचख्यौ तदा सूतः सर्वांस्तानभिनामतः ।
सञ्जयो द्रौपदीं चैव सर्वाश्चान्याः कुरुस्त्रियः ॥ ३०३ ॥

## विदुरनिर्याणम्

(अ २६) युधिष्ठिर महाबाहो कच्चित्त्वं कुशली ह्यसि।
धृत०- सहितो भ्रातृभिः सर्वैः पौरजानपदैस्तथा ॥ ३०४ ॥
कच्चिद्वर्तसि पौराणीं वृत्तिं राजर्षिसेविताम् ॥
कच्चिन्न्यायाननुच्छिद्य कोशस्तेऽभिप्रपूर्यते ॥ ३०५ ॥
कच्चित्स्त्रीबालवृद्धं ते न शोचति न याचते।
जामयः पूजिताः कच्चित्तव गेहे नरर्षभ ॥ ३०६ ॥
कच्चिद्राजर्षिवंशोऽयं त्वामासाद्य महीपतिम्।
यथोचितं महाराज यशसा नावसीदति ॥ ३०७ ॥
इत्येववादिनं तं स न्यायवित् प्रत्यभाषत।
कुशलप्रश्नसंयुक्तं कुशलो वाक्यकर्मणि ॥ ३०८ ॥
युधि०- कच्चित्ते वर्धते राजंस्तपो दमशमश्च ते ॥ ३०९ ॥
अपि मे जननी चेयं शुश्रूषुर्विगतक्लमा।
अथास्याः सफलो राजन् वनवासो भविष्यति ॥ ३१० ॥
इयं च माता ज्येष्ठा मे शीतवाताध्वकर्शिता।
घोरेण तपसा युक्ता देवी कच्चिन्न शोचति ॥ ३११ ॥
क्व चासौ विदुरो राजन्नेमं पश्यामहे वयम्।
सञ्जयः कुशली चायं कच्चिन्नु तपसि स्थिरः ॥ ३१२ ॥
इत्युक्तः प्रत्युवाचेदं धृतराष्ट्रो जनाधिपम् ॥ ३१३ ॥
धृत०- कुशली विदुरः पुत्र तपो घोरं समाश्रितः।
वायुभक्षो निराहारः कृशो धमनिसन्ततः।
कदाचिद्दृश्यते विप्रैः शून्येऽस्मिन् कानने क्वचित् ॥ ३१४ ॥
इत्येवं ब्रुवतस्तस्य जटी वीटामुखः कृशः।
दिग्वासा मलदिग्धाङ्गो वनरेणुसमुक्षितः ॥ ३१५ ॥
दूरादालक्षितः क्षत्ता तत्राख्यातो महीपतेः।
निवर्तमानः सहसा राजन् दृष्ट्वाऽऽश्रमं प्रति ॥ ३१६ ॥

तमन्वधावन्नृपतिरेक एव युधिष्ठिरः।
प्रविशन्तं वनं घोरं लक्ष्यालक्ष्यं क्वचित् क्वचित्॥ ३१७॥

भो भो विदुर राजाऽहं दयितस्ते युधिष्ठिरः।
इति ब्रुवन्नरपतिस्तं यत्नादभ्यधावत॥ ३१८॥

ततो विविक्त एकान्ते तस्थौ बुद्धिमतां वरः।
विदुरो वृक्षमाश्रित्य कञ्चित्तत्र वनान्तरे॥ ३१९॥

तं राजा क्षीणभूयिष्ठमाकृतीमात्रसूचितम्।
अभिजज्ञे महाबुद्धिं महाबुद्धिर्युधिष्ठिरः॥ ३२०॥

युधिष्ठिरोऽहमस्मीति वाक्यमुक्त्वाऽग्रतः स्थित.।
विदुरस्य श्रवे राजा त च प्रत्यभ्यपूजयत्॥ ३२१॥

ततः सोऽनिमिषो भूत्वा राजानं तमुदैक्षत।
संयोज्य विदुरस्तस्मिन् दृष्टिं दृष्ट्या समाहितः॥ ३२२॥

विवेश विदुरो धीमान् गात्रैर्गात्राणि चैव ह।
प्राणान्प्राणेषु च दधदिन्द्रियाणीन्द्रियेषु च॥ ३२३॥

स योगबलमास्थाय विवेश नृपतेस्तनुम्।
विदुरो धर्मराजस्य तेजसा प्रज्वलन्निव॥ ३२४॥

विदुरस्य शरीरं तु तथैव स्तब्धलोचनम्।
वृक्षाश्रितं तदा राजा ददर्श गतचेतनम्॥ ३२५॥

बलवन्तं तथाऽऽत्मानं मेने बहुगुणं तदा।
धर्मराजो महातेजास्तच्च सस्मार पाण्डवः॥ ३२६॥

पौराणमात्मनः सर्वं विद्यावान् स विशा पते।
योगधर्मं महातेजा व्यासेन कथितं यथा॥ ३२७॥

धर्मराजश्च तत्रैव सञ्चस्कारयिषुस्तदा।
दग्धुकामोऽभवद्विद्वानथ वागभ्यभाषत॥ ३२८॥

भो भो राजन्न दग्धव्यमेतद्विदुरसंज्ञकम्।
कलेवरमिहैवं ते धर्म एष सनातन.॥ ३२९॥

लोकाः सान्तानिका नाम भविष्यन्त्यस्य भारत।
यतिधर्ममवाप्तोऽसौ नैष शोच्यः परन्तप ॥ ३३० ॥
इत्युक्तो धर्मराजः स विनिवृत्य ततः पुनः।
राज्ञो वैचित्रवीर्यस्य तत्सर्वं प्रत्यवेदयत् ॥ ३३१ ॥
ततः स राजा द्युतिमान् स च सर्वो जनस्तदा।
भीमसेनादयश्चैव परं विस्मयमागताः ॥ ३३२ ॥
तच्छ्रुत्वा प्रीतिमान् राजा भूत्वा धर्मजमब्रवीत्।
आपो, मूलं, फलं चैव ममेदं प्रतिगृह्यताम् ॥ ३३३ ॥
यदर्थो हि नरो राजंस्तदर्थोऽस्यातिथिः स्मृतः।
इत्युक्तः स तथेत्येवं प्राह धर्मात्मजो नृपम्।
फल मूलं च बुभुजे राज्ञा दत्तं सहानुजः ॥ ३३४ ॥
ततस्ते वृक्षमूलेषु कृतवासपरिग्रहाः।
तां रात्रिमवसन्सर्वे फलमूलजलाशनाः ॥ ३३५ ॥

## धृतराष्ट्राश्रमे व्यासागमनम्

(अ. २७) ततस्तु राजन्नेतेषामाश्रमे पुण्यकर्मणाम्।
शिवा नक्षत्रसंपन्ना सा व्यतीयाय शर्वरी ॥ ३३६ ॥
ततस्तत्र कथाश्चासंस्तेषां धर्मार्थलक्षणाः।
विचित्रपदसञ्चारा नानाश्रुतिभिरन्विताः ॥ ३३७ ॥
पाण्डवास्त्वभितो मातुर्धरण्यां सुषुपुस्तदा।
उत्सृज्य तु महार्हाणि शयनानि नराधिप ॥ ३३८ ॥
यदाहारोऽभवद्राजा धृतराष्ट्रो महामनाः।
तदाहारा नृवीरास्ते न्यवसंस्तां निशां तदा ॥ ३३९ ॥
व्यतीतायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियः।
भ्रातृभिः सहितो राजा ददर्शाश्रममण्डलम् ॥ ३४० ॥
सान्तःपुरपरीवारः सभृत्यः सपुरोहितः।
यथासुखं यथोद्देशं धृतराष्ट्राभ्यनुज्ञया ॥ ३४१ ॥

ददर्श तत्र वेदीश्च संप्रज्वलितपावका ।
कृताभिषेकैर्मुनिभिर्हुताग्निभिरुपस्थिताः ॥ ३४२ ॥
ततः स राजा प्रददौ तापसार्थमुपाहृतान् ।
कलशान्काञ्चनान् राजंस्तथैवौदुम्बरानपि ॥ ३४३ ॥
अजिनानि प्रवेणीश्च स्रुक्स्रुवं च महीपतिः ।
कमण्डलूंश्च स्थालीश्च पिठराणि च भारत ॥ ३४४ ॥
भाजनानि च लौहानि पात्रीश्च विविधा नृप ।
यद्यदिच्छति यावच्च यच्चान्यदपि भाजनम् ॥ ३४५ ॥
एवं स राजा धर्मात्मा परीत्याश्रममण्डलम् ।
वसु विश्राण्य तत्सर्वं पुनरायान्महीपतिः ॥ ३४६ ॥
कृताह्निकं च राजानं धृतराष्ट्रं महीपतिम् ।
ददर्शासीनमव्यग्रं गान्धारीसहितं तदा ॥ ३४७ ॥
मातरं चाविदूरस्था शिष्यवत्प्रणतां स्थिताम् ।
कुन्तीं ददर्श धर्मात्मा शिष्टाचारसमन्विताम् ॥ ३४८ ॥
स तमभ्यर्च्य राजानं नाम संश्राव्य चात्मनः ।
निषीदेत्यभ्यनुज्ञातो बृस्यामुपविवेश ह ॥ ३४९ ॥
भीमसेनादयश्चैव पाण्डवा भरतर्षभ ।
अभिवाद्योपसङ्गृह्य निषेदुः पार्थिवाज्ञया ॥ ३५० ॥
स तैः परिवृतो राजा शुशुभेऽतीव कौरवः ।
बिभ्रद्ब्राह्मीं श्रियं दीप्तां देवैरिव बृहस्पतिः ॥ ३५१ ॥
तथा तेषूपविष्टेषु समाजग्मुर्महर्षयः ।
शतयूपप्रभृतयः कुरुक्षेत्रनिवासिनः ॥ ३५२ ॥
व्यासश्च भगवान्विप्रो देवर्षिगणसेवितः ।
वृतः शिष्यैर्महातेजा दर्शयामास पार्थिवम् ॥ ३५३ ॥
वरं तु विष्टरं कौश्यं कृष्णाजिनकुशोत्तरम् ।
प्रतिपेदे तदा व्यासस्तदर्थमुपकल्पितम् ॥ ३५४ ॥

ते च सर्वे द्विजश्रेष्ठा विष्टरेषु समन्ततः ।
द्वैपायनाभ्यनुज्ञाता निषेदुर्विपुलौजसः ॥ ३५५ ॥

## व्यासकृपया युद्धहतानां दर्शनम्

(अ. २८) ततः समुपविष्टेषु पाण्डवेषु महात्मसु ।
(अ. २९) पुत्रशोकसमाविष्टा गान्धारी त्विदमब्रवीत् ।
श्वशुरं बद्धनयना देवी प्राञ्जलिरुत्थिता ॥ ३५६ ॥

गान्धा०–षोडशेमानि वर्षाणि गतानि मुनिपुङ्गव ।
अस्य राज्ञो हतान्पुत्रान् शोचतो न शमो विभो ॥ ३५७ ॥

पुत्रशोकसमाविष्टो निःश्वसन् ह्येष भूमिपः ।
न शेते वसतीः सर्वा धृतराष्ट्रो महामुने ॥ ३५८ ॥

लोकानन्यान्समर्थोऽसि स्रष्टुं सर्वांस्तपोबलात् ।
किमु लोकान्तरगतान् राज्ञो दर्शयितुं सुतान् ॥ ३५९ ॥

तव प्रसादाद्भगवन् विशोकोऽयं महीपतिः ।
यथा स्याद्भविता चाहं कुन्ती चेयं वधूस्तव ॥ ३६० ॥

(अ. ३१) भद्रे द्रक्ष्यसि गान्धारि पुत्रान् भ्रातॄन्सखींस्तथा ।
व्यास०–वधूश्च पतिभिः सार्धं निशि सुप्तोत्थिता इव ॥ ३६१ ॥

सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति ।
तत्र द्रक्ष्यथ तान्सर्वान् ये हताऽस्मिन् रणाजिरे ॥ ३६२ ॥

इति व्यासस्य वचनं श्रुत्वा सर्वो जनस्तदा ।
महता सिंहनादेन गङ्गामभिमुखो ययौ ॥ ३६३ ॥

अथ पुण्यं गिरिवरमस्तमभ्यगमद्रविः ।
ततः कृताभिषेकास्ते नैशं कर्म समाचरन् ॥ ३६४ ॥

(अ. ३२) ततो निशायां प्राप्तायां कृतसायाह्निकक्रियाः ।
व्यासमभ्यगमन्सर्वे ये तत्रासन्समागताः ३६५ ॥

ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ।
अवगाह्याजुहावाथ सर्वान् लोकान् महामुनिः ॥ ३६६ ॥

ततः सुतुमुलः शब्दो जलान्ते जनमेजय।
प्रादुरासीद्यथापूर्वं कुरुपाण्डवसेनयोः॥ ३६७॥

ततस्ते पार्थिवाः सर्वे भीष्मद्रोणपुरोगमाः।
ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रशः॥ ३६८॥

यस्य वीरस्य यो वेषो यो ध्वजो यच्च वाहनम्।
तेन तेन व्यदृश्यन्त समुपेता नराधिपाः॥ ३६९॥

धृतराष्ट्रस्य च तदा दिव्यं चक्षुर्नराधिप।
मुनिः सत्यवतीपुत्रः प्रीतः प्रादात्तपोबलात्॥ ३७०॥

तदद्भुतमचिन्त्यं च सुमहल्लोमहर्षणम्।
विस्मितः स जनः सर्वो ददर्शानिमिषेक्षणः॥ ३७१॥

तदुत्सवमहोदग्रं हृष्टनारीनराकुलम्।
आश्चर्यभूतं ददृशे चित्रं पटगतं यथा॥ ३७२॥

धृतराष्ट्रस्तु तान् सर्वान् पश्यन्दिव्येन चक्षुषा।
मुमुदे भरतश्रेष्ठ प्रसादात्तस्य वै मुनेः॥ ३७३॥

## स्त्रीणां स्वस्वपतिलोकगमनम्, जनमेजयस्य स्वपितृदर्शनम्

(अ. ३३) ततस्ते पुरुषश्रेष्ठाः समाजग्मुः परस्परम्।
विगतक्रोधमात्सर्याः सर्वे विगतकल्मषाः॥ ३७४॥

पाण्डवास्तु महेष्वासं कर्णं सौभद्रमेव च।
संप्रहर्षात्समाजग्मुर्द्रौपदेयांश्च सर्वशः॥ ३७५॥

एवं समागताः सर्वे गुरुभिर्बान्धवैः सह।
पुत्रैश्च पुरुषव्याघ्राः कुरवोऽन्ये च पार्थिवाः॥ ३७६॥

एकां रात्रिं विहृत्यैव ते वीरास्ताश्च योषितः।
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतम्॥ ३७७॥

गतेषु तेषु सर्वेषु सलिलस्थो महामुनिः।
धर्मशीलो महातेजाः कुरूणां हितकृत्तथा।
ततः प्रोवाच ताः सर्वाः क्षत्रिया निहतेश्वराः॥ ३७८॥

या याः पतिकृतान् लोकानिच्छन्ति परमस्त्रियः।
ता जाह्नवीजलं क्षिप्रमवगाहन्त्वतन्द्रिता ॥ ३७९ ॥

ततस्तस्य वचः श्रुत्वा श्रद्दधाना वराङ्गनाः।
श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलम् ॥ ३८० ॥

विमुक्ता मानुषैर्देहैस्ततस्ता भर्तृभिः सह।
समाजग्मुस्तदा साध्व्यः सर्वा एव विशां पते ॥ ३८१ ॥

(अ. ३५) ममापि वरदो व्यासो दर्शयेत्पितरं यदि।
जनमे०—तद्रूपवेषवयसं श्रद्दध्यां सर्वमेव ते ॥ ३८२ ॥

सौति०—इत्युक्तवचने तस्मिन्नृपे व्यासः प्रतापवान्।
प्रसादमकरोद्धीमानानयच्च परीक्षितम् ॥ ३८३ ॥

ततस्तद्रूपवयसमागतं नृपतिं दिव।
श्रीमन्तं पितरं राजा ददर्श जनमेजयः ॥ ३८४ ॥

ततः सोऽवभृथे राजा मुदितो जनमेजयः।
पितरं स्नापयामास स्वय सस्नौ च पार्थिव. ॥ ३८५ ॥

पप्रच्छ तमृषिं चापि वैशम्पायनमच्युतम्।
कथावशेषं धर्मज्ञो वनवासस्य सत्तम ॥ ३८६ ॥

## मासवासानन्तरं पाण्डवानां प्रत्यागमनम्

(अ. ३६) दृष्ट्वा पुत्रांस्तथा पौत्रान् सानुबन्धान् जनाधिपः।
जनमे०—धृतराष्ट्रः किमकरोद्राजा चैव युधिष्ठिरः ॥ ३८७ ॥

वैश०— तद्दृष्ट्वा महदाश्चर्यं पुत्राणां दर्शनं नृप।
वीतशोकः स राजर्षि पुनराश्रममागमत् ॥ ३८८ ॥

पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः।
पुनर्जग्मुर्महात्मानं सदारास्तं महीपतिम् ॥ ३८९ ॥

तमाश्रमपदं धीमान् ब्रह्मर्षिर्लोकपूजितः।
मुनिः सत्यवतीपुत्रो धृतराष्ट्रमभाषत॥ ३९०॥

धृतराष्ट्र महाबाहो शृणु कौरवनन्दन।
युधिष्ठिरः स्वयं धीमान् भवन्तमनुरुध्यते।
सहितो भ्रातृभिः सर्वैः सदारः ससुहृज्जनः॥ ३९१॥

विसर्जयैनं यात्वेष स्वराज्यमनुशासताम्।
मासः समधिकस्तेषामतीतो वसतां वने॥ ३९२॥

एतद्धि नित्यं यत्नेन पदं रक्ष्यं नराधिप।
बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम कुरूद्वह॥ ३९३॥

इत्युक्तः कौरवो राजा व्यासेनातुलतेजसा।
युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत्॥ ३९४॥

अजातशत्रो भद्रं ते शृणु मे भ्रातृभिः सह।
त्वत्प्रसादान्महीपाल शोको नास्मान्प्रबाधते॥ ३९५॥

प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्मे परमा त्वयि।
न मे मन्युर्महाबाहो गम्यतां पुत्र मा चिरम्॥ ३९६॥

भवन्तं चेह संप्रेक्ष्य तपो मे परिहीयते।
तपोयुक्तं शरीरं च त्वां दृष्ट्वा धारितं पुनः॥ ३९७॥

मातरौ ते तथैवेमे शीर्णपर्णकृताशने।
मम तुल्यव्रते पुत्र न चिरं वर्तयिष्यतः॥ ३९८॥

प्रयोजनं च निर्वृत्तं जीवितस्य ममानघ।
उग्रं तपः समास्थास्ये त्वमनुज्ञातुमर्हसि॥ ३९९॥

ते मात्रा समनुज्ञाता राज्ञा च कुरुपुङ्गवाः।
गान्धार्या चाभ्यनुज्ञाताः कृतपादाभिवादनाः॥ ४००॥

जनन्या समुपाघ्राताः परिष्वक्ताश्च ते नृपम्।
चक्रुः प्रदक्षिणं सर्वे वत्सा इव निवारणे॥ ४०१॥

पुन· पुनर्निरीक्षन्त प्रचक्रुस्ते प्रदक्षिणम्।
द्रौपदीप्रमुखाश्चैव सर्वा कौरवयोषितः॥ ४०२॥
न्यायतः श्वशुरे वृत्ति प्रयुज्य प्रययुस्ततः।
श्वश्रूभ्यां समनुज्ञाता परिष्वज्याभिनन्दिताः॥ ४०३॥
ततो युधिष्ठिरो राजा सदार· सहसैनिकः।
नगरं हास्तिनपुरं पुनरायात्सबान्धवः॥ ४०४॥

## दावाग्निना धृतराष्ट्रादीनां दाह', सञ्जयस्य हिमालयप्रवेशः

(अ ३७) द्विवर्षोपनिवृत्तेषु पाण्डवेषु यदृच्छया।
देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरम्॥ ४०५॥
तमभ्यर्च्य महाबाहु कुरुराजो युधिष्ठिरः।
आसीनं परिविश्वस्तं प्रोवाच वदतां वरः॥ ४०६॥
वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः।
धृतराष्ट्रं महात्मानमास्थितं परमं तपः॥ ४०७॥
अपि दृष्टस्त्वया तत्र कुशली स कुरूद्वहः।
गान्धारी च पृथा चैव सूतपुत्रश्च सञ्जयः॥ ४०८॥
नारद०–वनवासनिवृत्तेषु भवत्सु कुरुनन्दन।
कुरुक्षेत्रात्पिता तुभ्यं गङ्गाद्वारं ययौ नृप॥ ४०९॥
गान्धार्या सहितो धीमान् वध्वा कुन्त्या समन्वितः।
सञ्जयेन च सूतेन साग्निहोत्रः सयाजकः॥ ४१०॥
आतस्थे स तपस्तीव्रं पिता तव तपोधनः॥ ४११॥
ततः कदाचिद्गङ्गायाः कच्छे स नृपसत्तमः।
गङ्गायामाप्लुतो धीमानाश्रमाभिमुखोऽभवत्॥ ४१२॥
अथ वायु· समुद्भूतो दावाग्निरभवन्महान्।
ददाह तद्वनं सर्वं परिगृह्य समन्ततः॥ ४१३॥
समाविद्धे वने तस्मिन्प्राप्ते व्यसन उत्तमे।
निराहारतया राजन् मन्दप्राणविचेष्टितः।
असमर्थोऽपसरणे सुकृशो मातरौ च ते॥ ४१४॥

ततः स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात् ।
इदमाह ततः सूतं सञ्जयं जयतां वर ॥ ४१५ ॥
गच्छ सञ्जय यत्राग्निर्न त्वां दहति कर्हिचित् ।
वयमत्राग्निना युक्ता गमिष्यामः परां गतिम् ॥ ४१६ ॥
नैष मृत्युरनिष्टो नो निःसृतानां गृहात्स्वयम् ॥ ४१७ ॥
जलमग्निस्तथा वायुरथवाऽपि विकर्षणम् ।
तापसानां प्रशस्यन्ते गच्छ सञ्जय मा चिरम् ॥ ४१८ ॥
इत्युक्त्वा सञ्जयं राजा समाधाय मनस्तथा ।
प्राङ्मुखः सह गान्धार्या कुन्त्या चोपाविशत्तदा ॥ ४१९ ॥
सञ्जयस्तं तथा दृष्ट्वा प्रदक्षिणमथाकरोत् ।
उवाच चैनं मेधावी युङ्क्ष्वात्मानमिति प्रभो ॥ ४२० ॥
ऋषिपुत्रो मनीषी स राजा चक्रेऽस्य तद्वचः ।
सन्निरुध्येन्द्रियग्राममासीत्काष्ठोपमस्तदा ॥ ४२१ ॥
गान्धारी च महाभागा जननी च पृथा तव ।
दावाग्निना समायुक्ते स च राजा पिता तव ॥ ४२२ ॥
सञ्जयस्तु महामात्रस्तस्माद्दावादमुच्यत ।
गङ्गाकूले मया दृष्टस्तापसैः परिवारितः ॥ ४२३ ॥
स तानामन्त्र्य तेजस्वी निवेद्यैतच्च सर्वशः ।
प्रययौ सञ्जयो धीमान् हिमवन्तं महीधरम् ॥ ४२४ ॥
एवं स निधन प्राप्तः कुरुराजो महामनाः
गान्धारी च पृथा चैव जनन्यौ ते विशां पते ॥ ४२५ ॥
एतच्छ्रुत्वा च सर्वेषां पाण्डवानां महात्मनाम् ।
निर्याणं धृतराष्ट्रस्य शोकः समभवन्महान् ।
अन्तःपुराणां च तदा महानार्तस्वरोऽभवत् ॥ ४२६ ॥
तस्मिन्नुपरते शब्दे मुहूर्तादिव भारत ।
निगृह्य बाष्पं धैर्येण धर्मराजोऽब्रवीदिदम् ॥ ४२७ ॥
(अ. ३८) दुर्विज्ञेया गतिर्ब्रह्मन् पुरुषाणां मतिर्मम ।
युधि०— यत्र वैचित्रवीर्योऽसौ दग्ध एवं वनाग्निना ॥ ४२८ ॥

न च शोचामि गान्धारीं हतपुत्रा यशस्विनीम्।
पतिलोकमनुप्राप्तां तथा भर्तृव्रते स्थिताम् ॥ ४२९ ॥

पृथामेव च शोचामि या पुत्रैश्वर्यसमृद्धिमत्।
उत्सृज्य सुमहद्दीप्तं वनवासमरोचयत् ॥ ४३० ॥

युधिष्ठिरस्य जननी भीमस्य विजयस्य च।
अनाथवत्कथं दग्धा इति मुह्यामि चिन्तयन् ॥ ४३१ ॥

इदं कष्टतरं चान्यद्भगवन् प्रतिभाति मे।
तिष्ठत्सु मन्त्रपूतेषु तस्याग्निषु महावने।
वृथाग्निना समायुक्तो निष्ठां प्राप्तः पिता मम ॥ ४३२ ॥

(अ. ३९) नासौ वृथाग्निना दग्धो यथा तत्र श्रुतं मया।
नारद०–वैचित्रवीर्यो नृपतिस्तत्ते वक्ष्यामि सुव्रत ॥ ४३३ ॥

वनं प्रविशताऽनेन वायुभक्षेण धीमता।
अग्नयः कारयित्वेष्टिमुत्सृष्टा इति नः श्रुतम् ॥ ४३४ ॥

स विवृद्धस्तदा वह्निर्वने तस्मिन्नभूत्किल।
तेन तद्वनमादीप्तमिति ते तापसाऽब्रुवन् ॥ ४३५ ॥

तेनाग्निना समायुक्तः स्वेनैव भरतर्षभ।
एवं स्वेनाग्निना राजा समायुक्तो महीपते ॥ ४३६ ॥

मा शोचिथास्त्वं नृपतिं गतः स परमां गतिम् ॥ ४३७ ॥

गुरुशुश्रूषया चैव जननी ते जनाधिप।
प्राप्ता सुमहतीं सिद्धिमिति मे नात्र संशय. ॥ ४३८ ॥

कर्तुमर्हसि राजेन्द्र तेषा त्वमुदकक्रियाम्।
भ्रातृभिः सहित. सर्वैरेतदत्र विधीयताम् ॥ ४३९ ॥

## धृतराष्ट्रादीनामौर्ध्वदैहिकम्

ततः स पृथिवीपालः पाण्डवानां धुरन्धरः।
निर्ययौ सहसोदर्य सदारश्च नरर्षभः ॥ ४४० ॥

पौरजानपदाश्चैव राजभक्तिपुरस्कृताः।
गङ्गां प्रजग्मुरभितो वाससैकेन संवृताः ॥ ४४१ ॥
ततोऽवगाह्य सलिले सर्वे ते नरपुङ्गवाः।
युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने ॥ ४४२ ॥
गान्धार्याश्च पृथायाश्च विधिवन्नामगोत्रत ।
शौचं निवर्तयन्तस्ते तत्रोषुर्नगराद्बहिः ॥ ४४३ ॥
प्रेषयामास स नरान् विधिज्ञानाप्तकारिणः।
गङ्गाद्वारं नरश्रेष्ठो यत्र दग्धोऽभवन्नृप. ॥ ४४४ ॥
तत्रैव तेषां कृत्यानि गङ्गाद्वारेऽन्वशात्तदा।
कर्तव्यानीति पुरुषान् दत्तदेयान्महीपति. ॥ ४४५ ॥
द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिपः।
ददौ श्राद्धानि विधिवद्दक्षिणावन्ति पाण्डव. ॥ ४४६ ॥
ततः स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः।
प्रविवेश पुरं राजा नगरं वारणाह्वयम् ॥ ४४७ ॥
ते चापि राजवचनात्पुरुषा ये गताऽभवन्।
सङ्कल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्तत. ॥ ४४८ ॥
माल्यैर्गन्धैश्च विविधैरर्चयित्वा यथाविधि।
कुल्यानि तेषां संयोज्य तदाचख्युर्महीपतेः ॥ ४४९ ॥
समाश्वास्य तु राजानं धर्मात्मानं युधिष्ठिरम्।
नारदोऽप्यगमद्राजन् परमर्षिर्यथेप्सितम् ॥ ४५० ॥
एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमत.।
वनवासे तथा त्रीणि नगरे दश पञ्च च ॥ ४५१ ॥
युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा।
धारयामास तद्राज्यं निहतज्ञातिबान्धवः ॥ ४५२ ॥

शान्तिपर्वतः श्लोकाः ॥ ४७०६ ॥

आदिपर्वतः श्लोकाः ॥ १५५०२ ॥

॥ इति श्रीमहाभारतसारे आश्रमवासिकपर्व समाप्तम् ॥

---

# महाभारतसारः

## १६. मौसलपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### यादवपुत्रेभ्यः ऋषिशापः, मुसलजन्म

(अ. १) षट्त्रिंशे त्वथ संप्राप्ते वर्षे कौरवनन्दनः।
वैश०- कस्यचित्त्वथ कालस्य कुरुराजो युधिष्ठिरः।
शुश्राव वृष्णिचक्रस्य मौसले कदनं कृतम्॥ १॥

परस्परं समासाद्य ब्रह्मदण्डबलात्कृतान्।
वृष्णीन्विनष्टांस्ते श्रुत्वा व्यथिताः पाण्डवाऽभवन्॥ २॥

जनमे०- कथं विनष्टा भगवन्नन्धका वृष्णिभिः सह।
पश्यतो वासुदेवस्य भोजाश्चैव महारथाः॥ ३॥

वैश०- विश्वामित्रं च कण्वं च नारदं च तपोधनम्।
सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान्॥ ४॥

ते तान् साम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा।
अब्रुवन्नुपसङ्गम्य दैवदण्डनिपीडिताः॥ ५॥

इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः।
ऋषयः साधु जानीत किमियं जनयिष्यति॥ ६॥

इत्युक्तास्ते तदा राजन् विप्रलंभप्रधर्षिताः।
प्रत्यब्रुवंस्तान् मुनयो यत्तच्छृणु नराधिप॥ ७॥

वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम्।
वासुदेवस्य दायादः साम्बोऽयं जनयिष्यति॥ ८॥

येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः।
उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ ॥ ९ ॥
समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः।
जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति ॥ १० ॥
श्वोभूतेऽथ ततः साम्बो मुसलं तदसूत वै।
वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत् ॥ ११ ॥
असूत शापजं घोरं तच्च राज्ञे न्यवेदयन्।
विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् ॥ १२ ॥
तच्चूर्णं सागरे चापि प्राक्षिपन् पुरुषा नृप।
अघोषयश्च नगरे वचनादाहुकस्य ते ॥ १३ ॥
अद्यप्रभृति सर्वेषु वृष्ण्यन्धककुलेष्विह।
सुरासवो न कर्तव्यः सर्वैर्नगरवासिभिः ॥ १४ ॥
यश्च नो विदितं कुर्यात् पेयं कश्चिन्नरः क्वचित्।
जीवन्स शूलमारोहेत्स्वयं कृत्वा सबान्धवः ॥ १५ ॥

## द्वारकायामुत्पातदर्शनम्, यादवानां प्रभासगमनं परस्परवधश्च

(अ. २) एवं प्रयतमानानां वृष्णीनामन्धकैः सह।
कालो गृहाणि सर्वेषां परिचक्राम नित्यशः ॥ १६ ॥
तमघ्नन्त महेष्वासाः शरैः शतसहस्रशः ॥ १७ ॥
न चाऽशक्यत वेद्धुं स सर्वभूतात्ययस्तदा ॥ १८ ॥
एवं पश्यन् हृषीकेशः सम्प्राप्तं कालपर्ययम्।
त्रयोदश्याममावास्यां तां दृष्ट्वा प्राब्रवीदिदम् ॥ १९ ॥
पुत्रशोकाभिसन्तता गान्धारी हतबान्धवा।
यदनुव्याजहारार्ता तदिदं समुपागमत् ॥ २० ॥
इत्युक्त्वा वासुदेवस्तु चिकीर्षुः सत्यमेव तत्।
आज्ञापयामास तदा तीर्थयात्रामरिन्दमः ॥ २१ ॥

अघोषयन्त पुरुषास्तत्र केशवशासनात् ।
तीर्थयात्रा समुद्रे वः कार्येति पुरुषर्षभाः ॥ २२ ॥
(अ ३) काली स्त्री पाण्डुरैर्दन्तैः प्रविश्य हसती निशि ।
स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां परिधावति ॥ २३ ॥
अलङ्काराश्च छत्रं च ध्वजाश्च कवचानि च ।
ह्रियमाणान्यदृश्यन्त रक्षोभिः सुभयानकैः ॥ २४ ॥
तच्चाग्निदत्तं कृष्णस्य वज्रनाभमयोमयम् ।
दिवमाचक्रमे चक्रं वृष्णीनां पश्यतां तदा ॥ २५ ॥

युक्तं रथं दिव्यमादित्यवर्णं
हयाऽहरन्पश्यतो दारुकस्य ।
ते सागरस्योपरिष्टादवर्तन्
मनोजवाश्चतुरो वाजिमुख्याः ॥ २६ ॥
तालः सुपर्णश्च महाध्वजौ तौ
सुपूजितौ रामजनार्दनाभ्याम् ।
उच्चैर्जह्रुरप्सरसो दिवानिशं
वाचश्चोचुर्गम्यतां तीर्थयात्रा ॥ २७ ॥

ततो जिगमिषन्तस्ते वृष्ण्यन्धकमहारथाः ।
सान्तःपुरास्तदा तीर्थयात्रामैच्छन्नरर्षभाः ॥ २८ ॥
ततो भोज्यं च भक्ष्यं च पेयं चान्धकवृष्णयः ।
बहु नानाविधं चक्रुर्मद्यं मांसमनेकशः ॥ २९ ॥
ततः सैनिकवर्गाश्च निर्ययुर्नगराद्बहिः ।
यानैरश्वैर्गजैश्चैव श्रीमन्तस्तिग्मतेजसः ॥ ३० ॥
ततः प्रभासे न्यवसन् यथोद्दिष्टं यथागृहम् ।
प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा ॥ ३१ ॥
निविष्टांस्तान् निशम्याथ समुद्रान्ते स योगवित् ।
जगामामन्त्र्य तान् वीरानुद्धवोऽर्थविशारदः ॥ ३२ ॥

तं प्रस्थितं महात्मानमभिवाद्य कृताञ्जलिम् ।
जानन् विनाशं वृष्णीनां नैच्छद्वारयितुं हरिः ॥ ३३ ॥
ततः कालपरीतास्ते वृष्ण्यन्धकमहारथाः ।
अपश्यन्नुद्धवं यान्तं तेजसाऽऽवृत्य रोदसी ॥ ३४ ॥
ब्राह्मणार्थेषु यत्सिद्धमन्नं तेषां महात्मनाम् ।
तद्वानरेभ्यः प्रददुः सुरागन्धसमन्वितम् ॥ ३५ ॥
ततस्तूर्यशताकीर्णं नटनर्तकसङ्कुलम् ।
अवर्तत महापानं प्रभासे तिग्मतेजसाम् ॥ ३६ ॥
ततः परिषदो मध्ये युयुधानो मदोत्कटः ।
अब्रवीत् कृतवर्माणमवहास्यावमन्य च ॥ ३७ ॥
कः क्षत्रियो हन्यमानः सुप्तान् हन्यान्मृतानिव ।
तन्न मृष्यन्ति हार्दिक्य यादवा यत्त्वया कृतम् ॥ ३८ ॥
इत्युक्ते युयुधानेन पूजयामास तद्वचः ।
प्रद्युम्नो रथिनां श्रेष्ठो हार्दिक्यमवमन्य च ॥ ३९ ॥
ततः परमसङ्क्रुद्धः कृतवर्मा तमब्रवीत् ।
निर्दिशन्निव सावज्ञं तदा सव्येन पाणिना ॥ ४० ॥
भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायगतस्त्वया ।
वधेन सुनृशंसेन कथं वीरेण पातितः ॥ ४१ ॥
इति तस्य वचः श्रुत्वा केशवस्य समीपत ।
अभिद्रुत्य शिरः क्रुद्धश्चिच्छेद कृतवर्मणः ॥ ४२ ॥
एकीभूतास्ततः सर्वे कालपर्यायचोदिताः ।
भोजान्धका महाराज शैनेयं पर्यवारयन् ॥ ४३ ॥
हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः ।
तदनन्तरमागच्छन्मोक्षयिष्यन् शिनेः सुतम् ॥ ४४ ॥
स भोजैः सह संयुक्त सात्यकिश्चान्धकैः सह ॥ ४५ ॥
व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ ।
बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः ॥ ४६ ॥

हतं दृष्ट्वा च शैनेयं पुत्रं च यदुनन्दनः ।
एरकाणां ततो मुष्टिं कोपाज्जग्राह केशवः ॥ ४७ ॥

तदभून्मुसलं घोरं वज्रकल्पमयोमयम् ।
जघान कृष्णस्तांस्तेन ये ये प्रमुखतोऽभवन् ॥ ४८ ॥

ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा ।
जघ्नुरन्योन्यमाक्रन्दे मुसलैः कालचोदिताः ॥ ४९ ॥

यस्तेषामेरकां कश्चिज्जग्राह कुपितो नृप ।
वज्रभूतेव सा राजन्नदृश्यत तदा विभो ॥ ५० ॥

तृणं च मुसलीभूतमपि तत्र व्यदृश्यत ।
ब्रह्मदण्डकृतं सर्वमिति तद्विद्धि पार्थिव ॥ ५१ ॥

साम्बं च निहतं दृष्ट्वा चारुदेष्णं च माधवः ।
गदं वीक्ष्य शयानं च भृशं कोपसमन्वितः ।
स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ॥ ५२ ॥

## बलरामकृष्णनिर्याणम्

(अ. ४) ततो ययुर्दारुकः केशवश्च
बभ्रुश्च रामस्य पदं पतन्तः ।
अथापश्यन् राममनन्तवीर्यं
वृक्षे स्थितं चिन्तयानं विविक्ते ॥ ५३ ॥

ततः समासाद्य महानुभावं
कृष्णस्तदा दारुकमन्वशासत् ।
गत्वा कुरून् सर्वमिमं महान्तं
पार्थाय शंसस्व वधं यदूनाम् ॥ ५४ ॥

ततोऽर्जुनः क्षिप्रमिहोपयातु
श्रुत्वा मृतान् यादवान् ब्रह्मशापात् ।
इत्येवमुक्तः स ययौ रथेन
कुरूंस्तदा दारुको नष्टचेताः ॥ ५५ ॥

ततो गते दारुके केशवोऽथ
दृष्ट्वाऽन्तिके बभ्रुमुवाच वाक्यम्।
स्त्रियो भवान् रक्षितुं यातु शीघ्रं
नैता हिंस्युर्दस्यवो वित्तलोभात् ॥ ५६ ॥

तं विश्रान्तं सन्निधौ केशवस्य
दुरन्तमेकं सहसैव बभ्रुम्।
ब्रह्मानुशप्तमवधीन्महद्वै
कूटे युक्तं मुसलं लुब्धकस्य ॥ ५७ ॥

ततो दृष्ट्वा निहतं बभ्रुमाह
कृष्णोऽग्रजं भ्रातरमुग्रतेजाः।
इहैव त्वं मां प्रतीक्षस्व राम
यावत् स्त्रियो ज्ञातिवशाः करोमि ॥ ५८ ॥

ततः पुरीं द्वारवतीं प्रविश्य
जनार्दनः पितरं प्राह वाक्यम्।
स्त्रियो भवान् रक्षतु नः समग्रा
धनञ्जयस्यागमनं प्रतीक्षन् ॥ ५९ ॥

रामो वनान्ते प्रतिपालयन्मा-
मास्तेऽद्याहं तेन समागमिष्ये।
दृष्टं मयेदं निधनं यदूनां
राज्ञां च पूर्वं कुरुपुङ्गवानाम् ॥ ६० ॥

नाहं विना यदुभिर्यादवानां
पुरीमिमामशकं द्रष्टुमद्य।
तपश्चरिष्यामि निबोध तन्मे
रामेण सार्धं वनमभ्युपेत्य ॥ ६१ ॥

इतीदमुक्त्वा शिरसा च पादौ
संस्पृश्य कृष्णस्त्वरितो जगाम।

ततो महान्निनदः प्रादुरासी-
त्सस्त्रीकुमारस्य पुरस्य तस्य ॥ ६२ ॥

अथाब्रवीत्केशवः सन्निवर्त्य
शब्दं श्रुत्वा योषितां क्रोशतीनाम् ।
पुरीमिमामेष्यति सव्यसाची
स वो दुःखान्मोचयिता नराग्र्यः ॥ ६३ ॥

ततो गत्वा केशवस्तं ददर्श
रामं वने स्थितमेकं विविक्ते ।
अथापश्यद्योगयुक्तस्य तस्य
नागं मुखान्निश्चरन्तं महान्तम् ॥ ६४ ॥

श्वेतं ययौ स ततः प्रेक्ष्यमाणो
महार्णवो येन महानुभाव ॥ ६५ ॥

ततो गते भ्रातरि वासुदेवो
जानन् सर्वा गतयो दिव्यदृष्टिः ।
वने शून्ये विचरंश्चिन्तयानो
भूमौ चाथ संविवेशाग्र्यतेजाः ॥ ६६ ॥

मेने ततः सङ्क्रमणस्य कालं
ततश्चकारेन्द्रियसन्निरोधम् ।
स सन्निरुद्धेन्द्रियवाङ्मनास्तु
शिश्ये महायोगमुपेत्य कृष्णः ॥ ६७ ॥

जराऽथ तं देशमुपाजगाम
लुब्धस्तदानीं मृगलिप्सुरुग्रः ।
स केशवं योगयुक्तं शयानं
मृगासक्तो लुब्धकः सायकेन ।
जराऽविध्यत्पादतले त्वरावां-
स्तं चाभितस्तज्जिघृक्षुर्जगाम ॥ ६८ ॥

अथापश्यत्पुरुषं योगयुक्तं
पीताम्बरं लुब्धकोऽनेकबाहुम्।
मत्वाऽऽत्मानं त्वपराद्धं स तस्य
पादौ जरा जगृहे शङ्कितात्मा ॥ ६९ ॥

आश्वासयंस्तं महात्मा तदानीं
गच्छन्नूर्ध्वं रोदसी व्याप्य लक्ष्म्या ॥ ७० ॥

दिवं प्राप्तं वासवोऽथाश्विनौ च
रुद्रादित्या वसवश्चाथ विश्वे।
प्रत्युद्ययुर्मुनयश्चापि सिद्धा
गन्धर्वमुख्याश्च सहाप्सरोभिः ॥ ७१ ॥

ततो राजन् भगवानुग्रतेजा
नारायणः प्रभवश्चाव्ययश्च।
योगाचार्यो रोदसी व्याप्य लक्ष्म्या
स्थानं प्राप स्वं महात्माऽप्रमेयम् ॥ ७२ ॥

## अर्जुनस्य द्वारकागमनम्

(अ. ५) दारुकोऽपि कुरून् गत्वा दृष्ट्वा पार्थान् महारथान्।
आचष्ट मौसले वृष्णीनन्योन्येनोपसंहृतान् ॥ ७३ ॥

श्रुत्वा विनष्टान्वार्ष्णेयान् सभोजान्धककौकुरान्।
पाण्डवाः शोकसन्तप्ता वित्रस्तमनसोऽभवन् ॥ ७४ ॥

ततोऽर्जुनस्तानामन्त्र्य केशवस्य प्रियः सखा।
प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत् ॥ ७५ ॥

स वृष्णिनिलयं गत्वा दारुकेण सह प्रभो।
ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियम् ॥ ७६ ॥

याः स्म ता लोकनाथेन नाथवन्त्यः पुराऽभवन्।
तास्त्वनाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः ॥ ७७ ॥

षोडश स्त्रीसहस्राणि वासुदेवपरिग्रहः।
तासामासीन्महान्नादो दृष्ट्वैवाऽर्जुनमागतम् ॥ ७८ ॥

तां दृष्ट्वा द्वारकां पार्थस्ताश्च कृष्णस्य योषित ।
सस्वनं बाष्पमुत्सृज्य निपपात महीतले ॥ ७९ ॥

सात्राजिती ततः सत्या रुक्मिणी च विशां पते।
अभिपत्य प्ररुरुदु परिवार्य धनञ्जयम् ॥ ८० ॥

ततस्तं काञ्चने पीठे समुत्थाप्योपवेश्य च।
अब्रुवन्त्यो महात्मानं परिवार्योपतस्थिरे ॥ ८१ ॥

ततः संस्तूय गोविन्दं कथयित्वा च पाण्डवः।
आश्वास्य ताः स्त्रियश्चापि मातुलं द्रष्टुमभ्यगात् ॥ ८२ ॥

## अर्जुनवसुदेवसंवादः, वसुदेवनिधनम्

(अ. ६) तं शयानं महात्मानं वीरमानकदुन्दुभिम्।
पुत्रशोकेन सन्तप्तं ददर्श कुरुपुङ्गवः ॥ ८३ ॥

तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः।
आर्तस्यार्ततरः पार्थः पादौ जग्राह भारत ॥ ८४ ॥

समालिङ्ग्यार्जुनं वृद्धः स भुजाभ्यां महाभुज ।
रुदन्पुत्रान्स्मरन्सर्वान् विललाप सुविह्वलः ॥ ८५ ॥

वसु०- यैर्जिता भूमिपालाश्च दैत्याश्च शतशोऽर्जुन।
तान् दृष्ट्वा नेह पश्यामि जीवाम्यर्जुन दुर्मरः ॥ ८६ ॥

केशिनं यस्तु कंसं च विक्रम्य जगतः प्रभुः।
विदेहावकरोत्पार्थ चैद्यं च बलगर्वितम्।
सोऽभ्युपेक्षितवानेतमनयान्मधुसूदनः ॥ ८७ ॥

ततः पुत्रांश्च पौत्रांश्च भ्रातृनथ सखींस्तथा।
शयानान्निहतान् दृष्ट्वा ततो मामब्रवीदिदम् ॥ ८८ ॥

आगमिष्यति बीभत्सुरिमां द्वारवतीं पुरीम् ॥ ८९ ॥

स स्त्रीषु प्राप्तकालासु पाण्डवो बालकेषु च ।
प्रतिपत्स्यति बीभत्सुर्भवतश्चौर्ध्वदेहिकम् ॥ ९० ॥

इमां च नगरीं सद्यः प्रतियाते धनञ्जये ।
प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति ॥ ९१ ॥

अहं देशे तु कस्मिंश्चित्पुण्ये नियममास्थितः ।
कालं कर्ता सद्य एव रामेण सह धीमता ॥ ९२ ॥

एवमुक्त्वा हृषीकेशो मामचिन्त्यपराक्रमः ।
हित्वा मां बालकैः सार्धं दिशं कामप्यगात्प्रभुः ॥ ९३ ॥

सोऽहं तौ च महात्मानौ चिन्तयन् भ्रातरौ तव ।
घोरं ज्ञातिवधं चैव न भुञ्जे शोककर्शितः ॥ ९४ ॥

( अ. ७ ) एवमुक्तः स बीभत्सुर्मातुलेन परन्तप ।
दुर्मना दीनवदनो वसुदेवमुवाच ह ॥ ९५ ॥

नाहं वृष्णिप्रवीरेण बन्धुभिश्चैव मातुल ।
विहीनां पृथिवीं द्रष्टुं शक्ष्यामीह कथञ्चन ॥ ९६ ॥

सर्वथा वृष्णिदारांस्तु बालं वृद्धं तथैव च ।
नयिष्ये परिगृह्याहमिन्द्रप्रस्थमरिन्दम ॥ ९७ ॥

तां रात्रिमवसत्पार्थः केशवस्य निवेशने ।
महता शोकमोहेन सहसाऽभिपरिप्लुतः ॥ ९८ ॥

श्वोभूतेऽथ ततः शौरिर्वसुदेवः प्रतापवान् ।
युक्त्वाऽऽत्मानं महातेजा जगाम गतिमुत्तमाम् ॥ ९९ ॥

ततः शब्दो महानासीद्वसुदेवनिवेशने ।
दारुणः क्रोशतीनां च रुदतीनां च योषिताम् ॥ १०० ॥

तं देवकी च भद्रा च रोहिणी मदिरा तथा ।
अन्वारोहन्त च तदा भर्तारं योषितां वराः ॥ १०१ ॥

तं वै चतसृभिः स्त्रीभिरन्वितं पाण्डुनन्दनः।
अदाहयच्चन्दनैश्च गन्धैरुच्चावचैरपि ॥ १०२ ॥

ततो वज्रप्रधानास्ते वृष्ण्यन्धककुमारकाः।
सर्वे चैवोदकं चक्रुः स्त्रियश्चैव महात्मनः ॥ १०३ ॥

अलुप्तधर्मस्तं धर्मं कारयित्वा स फाल्गुनः।
जगाम वृष्णयो यत्र विनष्टा भरतर्षभ ॥ १०४ ॥

स तान् दृष्ट्वा निपतितान् कदने भृशदुःखितः।
यथा प्रधानतश्चैव चक्रे सर्वास्तथा क्रियाः ॥ १०५ ॥

ततः शरीरे रामस्य वासुदेवस्य चोभयोः।
अन्विष्य दाहयामास पुरुषैराप्तकारिभिः ॥ १०६ ॥

स तेषां विधिवत्कृत्वा प्रेतकार्याणि पाण्डवः।
सप्तमे दिवसे प्रायाद्रथमारुह्य सत्वरः ॥ १०७ ॥

अश्वयुक्तै रथैश्चापि गोखरोष्ट्रयुतैरपि।
स्त्रियस्ता वृष्णिवीराणां रुदत्यः शोककर्शिताः।
अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनञ्जयम् ॥ १०८ ॥

भृत्याश्चान्धकवृष्णीनां सादिनो रथिनश्च ये।
वीरहीनं वृद्धबालं पौरजानपदास्तथा।
ययुस्ते परिवार्याथ कलत्रं पार्थशासनात् ॥ १०९ ॥

निर्याते तु जने तस्मिन् सागरो मकरालयः।
द्वारकां रत्नसंपूर्णां जलेनाप्लावयत्तदा ॥ ११० ॥

तदद्भुतमभिप्रेक्ष्य द्वारकावासिनो जनाः।
तूर्णात्तूर्णतरं जग्मुरहो दैवमिति ब्रुवन् ॥ १११ ॥

काननेषु च रम्येषु पर्वतेषु नदीषु च।
निवसन्नानयामास वृष्णिदारान् धनञ्जयः ॥ ११२ ॥

## दस्युकृतं यादवस्त्रीहरणम्, इन्द्रप्रस्थे वज्राय राज्यदानम्

स पञ्चनदमासाद्य धीमानतिसमृद्धिमत्।
देशे गोपशुधान्याढये निवासमकरोत्प्रभुः॥ ११३॥

ततो लोभः समभवद्दस्यूनां निहतेश्वराः।
दृष्ट्वा स्त्रियो नीयमाना पार्थेनैकेन भारत॥ ११४॥

ततो यष्टिप्रहरणा दस्यवस्ते सहस्रश॰।
अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः॥ ११५॥

ततोऽर्जुनो धनुर्दिव्यं गाण्डीवमजरं महत्।
आरोपयितुमारेभे यत्नादिव कथञ्चन॥ ११६॥

चकार सज्जं कृच्छ्रेण संभ्रमे तुमुले सति।
चिन्तयामास शस्त्राणि न च सस्मार तान्यपि॥ ११७॥

मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः।
समन्ततोऽवकृष्यन्त कामाच्चान्याः प्रवव्रजु॥ ११८॥

प्रेक्षतस्त्वेव पार्थस्य वृष्ण्यन्धकवरस्त्रियः।
जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय॥ ११९॥

तत शेषं समादाय कलत्रस्य महामतिः।
हृतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत्॥ १२०॥

यौयुधानि सरस्वत्यां पुत्रं सात्यकिन प्रियम्।
न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम्॥ १२१॥

इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा।
वज्रेणाक्रूरदारास्तु वार्यमाणाः प्रवव्रजुः॥ १२२॥

रुक्मिणी त्वथ गान्धारी शैब्या हैमवतीत्यपि।
देवी जाम्बवती चैव विविशुर्जातवेदसम्॥ १२३॥

सत्यभामा तथैवान्या देव्य॰ कृष्णस्य संमताः।
वनं प्रविविशू राजंस्तापस्ये कृतनिश्चयाः॥ १२४॥

द्वारकावासिनो ये तु पुरुषाः पार्थमभ्ययु. ।
यथार्ह संविभज्यैनान् वज्रे पर्यददज्जय. ॥ १२५ ॥

स तत्कृत्वा प्राप्तकालं बाष्पेणापिहितोऽर्जुनः ।
कृष्णद्वैपायनं व्यासं ददर्शासीनमाश्रमे ॥ १२६ ॥

## व्यासार्जुनसंवादः, अर्जुनस्य हस्तिनापुरागमनम्

(अ. ८) स तमासाद्य धर्मज्ञमुपतस्थे महाव्रतम् ।
अर्जुनोऽस्मीति नामास्मै निवेद्याभ्यवदत्तत ॥ १२७ ॥

तमप्रतीतमनसं नि.श्वसन्तं पुन. पुन ।
निर्विण्णमनसं दृष्ट्वा पार्थं व्यासोऽब्रवीदिदम् ॥ १२८ ॥

नखकेशदशाकुम्भवारिणा किं समुक्षितः ।
आवीरजानुगमनं ब्राह्मणो वा हतस्त्वया ।
युद्धे पराजितो वाऽसि गतश्रीरिव लक्ष्यसे ॥ १२९ ॥

न त्वां प्रभिन्नं जानामि किमिदं भरतर्षभ ।
श्रोतव्यं चेन्मया पार्थ क्षिप्रमाख्यातुमर्हसि ॥ १३० ॥

अर्जुन०— यः स मेघवपु. श्रीमान् बृहत्पङ्कजलोचन. ।
स कृष्णः सह रामेण त्यक्त्वा देहं दिवं गतः ॥ १३१ ॥

मौसले वृष्णिवीराणां विनाशो ब्रह्मशापज. ।
बभूव वीरान्तकरः प्रभासे लोमहर्षणः ॥ १३२ ॥

पुन. पुनर्न मृष्यामि विनाशममितौजसाम् ।
चिन्तयानो यदूनां च कृष्णस्य च यशस्विन ॥ १३३ ॥

शोषणं सागरस्येव पर्वतस्येव चालनम् ।
नभसः पतनं चैव शैत्यमग्नेस्तथैव च ।
अश्रद्धेयमहं मन्ये विनाशं शार्ङ्गधन्वनः ॥ १३४ ॥

न चेह स्थातुमिच्छामि लोके कृष्णविनाकृतः ॥ १३५ ॥
इतः कष्टतरं चान्यच्छृणु तद्वै तपोधन ।
मनो मे दीर्यते येन चिन्तयानस्य वै मुहुः ॥ १३६ ॥
पश्यतो वृष्णिदाराश्च मम ब्रह्मन् सहस्रशः ।
आभीरैरनुसृत्याजौ हृताः पञ्चनदालयैः ॥ १३७ ॥
यश्च याति पुरस्तान्मे रथस्य सुमहाद्युतिः ।
प्रदहन् रिपुसैन्यानि न पश्याम्यहमच्युतम् ॥ १३८ ॥
विना जनार्दनं वीरं नाहं जीवितुमुत्सहे ।
श्रुत्वैव हि गतं विष्णुं ममापि मुमुहुर्दिशः ॥ १३९ ॥
प्रनष्टज्ञातिवीर्यस्य शून्यस्य परिधावतः ।
उपदेष्टुं मम श्रेयो भवानर्हति सत्तम ॥ १४० ॥
व्यास० - ब्रह्मशापविनिर्दग्धा वृष्ण्यन्धकमहारथाः ।
विनष्टाः कुरुशार्दूल न तान् शोचितुमर्हसि ॥ १४१ ॥
भवितव्यं तथा तच्च दिष्टमेतन्महात्मनाम् ॥ १४२ ॥
रथस्य पुरतो याति यः स चक्रगदाधरः ।
तव स्नेहात्पुराणर्षिर्वासुदेवश्चतुर्भुजः ॥ १४३ ॥
कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः ।
मोक्षयित्वा तनुं प्राप्तः कृष्णः स्वस्थानमुत्तमम् ॥ १४४ ॥
एवं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत ।
भवन्ति भवकालेषु विपद्यन्ते विपर्यये ॥ १४५ ॥
कालमूलमिदं सर्वं जगद्बीजं धनञ्जय ।
काल एव समादत्ते पुनरेव यदृच्छया ॥ १४६ ॥
स एव बलवान् भूत्वा पुनर्भवति दुर्बलः ।
स एवेशश्च भूत्वेह परैराज्ञाप्यते पुनः ॥ १४७ ॥

कृतकृत्यानि चास्त्राणि गतान्यद्य यथागतम्।
पुनरेष्यन्ति ते हस्ते यदा कालो भविष्यति ॥ १४८ ॥

कालो गन्तुं गतिं मुख्यां भवतामपि भारत।
एतच्छ्रेयो हि वो मन्ये परमं भरतर्षभ ॥ १४९ ॥

एतद्वचनमाज्ञाय व्यासस्यामिततेजसः।
अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयम् ॥ १५० ॥

प्रविश्य च पुरीं वीरः समासाद्य युधिष्ठिरम्।
आचष्ट तद्यथावृत्तं वृष्ण्यन्धककुलं प्रति ॥ १५१ ॥

शान्तिपर्वतः श्लोकाः ॥ ४८५७ ॥

आदिपर्वतः श्लोकाः ॥ १५६५३ ॥

॥ इति श्रीमहाभारतसारे मौसलपर्व समाप्तम् ॥

---

# महाभारतसारः

## १७. महाप्रस्थानिकपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

### युधिष्ठिरादीनां महाप्रस्थानम्, गाण्डीवस्य जले प्रक्षेपः

(अ. १) श्रुत्वैवं कौरवो राजा वृष्णीनां कदनं महत् ।
वैश०- प्रस्थाने मतिमाधाय वाक्यमर्जुनमब्रवीत् ॥ १ ॥

कालः पचति भूतानि सर्वाण्येव महामते ।
कालपाशमहं मन्ये त्वमपि द्रष्टुमर्हसि ॥ २ ॥

इत्युक्तः स तु कौन्तेयः कालः काल इति ब्रुवन् ।
अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य धीमतः ॥ ३ ॥

अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा ।
अन्वपद्यन्त तद्वाक्यं यदुक्तं सव्यसाचिना ॥ ४ ॥

ततो युयुत्सुमानाय्य प्रव्रजन् धर्मकाम्यया ।
राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः ॥ ५ ॥

अभिषिच्य स्वराज्ये च राजानं च परीक्षितम् ।
दुःखार्तश्चाब्रवीद्राजा सुभद्रां पाण्डवाग्रजः ॥ ६ ॥

परीक्षिद्धास्तिनपुरे शक्रप्रस्थे च यादवः ।
वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ॥ ७ ॥

इत्युक्त्वा धर्मराजः स वासुदेवस्य धीमतः ।
मातुलस्य च वृद्धस्य रामादीनां तथैव च ॥ ८ ॥

भ्रातृभिः सह धर्मात्मा कृत्वोदकमतन्द्रितः ।
श्राद्धान्युद्दिश्य सर्वेषां चकार विधिवत्तदा ॥ ९ ॥

कृपमभ्यर्च्य च गुरुमथ पौरपुरस्कृतम्।
शिष्यं परिक्षितं तस्मै ददौ भरतसत्तम. ॥ १० ॥
ततस्तु प्रकृतोः सर्वा. समानाय्य युधिष्ठिर.।
सर्वमाचष्ट राजर्षिश्चिकीर्षितमथात्मनः ॥ ११ ॥
ते श्रुत्वैव वचस्तस्य पौरजानपदा जनाः।
भृशमुद्विग्नमनसो नाभ्यनन्दन्त तद्वचः ॥ १२ ॥
नैवं कर्तव्यमिति ते तदोचुस्तं जनाधिपम्।
न च राजा तथाऽकार्षीत्कालपर्यायधर्मवित् ॥ १३ ॥
ततोऽनुमान्य धर्मात्मा पौरजानपदं जनम्।
गमनाय मतिं चक्रे भ्रातरश्चास्य ते तदा ॥ १४ ॥
ततः स राजा कौरव्यो धर्मपुत्रो युधिष्ठिरः।
उत्सृज्याभरणान्यङ्गाज्जगृहे वल्कलान्युत ॥ १५ ॥
भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी।
तथैव जगृहुः सर्वे वल्कलानि नराधिप ॥ १६ ॥
विधिवत्कारयित्वेष्टिं नैष्ठिकीं भरतर्षभ।
समुत्सृज्याप्सु सर्वेऽग्नीन् प्रतस्थुर्नरपुङ्गवाः ॥ १७ ॥
ततः प्ररुरुदु' सर्वाः स्त्रियो दृष्ट्वा नरोत्तमान्।
प्रस्थितान् द्रौपदीषष्ठान् पुरा द्यूतजितान् यथा ॥ १८ ॥
भ्रातरः पञ्च कृष्णा च षष्ठी श्वा चैव सप्तम.।
आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात् ॥ १९ ॥
क्रमेण ते ययुर्वीरा लौहित्य सलिलार्णवम्।
अग्निं ते ददृशुस्तत्र स्थितं शैलमिवाग्रत. ॥ २० ॥
मार्गमावृत्य तिष्ठन्त साक्षात्पुरुषविग्रहम्।
ततो देव स सप्तार्चिः पाण्डवानिदमब्रवीत् ॥ २१ ॥
अहमग्नि कुरुश्रेष्ठा मया दग्ध च खाण्डवम्।
अर्जुनस्य प्रभावेण तथा नारायणस्य च ॥ २२ ॥

अयं वः फाल्गुनो भ्राता गाण्डीवं परमायुधम्।
परित्यज्य वने यातु नानेनार्थोऽस्ति कश्चन ॥ २३ ॥

वरुणादाहृतं पूर्वं मयैतत्पार्थकारणात्।
गाण्डीवं धनुषां श्रेष्ठं वरुणायैव दीयताम् ॥ २४ ॥

ततस्ते भ्रातरः सर्वे धनञ्जयमचोदयन्।
स जले प्राक्षिपच्चैतत्तथाऽक्षय्ये महेषुधी ॥ २५ ॥

ततोऽग्निर्भरतश्रेष्ठ तत्रैवान्तरधीयत।
ययुश्च पाण्डवा वीरास्ततस्ते दक्षिणामुखाः ॥ २६ ॥

ततस्ते तूत्तरेणैव तीरेण लवणाम्भसः।
जग्मुर्भरतशार्दूल दिशं दक्षिणपश्चिमाम् ॥ २७ ॥

ततः पुनः समावृत्ताः पश्चिमां दिशमेव ते।
ददृशुर्द्वारकां चापि सागरेण परिप्लुताम् ॥ २८ ॥

उदीचीं पुनरावृत्त्य ययुर्भरतसत्तमाः।
प्रादक्षिण्यं चिकीर्षन्तः पृथिव्या योगधर्मिणः ॥ २९ ॥

## द्रौपद्यादीनां देहपातः

(अ २) ततस्ते नियतात्मान उदीचीं दिशमास्थिताः।
ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिम् ॥ ३० ॥

तं चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम्।
अवैक्षन्त महाशैलं मेरुं शिखरिणां वरम् ॥ ३१ ॥

तेषां तु गच्छतां शीघ्रं सर्वेषां योगधर्मिणाम्।
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ॥ ३२ ॥

तां तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः।
उवाच धर्मराजानं याज्ञसेनीमवेक्ष्य ह ॥ ३३ ॥

नाधर्मश्चरितः कश्चिद्राजपुत्र्या परन्तप।
कारणं किं नु तद्ब्रूहि यत्कृष्णा पतिता भुवि ॥ ३४ ॥

युधि०– पक्षपातो महानस्या विशेषेण धनञ्जये।
तस्यैतत्फलमद्यैषा भुङ्क्ते पुरुषसत्तम ॥ ३५ ॥

एवमुक्त्वाऽनवेक्ष्यैनां ययौ भरतसत्तमः।
समाधाय मनो धीमान् धर्मात्मा पुरुषर्षभः ॥ ३६ ॥

सहदेवस्ततो विद्वान्निपपात महीतले।
तं चापि पतितं दृष्ट्वा भीमो राजानमब्रवीत् ॥ ३७ ॥

योऽयमस्मासु सर्वेषु शुश्रूषुरनहङ्कृतः।
सोऽयं माद्रवतीपुत्रः कस्मान्निपतितो भुवि ॥ ३८ ॥

युधि०– आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कञ्चन।
तेन दोषेण पतितस्तस्मादेष नृपात्मजः ॥ ३९ ॥

इत्युक्त्वा तं समुत्सृज्य सहदेवं ययौ तदा।
भ्रातृभिः सह कौन्तेयः शुना चैव युधिष्ठिरः ॥ ४० ॥

कृष्णां निपतितां दृष्ट्वा सहदेवं च पाण्डवम्।
आर्तो बन्धुप्रियः शूरो नकुलो निपपात ह ॥ ४१ ॥

तस्मिन्निपतिते वीरे नकुले चारुदर्शने।
पुनरेव तदा भीमो राजानमिदमब्रवीत् ॥ ४२ ॥

योऽयमक्षतधर्मात्मा भ्राता वचनकारकः।
रूपेणाप्रतिमो लोके नकुलः पतितो भुवि ॥ ४३ ॥

इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः।
नकुलं प्रति धर्मात्मा सर्वबुद्धिमतां वरः ॥ ४४ ॥

रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम्।
अधिकश्चाहमेवैक इत्यस्य मनसि स्थितम्।
नकुलः पतितस्तस्मादागच्छ त्वं वृकोदर ॥ ४५ ॥

यस्य यद्विहितं वीर सोऽवश्यं तदुपाश्नुते ॥ ४६ ॥

तांस्तु प्रपतितान् दृष्ट्वा पाण्डवः श्वेतवाहनः।
पपात शोकसन्तप्तस्ततो नु परवीरहा ॥ ४७ ॥

तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि ।
म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत् ॥ ४८ ॥

अनृतं न स्मराम्यस्य स्वैरेष्वपि महात्मनः ।
अथ कस्य विकारोऽयं येनायं पतितो भुवि ॥ ४९ ॥

युधि०- एकाह्ना निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत् ।
न च तत्कृतवानेष शूरमानी ततोऽपतत् ॥ ५० ॥

अवमेने धनुर्ग्राहानेष सर्वांश्च फाल्गुनः ।
तथा चैतन्न तु तथा कर्तव्यं भूतिमिच्छता ॥ ५१ ॥

इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह ।
पतितश्चाब्रवीद्भीमो धर्मराजं युधिष्ठिरम् ॥ ५२ ॥

भो भो राजन्नवेक्षस्व पतितोऽहं प्रियस्तव ।
किंनिमित्तं च पतनं ब्रूहि मे यदि वेत्थ ह ॥ ५३ ॥

युधि०- अतिभुक्तं च भवता प्राणेन च विकत्थसे ।
अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ ॥ ५४ ॥

इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन् ।
श्वाऽप्येकोऽनुययौ यस्ते बहुशः कीर्तितो मया ॥ ५५ ॥

## इन्द्रयुधिष्ठिरसंवादः, युधिष्ठिरस्य स्वर्गारोहणम्

(अ. ३) ततः सन्नादयन् शक्रो दिवं भूमिं च सर्वशः ।
रथेनोपययौ पार्थमारोहेत्यब्रवीच्च तम् ॥ ५६ ॥

स्वभ्रातॄन् पतितान् दृष्ट्वा धर्मराजो युधिष्ठिरः ।
अब्रवीच्छोकसन्तप्तः सहस्राक्षमिदं वचः ॥ ५७ ॥

भ्रातरः पतिता मेऽत्र गच्छेयुस्ते मया सह ।
न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर ॥ ५८ ॥

सुकुमारी सुखार्हा च राजपुत्री पुरन्दर ।
साऽस्माभिः सह गच्छेत तद्भवाननुमन्यताम् ॥ ५९ ॥

शक्र०— भ्रातॄन् द्रक्ष्यसि स्वर्गे त्वमग्रतस्त्रिदिवं गतान्।
कृष्णया सहितान्सर्वान्मा शुचो भरतर्षभ ॥ ६० ॥
निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ।
अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ॥ ६१ ॥

युधि०— अयं श्वा भूतभव्येश भक्तो मां नित्यमेव ह।
स गच्छेत मया सार्धमानृशंस्या हि मे मतिः ॥ ६२ ॥

शक्र०— अमर्त्यत्वं मत्समत्वं च राजन्
श्रियं कृत्स्नां महतीं चैव सिद्धिम्।
संप्राप्तोऽद्य स्वर्गसुखानि च त्वं
त्यज श्वानं नात्र नृशंसमस्ति ॥ ६३ ॥

युधि०— अनार्यमार्येण सहस्रनेत्र
शक्यं कर्तुं दुष्करमेतदार्य।
मा मे श्रिया सङ्गमनं तयाऽस्तु
यस्याः कृते भक्तजनं त्यजेयम् ॥ ६४ ॥

इन्द्र०— स्वर्गे लोके श्ववतां नास्ति धिष्ण्य-
मिष्टापूर्तं क्रोधवशा हरन्ति।
ततो विचार्य क्रियतां धर्मराज
त्यज श्वानं नात्र नृशंसमस्ति ॥ ६५ ॥

युधि०— भक्तत्यागं प्राहुरत्यन्तपापं
तुल्यं लोके ब्रह्मवध्याकृतेन।
तस्मान्नाहं जातु कथञ्चनाद्य
त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्र ॥ ६६ ॥

इन्द्र०— त्यक्त्वा भ्रातॄन् दयितां चापि कृष्णां
प्राप्तो लोकः कर्मणा स्वेन वीर।
श्वानं चैनं न त्यजसे कथं नु
त्यागं कृत्स्नं चास्थितो मुह्यसेऽद्य ॥ ६७ ॥

युधि०— न विद्यते सन्धिरथापि विग्रहो
मृतैर्मर्त्यैरिति लोकेषु निष्ठा।

न ते मया जीवयितुं हि शक्या-
स्ततस्त्यागस्तेषु कृतो न जीवताम् ॥ ६८ ॥

भीतिप्रदानं शरणागतस्य
स्त्रिया वधो ब्राह्मणस्वापहारः ।
मित्रद्रोहस्तानि चत्वारि शक्र
भक्तत्यागश्चैव समो मतो मे ॥ ६९ ॥

वैश०- तद्धर्मराजस्य वचो निशम्य
धर्मस्वरूपी भगवानुवाच ।
युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं
श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः ॥ ७० ॥

धर्म०- अभिजातोऽसि राजेन्द्र पितुर्वृत्तेन मेधया ।
अनुक्रोशेन चानेन सर्वभूतेषु भारत ॥ ७१ ॥

अयं श्वा भक्त इत्येवं त्यक्तो देवरथस्त्वया ।
तस्मात्स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिपः ॥ ७२ ॥

ततो धर्मश्च शक्रश्च मरुतश्चाश्विनावपि ।
देवा देवर्षयश्चैव रथमारोप्य पाण्डवम् ।
प्रययुः स्वैर्विमानैस्ते सिद्धाः कामविहारिणः ॥ ७३ ॥

स तं रथं समास्थाय राजा कुरुकुलोद्वहः ।
ऊर्ध्वमाचक्रमे शीघ्रं तेजसाऽऽवृत्य रोदसी ॥ ७४ ॥

शान्तिपर्वतः श्लोकाः ॥ ४९३१ ॥
आदिपर्वतः श्लोकाः ॥ १५७२७ ॥

॥ इति श्रीमहाभारतसारे महाप्रस्थानिकपर्व समाप्तम् ॥

---

# महाभारतसारः

## १८. स्वर्गारोहणपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

### युधिष्ठिरस्य नरकदर्शनम्

(अ. १) स्वर्गं त्रिविष्टपं प्राप्य धर्मराजो युधिष्ठिरः ।
वैश०- दुर्योधनं श्रिया जुष्टं ददर्शासीनमासने ॥ १ ॥

ततो युधिष्ठिरो दृष्ट्वा दुर्योधनममर्षितः ।
सहसा सन्निवृत्तोऽभूच्छ्रियं दृष्ट्वा सुयोधने ॥ २ ॥

ब्रुवन्नुच्चैर्वचस्तान्वै नाहं दुर्योधनेन वै ।
सहितः कामये लोकाँल्लुब्धेनादीर्घदर्शिना ॥ ३ ॥

अस्ति देवा न मे कामः सुयोधनमुदीक्षितुम् ।
तत्राहं गन्तुमिच्छामि यत्र ते भ्रातरो मम ॥ ४ ॥

नैवमित्यब्रवीत्तं तु नारदः प्रहसन्निव ।
स्वर्गे निवासे राजेन्द्र विरुद्धं चापि नश्यति ॥ ५ ॥

समागच्छ यथान्यायं राज्ञा दुर्योधनेन वै ।
स्वर्गोऽयं नेह वैराणि भवन्ति मनुजाधिप ॥ ६ ॥

नारदेनैवमुक्तस्तु कुरुराजो युधिष्ठिरः ।
भ्रातॄनपप्रच्छ मेधावी वाक्यमेतदुवाच ह ॥ ७ ॥

(अ. २) नेह पश्यामि विबुधा राधेयममितौजसम् ।
भीमं च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम ॥ ८ ॥

अर्जुनं चेन्द्रसङ्काशं यमौ चैव यमोपमौ ।
द्रष्टुमिच्छामि तां चाहं पाञ्चालीं धर्मचारिणीम् ॥ ९ ॥

न चेह स्थातुमिच्छामि सत्यमेवं ब्रवीमि वः ॥ १० ॥

किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः ।
यत्र ते मम स स्वर्गो नायं स्वर्गो मतो मम ॥ ११ ॥

देवा०– यदि वै तत्र ते श्रद्धा गम्यतां पुत्र मा चिरम् ।
प्रिये हि तव वर्तामो देवराजस्य शासनात् ॥ १२ ॥

इत्युक्त्वा त ततो देवा देवदूतमुपादिशन् ।
युधिष्ठिरस्य सुहृदो दर्शयेति परन्तप ॥ १३ ॥

ततः कुन्तीसुतो राजा देवदूतश्च जग्मतुः ।
सहितौ राजशार्दूल यत्र ते पुरुषर्षभाः ॥ १४ ॥

अग्रतो देवदूतश्च ययौ राजा च पृष्ठत ।
पन्थानमशुभं दुर्ग सेवितं पापकर्मभिः ॥ १५ ॥

तमसा संवृतं घोरं केशशैवलशाद्वलम् ।
युक्तं पापकृतां गन्धैर्मांसशोणितकर्दमम् ॥ १६ ॥

स तत्कुणपदुर्गन्धमशिवं लोमहर्षणम् ।
जगाम राजा धर्मात्मा मध्ये बहु विचिन्तयन् ॥ १७ ॥

ददर्शोष्णोदकैः पूर्णां नदीं चापि सुदुर्गमाम् ।
असिपत्रवनं चैव निशितक्षुरसंवृतम् ॥ १८ ॥

करम्भवालुकास्तप्ता आयसीश्च शिलाः पृथक् ।
लोहकुम्भीश्च तैलस्य क्वाथ्यमानाः समन्ततः ॥ १९ ॥

कूटशाल्मलिकं चापि दुःस्पर्शं तीक्ष्णकण्टकम् ।
ददर्श चापि कौन्तेयो यातनाः पापकर्मिणाम् ॥ २० ॥

स तं दुर्गन्धमालक्ष्य देवदूतमुवाच ह।
कियद्ध्वानमस्माभिर्गन्तव्यमिममीदृशम् ॥ २१ ॥

क्व च ते भ्रातरो मह्यं तन्ममाख्यातुमर्हसि।
देशोऽयं कश्च देवानामेतदिच्छामि वेदितुम् ॥ २२ ॥

स सन्निववृते श्रुत्वा धर्मराजस्य भाषितम्।
देवदूतोऽब्रवीच्चैनमेतावद्गमनं तव ॥ २३ ॥

निवर्तितव्यो हि मया तथाऽस्म्युक्तो दिवौकसैः।
यदि श्रान्तोऽसि राजेन्द्र त्वमथागन्तुमर्हसि ॥ २४ ॥

युधिष्ठिरस्तु निर्विण्णस्तेन गन्धेन मूर्च्छितः।
निवर्तने धृतमनाः पर्यावर्तत भारत ॥ २५ ॥

स सन्निवृत्तो धर्मात्मा दुःखशोकसमाहतः।
शुश्राव तत्र वदतां दीना वाचः समन्ततः ॥ २६ ॥

भो भो धर्मज राजर्षे पुण्याभिजन पाण्डव।
अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम् ॥ २७ ॥

आयाति त्वयि दुर्धर्षे वाति पुण्यः समीरणः।
तव गन्धानुगस्तात येनास्मान् सुखमागमत् ॥ २८ ॥

सन्तिष्ठस्व महाबाहो मुहूर्तमपि भारत।
त्वयि तिष्ठति कौरव्य यातनास्मान्न बाधते ॥ २९ ॥

तेषां तु वचनं श्रुत्वा दयावान् दीनभाषिणाम्।
अहो कृच्छ्रमिति प्राह तस्थौ स च युधिष्ठिरः ॥ ३० ॥

अबुध्यमानस्ता वाचो धर्मपुत्रो युधिष्ठिरः।
उवाच के भवन्तो वै किमर्थमिह तिष्ठथ ॥ ३१ ॥

इत्युक्तास्ते ततः सर्वे समन्तादवभाषिरे।
कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो ॥ ३२ ॥

नकुलः सहदेवोऽहं धृष्टद्युम्नोऽहमित्युत ।
द्रौपदी द्रौपदेयाश्च इत्येवं ते विचुक्रुशुः ॥ ३३ ॥

ता वाच स तदा श्रुत्वा तद्देशसदृशीर्नृप ।
ततो विममृशे राजा किन्त्विदं दैवकारितम् ॥ ३४ ॥

किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः ।
तथा श्रिया युतः पापैः सह सर्वैः पदानुगैः ।
महेन्द्र इव लक्ष्मीवानास्ते परमपूजितः ॥ ३५ ॥

कस्येदानीं विकारोऽयं य इमे नरकं गताः ।
सर्वधर्मविदः शूराः सत्यागमपरायणाः ।
क्षत्रधर्मरताः सन्तो यज्वानो भूरिदक्षिणाः ॥ ३६ ॥

किं नु सुप्तोऽस्मि जागर्मि चेतयामि न चेतये ।
अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ॥ ३७ ॥

एव बहुविधं राजा विममर्श युधिष्ठिरः ।
दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः ॥ ३८ ॥

क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृपः ।
देवांश्च गर्हयामास धर्मं चैव युधिष्ठिरः ॥ ३९ ॥

स तीव्रगन्धसन्तप्तो देवदूतमुवाच ह ।
गम्यतां तत्र येषा त्वं दूतस्तेषामुपान्तिकम् ॥ ४० ॥

न ह्यहं तत्र यास्यामि स्थितोऽस्मीति निवेद्यताम् ।
मत्संश्रयादिमे दूताः सुखिनो भ्रातरो हि मे ॥ ४१ ॥

इत्युक्तः स तदा दूतः पाण्डुपुत्रेण धीमतः ।
जगाम तत्र यत्रास्ते देवराजः शतक्रतुः ॥ ४२ ॥

निवेदयामास च तद्धर्मराजचिकीर्षितम् ।
यथोक्तं धर्मपुत्रेण सर्वमेव जनाधिप ॥ ४३ ॥

## युधिष्ठिरस्य तनुत्यागः स्वर्गवासश्च

(अ. ३) स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिरे।
आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः ॥ ४४ ॥

स च विग्रहवान् धर्मो राजानं प्रसमीक्षितुम्।
तत्राजगाम यत्रासौ कुरुराजो युधिष्ठिरः ॥ ४५ ॥

तेषु भासुरदेहेषु पुण्याभिजनकर्मसु।
समागतेषु देवेषु व्यगमत्तत्तमो नृप ॥ ४६ ॥

नादृश्यन्त च तास्तत्र यातनाः पापकर्मिणाम्।
नदी वैतरणी चैव कूटशाल्मलिना सह ॥ ४७ ॥

ततो वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः।
ववौ देवसमीपस्थः शीतलोऽतीव भारत ॥ ४८ ॥

ततः शक्रः सुरपतिः श्रिया परमया युतः।
युधिष्ठिरमुवाचेदं सान्त्वपूर्वमिदं वचः ॥ ४९ ॥

युधिष्ठिर महाबाहो लोकाश्चाप्यक्षयास्तव।
न च मन्युस्त्वया कार्यः शृणु चेदं वचो मम ॥ ५० ॥

अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः।
शुभानामशुभानां च द्वौ राशी पुरुषर्षभ ॥ ५१ ॥

यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेव सः।
पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः ॥ ५२ ॥

भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते।
तेन त्वमेवं गमितो मया श्रेयोऽर्थिना नृप ॥ ५३ ॥

व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति।
व्याजेनैव ततो राजन् दर्शितो नरकस्तव ॥ ५४ ॥

यथैव त्वं तथा भीमस्तथा पार्थो यमौ तथा।
द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः ॥ ५५ ॥

आगच्छ नरशार्दूल मुक्तास्ते चैव कल्मषात् ॥ ५६ ॥

स्वपक्षाश्चैव ये तुभ्यं पार्थिवा निहता रणे।
सर्वे स्वर्गमनुप्राप्तास्तान्पश्य भरतर्षभ ॥ ५७ ॥
एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी।
आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि ॥ ५८ ॥
अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति।
गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ ५९ ॥
एवं ब्रुवति देवेन्द्रे कौरवेन्द्रं युधिष्ठिरम्।
धर्मो विग्रहवान् साक्षादुवाच सुतमात्मनः ॥ ६० ॥
भो भो राजन् महाप्राज्ञ प्रीतोऽस्मि तव पुत्रक।
मद्भक्त्या सत्यवाक्यैश्च क्षमया च दमेन च ॥ ६१ ॥
एषा तृतीया जिज्ञासा तव राजन् कृता मया।
न शक्यसे चालयितुं स्वभावात्पार्थ हेतुतः ॥ ६२ ॥
पूर्वं परीक्षितो हि त्वं प्रश्नाद्द्वैतवने मया।
अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ॥ ६३ ॥
सोदर्येषु विनष्टेषु द्रौपद्या तत्र भारत।
श्वरूपधारिणा तत्र पुनस्त्वं मे परीक्षितः ॥ ६४ ॥
इदं तृतीयं भ्रातृणामर्थे यत्स्थातुमिच्छसि।
विशुद्धोऽसि महाभाग सुखी विगतकल्मषः ॥ ६५ ॥
न च ते भ्रातरः पार्थ नरकार्हा विशां पते।
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ ६६ ॥
एवमुक्तः स राजर्षिस्तव पूर्वपितामहः।
जगाम सह धर्मेण सर्वैश्च त्रिदिवालयैः ॥ ६७ ॥
गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुताम्।
अवगाह्य ततो राजा तनुं तत्याज मानुषीम् ॥ ६८ ॥
ततो दिव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः।
निर्वैरो गतसन्तापो जले तस्मिन् समाप्लुतः ॥ ६९ ॥

ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः।
धर्मेण सहितो धीमांस्तूयमानो महर्षिभिः ॥ ७० ॥

यत्र ते पुरुषव्याघ्राः शूरा विगतमन्यवः।
पाण्डवा धार्तराष्ट्राश्च स्वानि स्थानानि भेजिरे ॥ ७१ ॥

(अ. ५) एतत्ते सर्वमाख्यातं विस्तरेण महाद्युते।
कुरूणां चरितं कृत्स्नं पाण्डवानां च भारत ॥ ७२ ॥

## देवलोकादिषु महाभारतस्य श्लोकसङ्ख्या कथावाचकाश्च

सौति०– एतच्छ्रुत्वा द्विजश्रेष्ठाः स राजा जनमेजयः।
विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेष्वथ ॥ ७३ ॥

ततो द्विजातीन् सर्वास्तान् दक्षिणाभिरतोषयत्।
पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतम् ॥ ७४ ॥

विसर्जयित्वा विप्रास्तान् राजापि जनमेजयः।
ततस्तक्षशिलायाः स पुनरायाद्गजाह्वयम् ॥ ७५ ॥

एतत्ते सर्वमाख्यातं वैशम्पायनकीर्तितम्।
व्यासाज्ञया समाज्ञातं सर्पसत्रे नृपस्य हि ॥ ७६ ॥

जयो नामेतिहासोऽयं श्रोतव्यो मोक्षमिच्छता ॥ ७७ ॥

अनागतश्च मोक्षश्च कृष्णद्वैपायनः प्रभुः।
सन्दर्भं भारतस्यास्य कृतवान् धर्मकाम्यया ॥ ७८ ॥

षष्टिं शतसहस्राणि चकारान्यां स संहिताम्।
त्रिंशच्छतसहस्राणि देवलोके प्रतिष्ठितम् ॥ ७९ ॥

पित्र्ये पञ्चदशं ज्ञेयं यक्षलोके चतुर्दश।
एकं शतसहस्रं तु मानुषेषु प्रभाषितम् ॥ ८० ॥

नारदोऽश्रावयद्देवानसितो देवलः पितॄन्।
रक्षोयक्षान् शुको मर्त्यान् वैशम्पायन एव तु ॥ ८१ ॥

## भारतसावित्री

मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥ ८२ ॥

हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ८३ ॥

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ८४ ॥

न जातु कामान्न भयान्न लोभा-
द्धर्मं त्यजेज्जीवितस्यापि हेतो ।
नित्यो धर्मः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ८५ ॥

इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥ ८६ ॥

शान्तिपर्वतः श्लोकाः ॥ ५०१७ ॥
आदिपर्वतः श्लोकाः ॥ १५८१३ ॥

॥ इति श्रीमहाभारतसारे स्वर्गारोहणपर्व समाप्तम् ॥

॥ समाप्तः श्रीमहाभारतसारः ॥

ॐ तत्सत् ।

# महाभारतसारशब्दार्थसङ्ग्रहः

अंश.–भाग•
अंशु•–किरणः
अंस –स्कन्धः
अकटुक –रागद्वेषहीनः
अकण्टकम्–निर्विघ्नम्, शत्रुरहितम्
अकस्मात्–कारणं विना
अकिञ्चन•–निर्धन•, दरिद्र
अकुतोभय.–निर्भयः
अकृत.–विकल्पयुक्त•
अकृष्टपच्य –कर्षण विना धान्यप्रद
अक्त –लिप्त•, युक्तः
अक्षम –असमर्थ•, दुर्बलः
अक्षरम्–ब्रह्म
अक्षरसारमता–कैवल्यम्, मोक्षः
अक्षि.–नेत्रम्, नयनम्
अखिलम्–सम्पूर्णम्
अगरु –चन्दनविशेष
अगात्–गतः
अगारम्–गृहम्
अग्नि –स्थण्डिलम्, अग्निकुण्डम्
अनल•
अग्रज –ज्येष्ठभ्राता
अग्रत –अग्रे, संमुखे, पुरत•
अग्रपादस्थित –अत्यन्तम् उत्सुक•
अग्रहार –निर्वाहार्थं राज्ञा दत्ता भूमिः
अग्र्य –श्रेष्ठ
अघम्–पातकम्, दु खम्
अघोषयन्–घोषणा कृतवन्त
अङ्गना–स्त्री, नारी
अङ्गा –देशविशेष
अङ्गानि–अवयवा
अङ्गारकर्मान्तम्–कर्मारगृहसमीपम्
अङ्गिरसा श्रेष्ठ –द्रोणाचार्य
अङ्गुलित्रम्–अङ्गुलित्राणम्
अचल –पर्वत, स्थिर
अच्युत –दृढः, अविनाशी
अच्युत –श्रीकृष्ण.
अज –छाग
अजरम्-जरारहितम्
अजातशत्रुः–युधिष्ठिर, धर्मराज•
अजिनम्–कृष्णमृगचर्म
अजिनम्–मृगव्याघ्रादिचर्म
अजिरम्–अङ्गनम्
अज्ञान –ज्ञानहीन•
अञ्जनम्–कज्जलम्
अञ्जसा–झटिति, शीघ्रम्, मुख्यतया, वेगेन
अटन्ती–भ्रमन्ती
अट्टालक–धनिनां गृहम्, हर्म्यम्
अणु –सूक्ष्मम्, अल्प
अण्डज –पक्षी

अतन्द्रित –निरलस
अतीतम्–गतम्, अतिक्रान्तम्
अत्यकालयत्–दत्तवान्
अत्यक्रामत्–उल्लङ्घितवान्
अत्यर्थम्–अत्यत्तम्
अत्युक्त –अत्यन्त निन्दित स्तुतो वा
अदूरे–समीपे
अद्भुतम्–आश्चर्यम्
अद्यप्रभृति–अद्यारभ्य
अधम –नीच
अधिप –राजा, पालयिता
अधिपञ्चाशत्–पञ्चाशल्लाभे एक
अधिष्ठानम्–आधार ( मूलम् )
अध्यक्ष –अधिकारी, मुख्य·
अध्यगा –ज्ञातवान्
अध्यवसानम्–निश्चय
अध्यूढ –यस्य माता गर्भवती एव विवाहकाले, तादृश
अध्वग –पान्थ
अध्वर –यज्ञ
अध्वा–मार्ग, पन्था·
अनङ्ग –अङ्गराजा, मदन
अनडुह्–वृषभ ( अनड्वान् )
अनन्तर –बन्धुहीन
अनन्तरम्–तत्क्षणम्, पश्चात्
अनन्तरज –औरस
अनय –अपराध, अनीति.
अनर्घेय –अमूल्यार्ह.

अनल –अग्नि
अनवेक्ष्य–अदृष्ट्वा
अनशनम्–उपवास
अनहङ्कृत –अहङ्काररहितः
अनाक्रन्द·–मित्रहीनः
अनागत –नित्यसिद्धः
अनागतम्–भविष्यकालिकम्
अनागतविधाता–दीर्घदर्शी, दूरदर्शी
अनात्मा–अजितचित्त
अनामयम्–कल्याणम्
अनायुष्यम्–आयुष· अपायकारकम्
अनार्यम्–हीनकर्म
अनावृष्टि –अवर्षणम्
अनिमिष·–मत्स्यः
अनिल·–वायु
अनिशम्–नित्यम्, सततम्
अनु–पश्चात्
अनुक्रोश –दया
अनुगम्–योग्यम्
अनुगमनम्–पश्चाद्गमनम्
अनुगमनम्–मैथुनम्, सम्भोगः
अनुग्रह –दया
अनुज –कनिष्ठभ्राता
अनुज्ञा–समतिः, क्षमा
अनुताप –पश्चात्तापः
अनुदकम्–अल्पजलम्
अनुपदम्–पश्चात्
अनुपद्यते–अनुसरति

अनुबन्ध –परिवार॰, परिणाम
अनुभाव॰–पराक्रम॰, सामर्थ्यम्
अनुमतम्–अनुज्ञा
अनुमन्ता–सम्मतिदाता
अनुयुक्त॰–मृतकाध्येता
अनुयुञ्जकः–स्पर्धावान्
अनुयोक्ता–मृतकाध्यापकः
अनुरूपम्–योग्यम्
अनुवाकः–नित्यपाठ॰
अनुशासनम्–आज्ञा
अनुषक्तः–सबद्धः
अनुषङ्ग –सम्बध॰
अनुष्ठितम्–कतर्व्यम्
अनुसन्तानः–परम्परायाम् उत्पन्नः
अनूचान॰–साङ्गवेदाध्यायी
अनूपम्–जलप्रायदेशः
अनृजुः–अनृतस्य अपराधस्य आरोप-कृत्
अनृण –ऋणमुक्त , ऋणरहितः
अनृतम्–असत्यम्
अनृशस॰–दयालुः
अन्त –नाश , सामा
अन्तपाल॰–द्वारपाल
अन्त पुरम्–ललना, स्त्री
अन्त पुरम–स्त्रीगृहम्
अन्तत –निश्चितम्
अन्तरम्–छिद्रम्
अन्तरम्–प्रमाद॰
अन्तरम्–मध्यम्
अन्तरम्–मध्यवेला
अन्तरज –औरस
अन्तरधीयत–अदृश्य अभूत्
अन्तरपूरुष –अन्तर्यामा
अन्तरा–मध्ये
अन्तरालम्–पिशाचयोनि
अन्तरिक्षम्–आकाश
अन्तर्हित –गुप्त
अन्तिकम्–समीपम्
अन्तिके–समीपे
अन्त्ययोनि –चण्डालजाति॰
अन्त्यावसाय –चाण्डाल॰
अन्ध –नेत्रहीन
अन्धका –यादवभेदा
अन्ध तम –गाढान्धकार॰
अन्य –अपर , शत्रु
अन्यतम –बहुषु एक
अन्ववाय॰–वश
अन्वशासत्–आज्ञा कृतवान्
अन्विच्छ–गवेषय, शोधय
अन्वित –युक्त
अन्वीक्षा–अनुमानम्
अपत्यम्–सन्तानम्
अपदशम्–दशाहीनम्
अपदेश –मिषम्
अपध्यानम्–विरुद्धचिन्तनम्

अपध्वसज –हीनवर्णपुरुषोच्चवर्ण-
स्त्रियोः पुत्र·
अपध्वसजा –अनुलोमजा (षट्)
ब्राह्मण ×क्षत्रिया, वैश्या, शूद्रा ३
क्षत्रिया ×वैश्या, शूद्रा, २
वैश्य. ×शूद्रा, १
अपनयनम्–दूरीकरणम्
अपराह्ण.–त्रेधा विभक्तदिनस्य
तृतीयो भाग.
प्राह्ण, मध्याह्न, अपराह्ण (पूर्वाह्ण·)
अपराह्ण –पञ्चधा विभक्तदिनस्य
चतुर्थो भाग
प्रात, सगव, मध्याह्न,
अपराह्ण, सायह्न
अपवत्सा–वत्सरहिता, निपुत्रिका
अपसदा –प्रतिलोमजा (षट्)
क्षत्रिय ×ब्राह्मणी = सूत
वैश्य ×क्षत्रिया, ब्राह्मणी = वामक., मागध
शूद्र × { वैश्या=वैद्य, क्षत्रिया=व्रात्य
ब्राह्मणी=चाण्डाल }
अपसरणम्–दूरगमनम्
अपस्तन –स्तनपानरहित
अपस्मारी–ग्रहग्रस्त
अपाङ्क्तेय –पङ्क्तिदूषकः
अपास्य–त्यक्त्वा
अपि–प्रश्नार्थकम्
अपिहितम्–आच्छादितम्

अपुत्र.–निपुत्रिकः
अपुरुषा–अरक्षिता
अपूप –पिष्टक
अपेत.–नष्ट, दूरं गतः
अप्रकाशम्–अज्ञातम्
अप्रतिम –अतुल्य., अद्वितीय·
अप्रमेय –गहनः
अप्रवासी–गृहादिषु सक्त.
अप्सरस –स्वर्गवेश्याः (उर्वश्यादय):
अबला–स्त्री, ललना
अबुद्धि.–अल्पबुद्धि·
अबुध्यमान –अजानन्
अभक्ष्यन्–भक्षयेयुः
अभिजज्ञे–ज्ञातवान्
अभिजन –कुलम्
अभिजात –अतिकुलीन.
अभिजातम्–सम्मुखम्
अभित –समीपे
अभिनिर्वृत्ति·–सिद्धिः
अभिपत्ति.–समाप्ति·, अधिगमः
अभिपूज्य–स्तुत्वा
अभिप्रजाता–प्रसूतवती
अभिप्राय –आशयः
अभिमर्श·–स्पर्शः, प्रहार·, बलात्कारः
अभिमुखम्–सम्मुखम्
अभिरूप –योग्य, विद्वान्
अभिवादनम्–नमस्कारः
अभिशस्त.–अभियुक्तः, निन्दितः

अभिशाप –लोकगर्ह्यता
अभिषङ्ग –पराभव., शाप.
अभिषव –सोमवल्या कण्डनम्
अभिषेक –स्नानम्
अभिसन्धानम्–वञ्चनम्
अभिहार –तिरस्कार
अभिहार –समीपानयनम्
अभीक्ष्णम्–पुन पुन
अभ्यवहार –आहार , भक्षणम्
अभ्यागत –अतिथि
अभ्याश –समीप
अभ्यास –पुन पुन सेवनम्
अभ्रम्–मेघ
अमर्त्य –देव
अमर्षित.–क्रोधयुक्त
अमा–सह, समीपे
अमात्य –मन्त्री, समीपस्थ
अमात्य –सहवासी
अमितम्–अगणितम्
अमित्र –शत्रु
अमु लोकम्–परलोकम्
अमृतम्–सोमरस
अमृतमय.–देवतामय.
अमृतमुख –अत्यन्त दर्शनीय
अमृताशः–देव
अम्बरम्–वस्त्रम्, आकाशः ( म् )
अम्बष्ठः–ब्राह्मणवैश्यापुत्र.
अम्बिका–धृतराष्ट्रमाता
अम्बिकासुत –धृतराष्ट्र.
अम्बु–जलम्
अम्बुजम्–कमलम्
अम्बुद –मेघ
अम्भ.–जलम्
अयश.–अपकीर्ति
अयुक्त –योगाभ्यासहीन.
अयुतम्–१०००० ( दशसहस्राणि )
अयोनि –अज्ञातकुला
अयोनि –विवाहात् न जात
अराजकम्-नृपहीनम्
अरि –शत्रु
अरिंदमः–शत्रुनाशकः
अरुन्तुदः–मर्मच्छिद्
अर्क –सूर्य
अर्घ –पूजोपहार
अर्चि –तेज
अर्णव –समुद्र
अर्थ –इच्छा, धनम्
अर्थ –कार्यम्, उपयोग
अर्थ –द्वितीयपुरुषार्थ
अर्थ –पुरुषार्थ (मोक्ष )
अर्थ –प्रयोजनम्
अर्थ –फलम्
अर्थ –उपभोग , संभोग , ( मैथुनम् )
अर्थना–याच्ञा
अर्थी–इच्छु , याचक
अर्थे–कृते

अर्दित –पीडितः, दुःखित
अर्ह –योग्य
अर्ह –मूल्यम्
अर्हसि–योग्य असि
अलातम्–उल्मुकम्
अलीकम्–अप्रियम्, असत्यम्
अल्पम्–क्षुल्लकम्
अल्पीय –अतिशयेन अल्पम्
अवगाहनम्–स्नानम्
अवज्ञा–अपमान, तिरस्कार
अवनि –पृथ्वी
अवनी–पृथ्वी
अवनेजनम्–प्रक्षालनम्
अवभृथ –यज्ञसमाप्तिस्नानम्
अवमेने–अपमान कृतवान्
अवर –हीन., नीच
अवरोध –अन्त पुरम्, स्त्रीगृहम्
अवरोध –कुलीना स्त्री
अवलेहिनी–सदा क्रुद्धा
अवश्याय –तुषार, हिमम्
अवसथ –स्थानम्
अवसेचनम्–सिञ्चनम्
अवहित –दत्तचित्त
अवाङ्मुख –अधोमुख
अवाप्तम्–प्राप्तम्
अवि –मेष
अविदूरत.–समीपे
अविपश्चित्–अर्थज्ञानशून्य·

अव्याहरन्–मौनमास्थित
अव्याहृतम्–मौनम्
अव्रतः–शूद्र, नियमरहित.
अशनम्–भोजनम्
अशनै –शीघ्रम्
अशुभ –अधर्म
अशेषत –अशेषम्, सम्पूर्णम्
अश्मकुट्ट –पाषाणेन सस्यकुट्ट
अश्मा–पाषाण
अश्रद्धेयम्–अविश्वास्यम्
अश्रुति –पन्नग
अश्वत्थ –पिप्पल
अश्वस्तनम्–एकदिनपर्याप्तम्
अश्विनौ–अश्विनीकुमारौ (देववैद्यौ)
अष्टन्–८
असंसक्त·–निःसंशय
असहार्य –उत्कोचादिना अभेद्य
असकृत्–बहुवारम्
असन्–अशुभ
असि –खड्ग
असु –प्राण
असुर –दैत्य
असूत–जनयामास
असृक्–रक्तम्
अस्थि–कीकसम्
अस्त्रम्–अश्रु
अस्वप्न.–जागरूक
अह –दिवस

अहीन –साङ्ग·
अहो–समाधानम्, आश्चर्यम्,
सम्बोधनम्
आकाशगङ्गा–मन्दाकिनी, वियद्गङ्गा
आकीर्ण –व्याप्त·
आकृती( ति )–आकारः
आक्रन्द –युद्धम्
आक्रन्द –साहाय्यकारी
आख्यात –कथित·
आख्यातुम्–वक्तुम्
आग –अपराध
आगति –उद्गमनस्थानम्
आगम.–वेद, शास्त्रम्
आङ्गारिक –इङ्गालकर्ता
आचक्रमे–आरूढ, गतः
आचष्ट–उक्तवान्
आजि –युद्धम्
आढ्य –श्रीमान्, युक्त
आतङ्क –रोग, दु खम्, भयम्
आततायी–
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापह·।
क्षेत्रहर्ता दारहर्ता षडेते ह्याततायिन·॥
आतप –सूर्यप्रकाश·
आतपत्रम्–छत्रम्
आत्मज –पुत्र
आत्मतन्त्रम्, शरीरम्, कुटुम्बम्
आत्मरति –अनन्यनिष्ठ
आत्मसम्भव –पुत्र

आत्मा–शरीरम्, मन, जीव
आत्मा–धैर्यम्
आत्माभिगुप्ति –चित्तजय., स्वरक्षणम्
आददे–गृह्णामि
आदानम्–ग्रहणम्
आदित्य –अदितिपुत्र, देव, सूर्य
आदीपक –गृहादिदाहक
आधाय–निधाय
आधिपत्यम्–राज्यम्
आनकदुन्दुभि –वसुदेव.
आनत –नम्र.
आननम्–मुखम्
आनर्तनगरी–द्वारका
आनर्ता –देशविशेषः (सौराष्ट्रदेश ?)
आनृण्यम्–ऋणमुक्तताम्
आनृशस्यम्–दयालुता, दया
आनृशस्या–परदु खापहा
आन्वीक्षिकी–अनुमानप्रधाना
आन्वीक्षिकी–ज्ञानकाण्ड
आप –जलम्
आपगा–नदी
आपणः–वणिक्पथ
आपणम्–विक्रयस्थानम्
आपद्–विपत्ति
आपन्न –सङ्कटग्रस्त
आप्त –विश्वासार्ह, यथार्थवक्ता
आप्लुत –स्नात·
आप्लुत्य–स्नान कृत्वा

आभरणम्–भूषणम्, अलङ्कार
आभीर –गोपाल, गोप
आभीर –ब्राह्मणाम्बष्ठस्त्रियो पुत्र·
आमय –रोग, पीडा, दु खम्
आमिषम्–मासम्
आमिषम्–मोहकरम्, भक्ष्यम्
आयतनम्–स्थानम्, गृहम्
आयति –उत्तरकाल
आयसम्–लोहमयम्
आयसी–लोहमयी
आयाति–आगच्छति
आयास·–श्रम, दु·खम्
आयुधम्–शस्त्रम्
आयुष्यम्–आयुष्करम्
आरण्यक –अरण्ये विहितः
आरण्यक –वानप्रस्थ·
आराम·–उद्यानम्
आराम –पुरवाटिका
आरालिक –शाकविशेषकर्ता
आरालु–शाकादि
आर्च्छति–प्राप्नोति
आर्जवम्–ऋजुता
आर्त –दु खित
आर्तवम्–स्त्रीरज· ( ऋतु· )
आर्य·–श्रेष्ठ
आर्ष –प्रवर (गोत्रस्य)·
आलभ–स्पर्शं कुरु
आलम्भ –हिंसा
आलय·–गृहम्, स्थानम्
आलीढा–रजस्वला, ऋतुमती
आलीन –निश्चल.
आलोचनम्–विषयग्रहणम्
आवसथ –गृहम्, धर्मशाला
आवहेत्–आकारयेत्
आवाह्य –विवाहयोग्य
आवि·–प्रकटम्
आविलम्–दूषितम्
आवीरजा –रजस्वला, ऋतुमती
आशय –स्थानम्
आशा–दिशा
आशी–सर्पदंष्ट्रा
आशीविष·–सर्प
आशु–शीघ्रम्, सत्वरम्
आश्रय –आधार
आसव –मद्यम्, सुरा
आसीदन्–समीपस्थ
आसीन –उपविष्ट
आस्तिक –परलोककामुक
आस्था–आदर·
आस्थित –आश्रित
आस्फोटयत्–बाहुशब्दमकरोत्
आहव –युद्धम्
आहार –भोजनम्, भक्षणम्
आहार्यम्–अर्जनीयम्
आहुक –उग्रसेन, यादवानां राजा
आहो–किंवा

आह्वायक –धर्माधिकारी
इङ्गितम्–रोमाञ्चादिना प्रकटितः अभिप्राय
इच्छया–बुद्धिपूर्वकम्
इदानीम्–साम्प्रतम्, अधुना
इन्दु –चन्द्र
इन्द्र –राजा
इन्द्रियार्थ.–विषय
इषीका–दर्भपत्रम्
इषु –बाण
इष्टापूर्तम्–इष्ट च पूर्त च
{ इष्टम्–पञ्चमहायज्ञादि
{ पूर्तम्–तडागारामादि
इष्टि –याग
इह–अत्र, अस्मिन् लोके
ईक्षणम्–नेत्रम्
ईक्षा–प्रत्यक्षम्
ईक्षितुम्–द्रष्टुम्
ईजे–इष्टवान् ( यज्ञ कृतवान् )
ईदृशः–एतादश
ईप्सितम्–इष्टम्
ईश –समर्थ, आज्ञाकारी
ईश्वर –शास्ता, राजा
ईश्वर –स्वामी
ईहमान –कर्तुमिच्छन्
ईहा–आशा, चेष्टा, प्रयत्नः
उक्षा–वृषभ
उग्र –क्षत्रियशूद्रापुत्र
उग्रम्–दु सहम्, भयङ्करम्
उचितम्–योग्यम, परिचितम्
उच्चावचा –नानाप्रकारा, अनेक-विधाः
उच्चै –ऊर्ध्वम्
उच्छेद –समूल नाश
उच्छेद –नाश
उञ्छ –कणश आदानम्
उटजम्–पर्णकुटी
उडु–नक्षत्रम्
उडुराट्–चन्द्र
उत्कट –मत्तः
उत्कर –समूह, राशि
उत्कृत्य–छित्वा
उत्कोचः–लञ्चा
उत्क्लेद –सारद्रव
उत्तर –अधिक
उत्थानम्–नित्योद्योग
उत्थानम्–पुरुषकार, पराक्रमः
उत्पथ –कुमार्ग
उत्सङ्ग –अङ्क
उत्सर्ग –समाप्ति
उत्सृज्य–त्याग कृत्वा
उत्सेक –वृद्धि, आधिक्यम्
उदकम–जलम्
उदकक्रिया–पितृतर्पणम्
उदकुम्भ –जलकलश
उदक्या–रजस्वला

उदग्र –उत्कृष्ट
उदपादनम्–कूप
उदय –परिणाम
उदर्क –उत्कर्ष , परिणाम
उदवास –जले निवसनम्
उदाहृतम्–कथितम्
उदीची–उत्तरदिशा
उदुम्बर –औदुम्बर
उदुम्बरम्–औदुम्बरफलम्
उद्देश –स्थानम्, अभिप्रायः सङ्क्षेप
उद्धर्षणम्–उत्तेजनम्
उद्भावनम्–उत्कर्ष
उद्यानम्–ग्रथनम्
उद्यानम्–उपवनम्
उद्वह –श्रेष्ठ॰, परिणेता
उद्विग्न –खिन्न , भीत
उद्वोढुम्–परिणेतुम्
उद्वोढुम्–धारयितुम्
उन्माथ –कूटयन्त्रम् (पशुपक्षि-बन्धनम्)
उन्माद –चित्तभ्रम
उपगच्छेत्–सम्भोग ( मैथुनम् ) कुर्वीत
उपचक्रमे–प्रारम्भ कृतवान्
उपचीर्ण –वञ्चित
उपजाप –भेद
उपधा–छलम्, कपटम्
उपधि –छलम्, कपटम्
उपनिपीडितम्–आक्रान्तम्
उपनिषद्–रहस्यम्
उपपति –जार
उपपन्नम्–युक्तियुक्तम्
उपमा–सादृश्यम्
उपराजा–समीपवर्ती सामन्त॰
उपशिक्षन्त –अर्जयन्त
उपसृष्ट –राहुग्रस्तः
उपसेवनम्–सम्भोग (मैथुनम्)
उपस्कर –व्यञ्जनम् ( भोजने )
उपस्कृतम्–परिपूर्णम्
उपस्थम्–जननेन्द्रियम् ( शिश्नम्)
उपस्थितम्–प्राप्तम्
उपस्पृश्य–आचम्य
उपहार –पूजनम्, बलिदानम्
उपह्वरम्–एकान्तः, सान्निध्यम्
उपानह्–पादत्राणम्
उपाय –पद्धति
उपायत्रयम्–सामदानभेदा॰
उपेत –युक्त॰
उमा–पार्वती
उर –वक्ष॰
उरग –सर्प
उरण –मेष
उर्वी–पृथ्वी
उलूक –दिवाभीतः, घूकः
उलूपी–बभ्रुवाहनस्य सापत्नमाता
उल्का–ज्वाला
उल्बणम्–नरकावहम्

उषती–दाहकरी, अकल्याणी
उषित –( वस् + त ) स्थित
उष्ट्र –क्रमेलक
उष्णीषम्–शिरोवेष्टनम्, किरीटम्
ऊध –आपीनम् ( गोस्तन )
ऊरु –उत्सङ्गः
ऊर्णनाभि –लूता ( कीटविशेष )
ऊर्ध्वरेता –मुनि
ऊर्मि –वीचि
ऊर्मिमान्–समुद्र
ऊषर –क्षारमृत्तिकायुक्तदेश
ऊषु.–अवसन्
ऋक्ष –भल्लूक
ऋच्छति–प्राप्नोति
ऋजु –सरल, अकुटिल
ऋणकर्ता–वृद्ध्यर्थं धनदाता
ऋतम्–सत्यम्
ऋतम्–नि श्रेयसम्
ऋतु –आर्तवम् ( स्त्रीरज ), सम्भोग
ऋतु –सम्भोगकाल, वसन्तादि
ऋतुस्नाता–रजस्वला
ऋते–विना, वर्जयित्वा
ऋद्धम्–समृद्धम्
ऋद्धि –धनसमृद्धि
ऋषभ –श्रेष्ठ
ऋषिपुत्र –व्यासपुत्र ( धृतराष्ट्र )
एकत –एकम् ( सहस्त्रम् )
एकान्तम्–अत्यन्तम्
एकान्तविनिपात –अत्यन्ताभिनिवेशः
एतावत्–इयत्, एतत्पर्यन्तम्
एन.–पातकम्
एरका–तृणविशेष, वेतस
ऐरावत –इन्द्रवाहन गज
ऐषीकम्–सौप्तिकपर्वान्तर्गत पर्व
ओक –गृहम्, स्थानम्
ओघ –प्रवाह, समूह
ओज –तेज, बलम्
औत्सुक्यम्–उत्कण्ठा
औदुम्बरा –ताम्रमया
कच्चित्–प्रश्नार्थकम्
कच्छ –तीरम्
कटाहम्(ह )–घृततैलादिपाकपात्रम्
कटुक –दारुण
कण्टक –शत्रु, विघ्नम्, उपद्रव
कण्ठायास –मुखरत्वम्
कतम –बहूना मध्ये एक
कत्थनम्–श्लाघा
कत्थसे–श्लाघसे
कदनम्–नाश, युद्धम्
कदर्य –कृपण
कदली–रम्भा (वृक्ष )
कनकम्–सुवर्णम्
कपाली–भिक्षापात्रम्
कपि –वानर
कपोत –पारावत
कमण्डलु.–सन्यासिन जलपात्रम्

कमलम्–पद्मम्
कमलालया–लक्ष्मी
करक –अल्पघट , कमण्डलु
करटा–गण्डस्थलम्
करण –वैश्यशूद्रापुत्र
करम्भ –भर्जित
करम्भवालुका–प्रखरतप्ता भ्राष्ट्रवालुका
करेणु –गजस्त्री
कर्णधार –नाविक
कर्दम –पङ्क
कर्शन –पीडयन् , जेता
कर्शित –कृशीकृतः
कर्षक.–कृषीवल
कर्हिचित्–कदाचित्
कलत्रम्–भार्या स्त्री,
कललम्–प्रथमदिनगर्भ
कलश –घट.
कला–अश , भाग
कलाप –सङ्घ
कलुषम्–पापम्
कलेवरम्–शरीरम्
कल्मषम्–पातकम्
कल्य.–दक्ष
कल्यम्–उष काल
कल्याणम्–ब्रह्मानन्द
कल्याणम्–सत्कर्म, पुण्यम्
कवि –दीर्घदर्शी, काव्यकर्ता
कव्यम्–पितृभ्यो देयमन्नम्

कश्मलम्–मूर्च्छा
कक्ष –बाहुमूलम्
काकिणी–विंशतिवराटिका·
काङ्क्षा–इच्छा
काञ्चनम्–सुवर्णम् , सुवर्णमयम्
काण्ड –बाण
काण्डपृष्ठः–शस्त्रजीवी
काननम्–अरण्यम्
काननम्–गृहम्
कानीन –अविवाहितकन्याया पुत्र-
कान्ता–पत्नी, स्त्री, प्रिया
कान्तार ( म् २ )–अरण्यम्
कान्यकुब्जम्–नगरविशेष (कनौज)
कापाली–भिक्षापात्रवती
कापोति –कपोतवत् एकैक कणम् आदत्ते सः
काम –इच्छा, सम्भोगेच्छा
काम –इन्द्रियप्रीति
काम –इष्टपदार्थ
काम –तृतीयपुरुषार्थ
काम –विषयाभिलाष.
काम –स्त्र्यभिलाष
काममूलम्–अज्ञानम्
कामा–इच्छा
कामाशय –सम्भोगेच्छायुक्त', मैथुनाभिलाषी
काम्या–इच्छा
काय –शरीरम्

कार्तिकी–कार्तिकपौर्णिमा
काल·–ईश्वर
काल –मृत्यु , समय
कालधर्मः(र्मा)–मृत्यु·
कालपर्यायः–कालविपर्यास
कालपाशः–मरणम्
कालात्यय –विलम्ब
कालीयकम्–कृष्णागुरु
कालीयकम्–पीतचन्दनम्
किङ्कर –सेवक , दूत
कितव –धूर्तः, वञ्चक
कितव –शठ , द्यूतकर्ता
किरन्–क्षिपन्
किल्बिषम्–पातकम्
कीनाश –क्षुद्र , वधक
कुकरी–पक्षिविशेष
कुक्षि –उदरम्
कुञ्जर –गज
कुटी–पर्णशाला
कुटीचकः–सन्यास गृहीत्वा गृहे एव वसन्
कुटुम्बम्–स्त्रीपुत्रादि
कुटुम्बी–गृहस्थ
कुट्टिम –निबद्धा भूमि
कुडव –
मृद्वेणुकाष्ठलोहादे
पात्र यच्चतुरङ्गुलम् ।
विस्तीर्णं च तथोच्च च
तन्मान कुडव वदेत् ॥
कुणपः–शवः, प्रेतम्
कुणि –कुकरः, रोगादिना दूषितकरः
कुण्ड –अमृते पत्यौ जारज. पुत्रः
कुण्डलम्–कर्णभूषणम्
कुण्डाशी–भगभक्षक
कुतन्त्री–दण्डिका
कुत्सनम्–निन्दा
कुपथ –कुमार्ग
कुप्ये–कोप करोमि
कुमार –बालक
कुमारी–अविवाहिता स्त्री, कन्या
कुमुदम्–कमलम्
कुम्भ –कलश.
कुम्भी–कलशी
कुलम्–समुदाय
कुलपासन –कुलकलङ्क
कुलिङ्ग –चटका
कुल्यम्–अस्थि
कुश –दर्भ
कुशल –चतुर
कुशलम्–कल्याणम्, क्षेमम्
कुशली- कारुक. ( चाण्डालविशेष )
कुशीलव –कृषावल
कुशीलव –वार्ताहर
कुशीलव –नटः
कुष्ठी–मण्डलकुष्ठी
कूट –लौहमुद्गर , राशि·
कूटम्–कपटम्, असत्यम्

कूटकारक –मिथ्यासाक्षी
कूटस्थम्–पक्षपातशून्यम्
कूप –उदपानम्
कूर्च –दर्भमुष्टि
कूलम्–तीरम्
कृकलास –सरट
कृच्छ्र –कष्ट , श्रम
कृच्छ्रम्–कष्टम्, सङ्कटम्
क्रत –क्रीत
कृतात्मा–जितचित्त
कृतोदका –कृतप्रेततर्पणा·
कृत्या–राक्षसी
कृत्स्न –सपूर्ण
कृपण –दीन
कृमि·–कीटक
कृश –क्षीण
कृष्टपच्या–कर्षणेन धान्यप्रदा
कृष्णद्वैपायन –व्यास
कृष्णवर्त्मा–अग्नि
कृष्णा–द्रौपदी
कृसर –तिलमिश्रओदन
केतनम्–गृहम्, स्थानम्
केतनम्–ध्वज
केतनम्–निमन्त्रणम्
केशव –श्रीकृष्ण , विष्णु
केशिहा–केशिदैत्यहन्ता, श्रीकृष्ण
केसर –सटा
केसरी–सिंह

कैवर्त –धीवर
कोटरम्–वृक्षस्थविवरम्
कोटि –प्रान्तभाग
कोटि –१००,००,०००
कोप –क्रोध , अमर्ष
कोश –धनसमूह , खड्गपिधानम्
कौकुरा –यादवभेदा·
कौञ्जरम्–कुञ्जरस्य इदम्
कौतूहलम्–कौतुकम्, उत्सुकता,
आश्चर्यम, उत्सव , इच्छा
कौन्तेय –कुन्तीपुत्र ( धर्म + भीमः
+ अर्जुन )
कौपीनम्–गुह्यप्रदेश
कौमारम्–कुमारस्य भाव , बालत्वम्
कौशलम्–कुशलत्वम्
कौशिक –विश्वामित्र , इन्द्र
क्रतु –यज्ञ , सङ्कल्प
क्रयविक्रयी–वणिक्
क्रियानियमित –स्वधर्मयन्त्रित
क्रुश्यमान –क्रोशन्
क्रोशनम्–रोदनम्
क्लिन्न –आर्द्र
क्लिष्ट –पीडित , दु खित·
क्लीब·–नपुसक·, भीरु
क्लीब –अधार , निरिच्छ
क्लृप्तम्–कृतम्
क्लेद –आर्द्रता
क्व–कुत्र

क्षण –निश्चय
क्षतम्–व्रण , पीडा
क्षतजम्–रक्तम् , रुधिरम्
क्षति –हानिः
क्षत्ता–विदुर
क्षत्रम्–क्षत्रियजाति
क्षत्रिया.–क्षत्रियस्त्रिय
क्षपयिष्ये–नाशयिष्ये
क्षपा–रात्रि
क्षम –समर्थ
क्षय –गृहम् , स्थानम् , नाश
क्षान्त –क्षमावान्
क्षान्तम्–सोढम् ( सह् )
क्षान्ति –क्षमा
क्षारम्–लवणम्
क्षारकम्–जालम्
क्षिणोति–नाशयति
क्षिति –पृथिवी
क्षिपन्–निन्दन्
क्षिप्रम्–सत्वरम् , झटिति
क्षीणभूयिष्ठम्–अतिक्षीणम्
क्षीरम्–दुग्धम्
क्षुद्र –नीच , अल्प
क्षुध्–क्षुधा
क्षुमा–अतसी
क्षुर –बाण , वपनशस्त्रम्
क्षेत्रम्–केदार , शरीरम्
क्षेत्रम्–पत्नी, स्त्री, स्थानम्
क्षेत्रे वाप –सत्पात्रे दानम्
क्षौमम्–कौशेयवस्त्रम् , दुकूलम्
क्ष्वेडितम्–कूर्दनम्
खम्–आकाश , छिद्रम्
खड्ग –कृपाण
खण्ड –शकलम् , भाग
खाण्डवम् ( मू )–शर्करापक्वान्नम्
खाण्डवराग –पक्वान्नविशेष
खात्वा–खनन कृत्वा
खेचर –पक्षी, आकाशगामी
खेद –श्रम
गङ्गा–भागीरथी
गङ्गाद्वारम्–हरिद्वारम्
गज –हस्ती
गजाह्वयम्–हास्तिनपुरम्
गण –समुदाय
गतचेतन –मृत
गतश्री –निष्प्रभ
गति –गमनम , दैवम् , अवस्था
गति –लयस्थानम् परायणम्
गद् –रोग
गद –श्रीकृष्णानुज
गन्ध.–सुगन्धि द्रव्यम्
गम्भीरः–मन्त्रगोपनसमर्थ
गरम्–विषम्
गरद –विषदाता
गर्भ –मध्यभाग

गर्हयामास–निन्दां कृतवान्
गवल्गण –सञ्जयपिता
गाङ्गेय –भीष्म ( गङ्गापुत्र )
गाढम्–दृढम्
गाण्डीवम्–अर्जुनधनु
गाण्डीवभृत्–अर्जुन
गात्रम्–शरीरम्, अवयव
गाधेयी–गाधिकन्या
गान्धर्व –प्रीतिविवाह.
गान्धर्वम्–सङ्गीतशास्त्रम्
गान्धर्वशास्त्रम्–गायनविद्या
गान्धारराज –शकुनि
गायन –गायक
गार्हस्थ्यम्–गृहस्थाश्रम.
गावल्गणि –गवल्गणपुत्र, सञ्जय.
गिरि –पर्वत
गिरीश –शिव
गी –वाणी ( गी, गिरौ, गिरः )
गुडाका–रात्रि
गुडाकेश –अर्जुन
गुण –अप्रधान, अमुख्य
गुण –साधनम्, रज्जु
गुणोत्तरम्–अधिकगुणम्, गुणाधिकम्
गुप्त –रक्षित
गुप्ति –रक्षणम्
गुरु–महत्
गुरु –पितृमात्रादि
गुरु –विद्याप्रदाता
गुरु –श्वशुर
गुरुतल्पम्–गुरुपत्नी
गुरुतल्पग –गुरुस्त्रीगामी
गुर्विणी–गर्भिणी ( आपन्नसत्त्वा )
गुल्म –रक्षक, पत्ति
गुल्मानि–नदीतटानि
गुह्यम्–गोपनीयम्
गृद्धी–इच्छु
गृध्रवाजित –गृध्रपक्षयुक्त
गृहम्–पत्नी, स्त्री
गृहा –गृहम्
गृहिणी–पत्नी, स्त्री
गोकुलम्–पशुसमुदाय, गोयूथम्
गोधा–ज्याघातवारणम्, चर्मादिकृत-बाहुबन्धनम्
गोयुतम्–गव्यूति, क्रोशद्वयम्
गोलाङ्गूल –वानर
गोविन्द –श्रीकृष्ण
गोव्रज –गोशाला
गौ –धेनु, वृषभ, इन्द्रियम्
गौरवम्–महत्त्वम्
ग्राम –समाज, समूह
ग्राम्य –ग्रामे भव
ग्राम्यधर्म –मैथुनम् ( सम्भोग )
ग्राम्यसुखम्–विषयसुखम् ( सम्भोग-सुखम् )
ग्राह –ग्रासकर्ता
ग्राह्यक –वशीकर्तुं शक्यः

घटसे–प्रयत्न करोषि
घट्टयति–चालयति
घर्मः–तीक्ष्ण , स्वेद
घाती–हन्ता
घृणा–कृपा
घोर –भयङ्कर
घ्राणम्–नासिका
घ्रेयम्–गन्ध ( आघ्रातु योग्यम् )
चक्रम्–समूह सुदर्शनचक्रम्
चक्षु –नेत्रम्
चटक –कलविङ्क
चतुर्दश–१४
चतुर्भद्र –चत्वारि भद्राणि यस्मिन् स
चतुर्भद्रतरस्त्वया–त्वत्त अतिशयेन चतुर्भद्र
चतुर्भद्राणि–धर्मज्ञानवैराग्यैश्वर्याणि
चतुर्विधम्–चतु प्रकारम्
चतुर्विध कर्म–नित्यम् नैमित्तिकम् काम्यम् , निषिद्धम्
चतुर्विध कर्म–पुण्यम् , पापम् , नीति , अनीति
चतुर्विधपुरुषार्था.–धर्म , अर्थ , काम , मोक्ष
चतुर्विधा अहिंसा–मनसा, वाचा, कायेन, अभक्षणेन
चतुर्विधा गति·–
पुण्येन उर्ध्वगति ,
पापेन अधोगति ,
तत्साम्येन मनुष्यत्वम् ,
तत्त्वज्ञानेन मुक्ति

चतुर्वेदा.–ऋक्, यजु , साम, अथर्वणः
चतुष्पदी–चतुराश्रमी
चत्वार आश्रमाः–ब्रह्मचर्यम् ,गृहस्थाश्रम , वानप्रस्थाश्रम·, सन्यासः
चत्वारि अन्त करणानि–मन , बुद्धि·, चित्तम् , अहङ्कारः
चत्वारो वर्णा –ब्राह्मण , क्षत्रिय·, वैश्य , शूद्रः
चत्वारो वेदा –ऋग्वेद·, यजुर्वेद , सामवेद , अथर्ववेदः
चपल –चञ्चल
चपलाक्ष –अभिमन्यु
चयनम्–स्थण्डिलम्
चर –दूतः
चरस्व–भुङ्क्ष्व
चर्या–सेवा
चलाचलम्–अतिचञ्चलम्
चाण्डाल –ब्राह्मणस्त्रीशूद्रयो पुत्रः
चातुवर्ण्यम्–चतुर्णा वर्णाना हितम्
चातुर्वर्ण्यम्–चत्वारो वर्णा
चार –गुप्तचर ( गुप्तदूत )
चारचक्षु –राजा
चारित्रम्–सद्वर्तनम् , शीलम्
चारी–भक्षणार्थ सञ्चरणम्
चारु–सुन्दरम् , प्रियम्
चिकीर्षितम्–कर्तुमिष्टम्
चिता–चिति , ( प्रेतदाहार्थम् )
चित्तम्–मन , अन्त करणम्

चित्राङ्गदा–बभ्रुवाहनमाता ( अर्जुनपत्नी )
चिन्तयान –विचारयन्
चिन्ता–विचार
चिन्तायज्ञ –मानसयज्ञ.
चिरम्–दीर्घकालम्
चेत –मन
चेतन.–आत्मा, ज्ञानम्
चेष्टा–चलनम्, व्यापार
चैत्यम्–देवालयम्, पूजास्थानम्
चैत्रवाहनी–चित्राङ्गदा
चैत्री–चैत्रमासस्य पूर्णिमा
चैद्य –शिशुपाल
चोक्ष –शुद्ध.
चोदना–प्रेरणा
चोदित –प्रेरित
च्युतः–स्खलित , भ्रष्ट., नि सृत
छन्द –इच्छा
छन्न·–आच्छादित
छलम्–कपटम्
छिद्रम्–शैथिल्यम्
छुरितम्–व्याप्तम् , आच्छादितम्
जगती–पृथ्वी
जग्मुषी–गन्तुमिच्छु
जग्मुषी–गता
जघनम्–पश्चाद्भाग
जघनम्–स्त्रीकट्या पुरोभाग
जघन्य –नीच·

जङ्गमम्–गतिमत्
जड –मूर्ख , बधिर
जन –लोक
जननी–माता
जनपद –देशः
जनाधिप –राजा
जनिता–उत्पादक., जनक , पिता
जन्तु –प्राणी
जन्मकर्म–जन्मोचितकर्म
जप्यम्–जपः, मन्त्र
जम्बूक –गोमायु
जय –अर्जुन
जय –महाभारतम्
जरा–एतन्नामक व्याध
जरा–वृद्धत्वम्
जर्जर –नि सार
जलजम्–कमलम्
जलस्थाय –जलाशयः
जलाधार –ह्रद
जव –वेग
जवेन–शीघ्रम्
जाघनी–जङ्घा
जात –उत्पन्न
जातवेदा –अग्नि
जातास्थ –जातादरः
जाति –जन्म
जाति –पद्धति
जातु–कदाचित

जानपदा –देशवासिनः
जानु–जङ्घोरुसन्धि , उरूपर्व
जामदग्न्य –जमदग्निपुत्र , परशुराम
जामाता–कन्यापति.
जामि –नवपरिणीता स्त्री
जामि –सौभाग्यवती स्त्री, कुलीना स्त्री
जाम्बूनदम्–सुवर्णम्
जारूथ्य –त्रिगुणदक्षिणावान्
जालम्–समूह
जाह्नवी–गङ्गा, भागीरथी (जह्नुपुत्रा)
जिगमिषु –गन्तुमिच्छुः
जिघांसा–हन्तुमिच्छा
जिघृक्षु –ग्रहीतुमिच्छु·
जिज्ञासा–परीक्षा, ज्ञातुमिच्छा
जितेन्द्रिय –जितचित्त
जिष्णु –अर्जुन
जिह्मम्–वक्रम्, कुटिलम्
जिह्वा–रसनेन्द्रियम्
जीर्ण –वृद्ध.
जीविका–निर्वाह , जीवनयात्रा, जीवनम्
जीवितम्–प्राणा , जीवनम्
जुगुप्सा–गोप्तुम्=रक्षितुमिच्छा
जुगुप्सा–निन्दा
जुष्टम्–सेवितम् , स्वीकृतम्
ज्ञ –ज्ञाता
ज्ञानम्–ज्ञानेन्द्रियम् , सम्बन्ध·
ज्ञानविद्–ब्रह्मविद्

ज्याय –श्रेष्ठम् , उत्तमम्
ज्येष्ठ –श्रेष्ठ
ज्योति –तेज , ग्रहनक्षत्रादि
ज्वर –दु खम्
ज्वलन –अग्निः
झष –मत्स्य
तडाग –सर
तत –तदनन्तरम्
तथावृत्तौ कथाम्–तादृग्गोष्ठीपरौ
तथ्यम्–सत्यम्, यथार्थम्
तदात्वम्–वर्तमानकाल
तदानीम्–तदा, तस्मिन्काले
तदुद्यानम्–ग्रथनसूत्रम्
तनय –पुत्र
तनु –शरीरम् , कृशः
तनू –शरीरम्
तन्त्रम्–व्यवहार
तन्त्रम्–व्यवस्था, पालनपोषणादि
तन्त्रम्–सिद्धान्तः, नियमः
तन्त्रम्–शास्त्रम्
तन्द्रा–आलस्यम्
तन्द्रि –निद्रा
तपस्विनी–असहायिनी, मन्दभाग्या, तप कर्त्री
तपस्वी–एकाग्रचित्त
तपोविधि –तप करणम्
तमः–अन्धकार
तर –नौ

तरु.–वृक्ष
तर्कक –प्राश्निक
तर्पयन्–तोषयन्
तलम्–पृष्ठभाग , अधोभाग
तल्पम्–शय्या, दारा , पत्नी
तस्य स्पृहयन्ति–त लिप्सन्ते
तापस –तपस्वी
तापस्यम्–तपश्चर्या
तारका–नक्षत्रम्
तारा–नक्षत्रम्
तार्क्ष्य –गरुड
ताल –तालवृक्ष
तालवृन्तम्–व्यजनम्
तिग्मम्–तीक्ष्णम्
तितिक्षु –क्षमाशीलः
तिन्दुक –वृक्षविशेष
तिर्यग्योनि –पशुपक्षियोनिः
तिलसृष्टम्–तिलसयुक्त सृष्ट भक्षम्
तीव्रम्–दृढम्
तुण्डम्–मुखम्
तुरगः–अश्व.
तुरङ्ग –अश्व
तुरङ्गमः–अश्वः
तुला–५ गुञ्जा –माष.,
१६ माषा –कर्ष·, ४ कर्षाः–पलम् ,
१०० पलानि–तुला,२०तुला –भार ,
१० भारा –आचित. ( शकटवाह्य )
२००० पलानि–पुरुषभार·
८००० पलानि–उष्ट्रभारः
२०००० ,, – शकटभार·
२४००० ,, – गजभार·
तुला–मापनसाधनम्
तुलाधार –वणिक्
तुष –धान्यत्वक्
तुष्टि –सन्तोष , तृप्ति
तूणीर –इषुधि
तूर्णम्–सत्वरम्
तूर्यम्–वाद्यम्
तूष्णीम्–मौनम्
तृषा–पिपासा
तृष्णा–लोभ
तृष्णाक्षय –वैराग्यम्
तृष्णाविनयनम्–तृषामात्रहरम्
तेज –पराभिभवसामर्थ्यम् , पराक्रम
तैजसम्–तेजस इदम्
तैलिक –तैलिककर्मकर्ता
तोयम्–जलम्
तोष्टुम्–सन्तोष कर्तुम्
तौर्यत्रिकम्–वाद्यगीतनृत्यानि
त्याग.–दानम्
त्याग –सन्यास
त्यागी–सात्त्विक , सन्यासी
त्रयी–ऋग्यजु सामवेदा
त्रयी–कर्मकाण्ड
त्रयोदश –१३
त्रयोदश्याममावास्या–पक्षस्य त्रयोदशदिने आमावास्या

